श्रीधरस्वामिकृतभावार्थदीपिका।

ननु, त्वमोऽपि किमन्यो भगवत्समावर्णनमस्ति तथाऽऽह महं विवेति। भुवि प्रजार्थोऽद्भुतयं पुरुषमाराधयेत मनः पूजितवान् विवेति मूर्तीगृह भगवत्कृष्णमनुस्मरति ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी।

निमेर्जीवन्ततां जयन्तीनन्दनानां नवयोगीश्वराणाञ्च सम्वादेन प्रश्नोत्तररूपेण पुनः पुनरित्यस्य प्रख्यापितोऽपीति व्यङ्ग्योऽर्थः अतएवेत्यर्थः इत्युक्तं प्रख्यापने च लोकवृत्तान्तजिज्ञासादिर्लीलैव कारणं कृष्णस्योपासने दर्शनादिना भजने यद्वा कृष्णस्य उपसमीपे आसने स्थितौ लालसा यस्य सः तथा ॥ १ ॥

तद्भजने यस्य चरणाम्बुजस्य भजने सेवने तद्धरणारविन्दम् इन्द्रियवत्त्वमात्रमपेक्षते वर्णाश्रमाद्यपेक्षापि निरस्ता अधिकारिविशेषणमिति यथा "स्वाराज्यकामो राजा राजसूयेन यजेत"इत्यत्र स्वाराज्यकामस्य राज्ञ एव राजसूयेऽधिकारो नान्यस्य तथा इन्द्रियवतः सर्वस्यापि तद्भजनेऽधिकार इत्यर्थः। तदुक्तं पाद्मे माघमाहात्म्ये "सर्वेऽधिकारिणो ह्यत्र हरिभक्तौ यथा नृप" इति। भागवते च "सर्वेषां मदुपासनम्" इति अतएव वासुदेवादिभिरपि तदेवं निर्णीयमुमुक्षुमुक्तानामपि तद्भजनीयमिति स्थिते महाराजो नारदो वा कथं तत्र सेवेतेति भावः ॥ २ ॥

अभिवाद्य नमस्कृत्य ॥ ३ ॥

कृपणानां सर्वसाधनहीनानां भगवद्रूपस्य भगवदाविशात्मनावस्य देवर्षित्वमुपेत्य स इति अवतारमध्ये तत्परिग्रहादेवञ्च यथा महतामित्युपमानोपमेययोर्माधुर्यमिति ज्ञेयम् ॥ ४ ॥

उपमानं साहश्यम् ॥ ५ ॥

साधवस्तु कर्मानुगता न भवन्ति प्रत्युत दीनेषु तद्दीनत्वेन वत्सला दयालवः ॥ ६ ॥

तदेव साधूनां दीनवत्सलत्वाभिधानकारणं तथापीति यत्नादेव यद्यपीत्याद्यध्याहृतं तव सम्बन्धिनो धर्मानुसरणविधस्त्वञ्च भगवत्प्रसादजनकत्वेनेत्यभिप्राय तव वैष्णवीरित्यादिव्याख्यातमिति प्रतिपत्तिगौरवादित्यर्थः इत्युक्तम्। ननु कृतार्थस्य तव मत्संप्रश्नेन किं प्रयोजनमित्याशङ्कायामाह—यानीति। मत्प्रसङ्गेन श्रुत्वा मत्तोऽपि ॥ ७ ॥

न मोचयेति ब्रह्मशापभयेन श्रीकृष्णवियोगभ्रमव्यग्रतया निर्वेदोक्तिः भगवदुक्तमिति "न यस्यापवर्गो मे मोहितो मम मायया" इति ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

॥ १ ॥

इन्द्रियवान् चक्षुष्मान् ॥ २—३ ॥

उत्तमश्लोकचरणाः भगवच्छरीरभूतस्य तवागमनं पित्रोरागमनमिव कृपणानां देहिनां स्वस्तये भवति ॥ ४—५ ॥

कायेनेत्युपकारकत्वात्संभवणीयत्वं विवक्षितम् ॥ ६—८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

शापमन्यथाकर्तुं समर्थोऽपीत्युक्तं किं कश्चिदन्यथाकरणं प्रसिद्धमित्यपेक्षायां तद्दर्शयंस्तत्प्रसङ्गादितिहासान्तरं प्रस्तोतुमाह, गोविन्देत्यादिना—हे कुरूद्वह ! अभीक्ष्णं प्रख्यापितोऽपि नारदः पुनः पुनः द्वारकायामवात्सीदुषितवान्। ननु, नारदस्य दक्षशापादेकत्र वासस्सम्भव इत्याशङ्कामपनुदन् द्वारकां विशिनष्टि—गोविन्दभुजगुप्तायामिति। न तस्यां शापादेः प्रभाव इति भावः। किमर्थमवात्सीदित्यत्र नारदं विशिनष्टि—कृष्णोपासनलालस इति। कृष्णोपासनायां लालसा औत्सुक्यं यस्य सः ॥ १ ॥

ननु, नित्यं ज्ञानाधिकस्य देवर्षेः कृष्णोपासनायामौत्सुक्यं कथ(किमर्थ)मित्यत्राह—कोन्विति। हे राजन्! इन्द्रियवान् चक्षुष्मान् को वा पुमान् मुकुन्दस्य श्रीकृष्णस्य चरणाम्बुजं न सेवेत सेवमानो नार्थयेत ज्ञानविभागमन्तरेण सर्वोऽपीन्द्रियवान् सेवेतैवेत्यर्थः। तत्र हेतुत्वेन तत्पादाम्बुजं विशिनष्टि—सर्वतः अमृत्युम् इतिच्छेदः सर्वेष्वपि भजत्सु न विद्यते मृत्युर्यस्मात्सेव्यमानात्तथाभूतं सर्वेषामपि निवृत्तामयिनृणाञ्च मुकुन्दचरणाम्बुजसेवयैव संसृतिनिवृत्तिरित्यर्थः। अत एवामरोत्तमैर्ब्रह्मादिभिर्ब्रह्मरुद्रादिभिरुपास्यं सर्वतो मृत्युरिति पाठे सर्वेष्वपि लोकेषु मृत्युर्यस्य स चक्षुष्मान् कोवा न सेवेतेत्यर्थः ॥ २ ॥

ननु, परावरतत्त्ववेदी देवर्षेस्तत्रावस्थितावद्वयमध्यात्मवादः सम्भावि न तत्र संशयः किन्तु कोवा पृष्टेत्यत्राह तमेकदेति। गृहागतं स्वगृहं प्रत्यागतम् अभिवाद्य प्रणम्येदं वक्ष्यमाणम् अब्रवीत ॥ ३ ॥

तदेवाह—भगवन्नित्यादिभिः षड्भिः। किञ्च तत् पृष्टवानित्यत्र तद्वागमनमभिनन्दति—भगवन्निति। हे भगवन्! भवतो यात्रा सञ्चारः सर्वेषां देहिनां मादृशां स्वस्तये मङ्गलाय सुखायेति यावत्, तथा हि यथा पित्रोरागमनं पुत्राणां सुखायैव तथा उत्तमश्लोकवर्त्मभूतानां तत्स्वरूपस्वभावादिज्ञानद्वारभूतानां महात्मनां यात्रा कृपणानां तापत्रयपीडितानां स्वस्तय एव, उत्तमश्लोकचरणा इति पाठान्तरं तदा भगवच्छरीरभूतस्य भवतः आगमनं पित्रोरागमनमिव कृपणानां देहिनां स्वस्तय एव भवतीत्यर्थः ॥ ४ ॥

ननु, किं विशेषेण मादृशामेव यात्रा कृपणानां स्वस्तये इति ब्रूषे ? यतो देवादीनामपि यात्रादि कर्म लोकानां स्वस्तये भवतीत्यत आह—भूतानामिति। देवानां पर्जन्यादीनां चरितं भूतानां दुःखाय (सुखाय) च भवत्यतिवृष्ट्यादिना दुःखजननदर्शनादिति भावः। त्वादृशां त्वद्विधानां साधूनान्तु चरितं सुखायैव तत्र हेतुत्वेन विशिनष्टि— अच्युतात्मनामिति। अच्युते आत्मा मनो येषां तेषां नित्यमच्युतैकान्तत्वादितरलोकानामपोह्याच्युतवार्त्तया तापत्रयनिरसनशीलत्वात्सुखायैवेति भावः ॥ ५ ॥

किञ्च, सुखं कुर्वन्तोऽपि देवा भजनानुसारेण कुर्वन्ति साधवस्तु न तथेत्याह—भजन्तीति। ये देवान् यथा भजन्ति

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तान् देवा अपि तथैव भजन्ति भजनानुगुणमेव सुखं यच्छन्ति ननु, निरवधिकमित्यर्थः । कुतः ? यतः छायेव कर्मसचिवाः कर्मसहायास्ते यथा छायावृद्धिह्रासवती (स्वयं) वर्धते ह्रसते च तद्वद्देवा अपि स्वसेवा(कर्म)तारतम्यरूपं कर्मैव तरतमफलभावेन सहायो येषां तथाभूता इत्यर्थः । साधवस्त्वा-दृशास्तु दीनवत्सला दीनेषु तापत्रयाभिभूतेषु वत्सलाः निरपेक्षदुःखनिराचिकीर्षवः । यद्वा, छायेव परोपकाररूपकर्मसचिवाः अतः सभाजनीयाः साधव इत्यर्थः ॥ ६ ॥

ब्रह्मन्निति । तदेवं यद्यपि तवागममात्रेण वयं कृतार्थास्तथापि पृच्छामः, किं तत् ? भागवतान् धर्मान् तव यदि मे भगवान् प्रसन्नः तानित्यर्थः । किञ्च, यान् धर्मान् श्रुत्वा सर्वतः सर्वस्माद्भवात् संसृतिभयान्मुच्यते ॥ ७ ॥

ननु, पुत्रीकृतपरमपुरुषस्त्वमितर इव किं निर्विद्यसे इत्यत आह—अहमिति । मुक्तिप्रदमप्यनन्तं केवलं पुत्रकामोऽहमपूजयमाराधितवानस्मि न तु मोक्षायापूजयम् तत्र हेतुस्तेनात्मानं विशिनष्टि, देवस्य भगवतो मायया मोहितः (प्रतारितः) किञ्चिति सूतिकागृहं भगवद्युक्तिमनुस्मरति ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

अतः कतिपयैरध्यायैर्वसुदेवनारदसंवादच्छलेन हरेस्तत्त्वं तदवाप्तिसाधनं तदधिकारिसद्गुणाद्यत्यादि निरूपयति; तत्र याद्दृच्छिकस्य नारदस्यान्तःपुरवासिना वसुदेवेन सह सङ्गमः कथं सञ्जाघटीतीति शङ्कां परिहर्तुमाह—गोविन्देति । तत्रवासिनो नारदस्य जनसङ्कुलपुरनिवासहेतुः कृष्णेति ॥ १ ॥

श्रोत्रादीन्द्रियशक्तिमतः पुंसोऽपि हरिभवणादिभक्त्यतिशयो जायते किं पुनः सम्यक् विज्ञाततत्त्वस्य नारदस्येति भावेनाह, को न्विति । सर्वतो मृत्युः गन्ता यस्य स तथा ॥ २ ॥

अस्तूक्तं प्रकृते किमत्राह—तमर्चयित्वेति ॥ ३ ॥

स्तुत्या सन्तोषोद्रेकात् श्रोतव्यार्थकथने बुद्ध्युल्लासो भवतीत्याशयेन नारदं स्तौति—भगवन्नित्यादिना । स्वस्तये इति चिराये-त्यादिप्रयोगवत् । यात्रा सञ्चरणं पित्रोर्यात्रा शिशूनाम उत्तमश्लोकः हरिः सः एव वर्त्म यस्य स तथा । यद्वा, उत्तमो हरिस्तस्य श्लोक इव श्लोको येषां ते तथा महान्तस्तेषां वर्त्म यस्य स तथा महत्स्मार्गानुवर्तीत्यर्थः । तस्य ॥ ४ ॥

ननु, सर्वभूतसुहृत्त्वे सात्त्विकत्वं प्रयोजकं तद्देवानामप्यस्त्यतः किं विशेषतः स्तूयत इति तत्राह—भूतानामिति । भूतानि त्रिविधानि सात्त्विकराजसतामसभिन्नानीति; तत्र देवानां चरितं सात्त्विकभूतानां सुखायैव आत्मभजने बुद्धिमुत्पाद्य सुखलक्षणफलदानं तामसानां दुःखाय तद्विपर्ययबुद्धिमुत्पाद्य दुःखलक्षणफलदानं राजसानां सुखदुःखलक्षणमिश्रफलाय मिश्रकर्मबुद्धिमुत्पाद्य सुखादिमिश्रफलदानम् इदञ्च शब्दगृहीतं द्वितीयचशब्दः समुच्चयार्थः भवादृशानां चरितं न तथेत्याह—सुखायेति । एवशब्देन दुःख व्यावर्तयति, अच्युतात्मनामित्यनेन व्यापारान्तरं निवारयति, हिशब्देन तेषां तदस्तीति सूचयति ॥ ५ ॥

देवानामात्मभजने बुद्धिमुत्पाद्यानुत्पाद्य च सुखादिफलदातृत्वमस्तीत्युक्तं तत्स्पष्टयति—भजन्तीति । ये पुरुषाः यथा येन प्रकारेण देवान् भजन्ति ते देवा अपि तथा कृतकर्मानुसारेण तान् पुरुषान् भजन्ति फलदानेन सम्बद्धा भवन्ति, न च देवेषु वैषम्यादिकमाशङ्कनीयमित्येतन्निदर्शनेन दर्शयति—छायेति । कर्मसचिवाः छायावत् पुरुषकृतकर्माधीना छाया यथा पुरुषानुकृता तथेत्यर्थः । भवादृशा न तथेत्याह, साधव इति—

आत्मनो भजने बुद्धिमुत्पाद्य फलदाः सुराः ।
उत्तमानां जनानाञ्च निकृष्टानां विपर्ययः ॥
शुभाशुभफलानान्तु कर्मणां विबुधाः सदा ।
प्रवर्तका यथायोग्यमृषयः करुणां सदा ॥
सुखमिच्छन्ति भूतानां प्रायो दुःखासहा नृणाम् ।
तथापि तेभ्यः प्रवरा देवा एव हरेः प्रियाः ॥

इत्येतदस्मिन्नर्थे प्रमाणम् ॥ ६ ॥

ननु, साधुभ्यो देवानामुत्तमत्वे अभीष्टार्थप्रश्नस्तान् प्रति स्यात्तथापि प्रश्नपरिहारवक्तृत्वसामर्थ्यादिति तत्राह—ब्रह्मन्निति । यद्यपि देवाः प्रशस्ता निश्चिताश्चतथापि मानुषत्वेनास्मद्दृष्टिगोचरत्वाद्युष्माकं तत्त्वज्ञानार्थज्ञानसामर्थ्यात्सर्वज्ञत्वात्पात्रत्वाच्च वयं तु तत्र त्वां धर्मान् पृच्छाम इत्यन्वयः । ननु, किमहिंसालक्षणो धर्म उत न्यायाचारान्यतम इत्यत्राह—भागवतानिति । भवदुपदेशयत्वं तद्गुणमाह—यानिति । अनेन यद्धर्मश्रवणमपि सर्वभयमोचकं किमुत तदनुष्ठानमिति दर्शितम् ॥ ७ ॥

भवता भगवद्विषयधर्माचरणं कृतं किमधुना तद्विषयप्रश्न इति तत्राह—अहमिति ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ तदानन्तर्यप्राप्तं श्रीवसुदेवनारदसंवादं वक्तुं श्रीभगवदिच्छया तादृशानर्थसहकारित्वेऽपि श्रीनारदस्य द्वारकायामेव वासमासीदिति सहेतुकमाह—गोविन्देति । अर्भाध्यां लोकवृत्तान्तजिज्ञासादिलीलया श्रीभगवता मुहुस्तत्र प्रस्थापितोऽपि पुनः पुनरवात्सीदित्यर्थः । कृष्णस्य उप समीपे आसने स्थितौ लालसा यस्य तादृशः तद्भजगुप्तावपीति व्यावसीयमपि दर्शितम् ॥ १ ॥

अत्र तस्य भावे कैमुत्यं कोऽन्वेति । अन्योऽपि कः इन्द्रियवानिन्द्रियवत्सु तद्गुणादिष्वपि तद्भजनसौख्यं भजेतेति स्वभावत एव तद्योग्यं सर्वेषामित्यर्थः । विचारतः सर्वतो मृत्युरिति नचैवं साधारणजनानामेव तद्भजनीयमित्यायातम् अपि तु मुक्तानामपीत्याह—उपास्यमिति । तदेवं विषयिमुमुक्षुमुक्तानामपि तद्भजनीयमिति स्थिते महाभक्तराजः श्रीनारदो वा कथं न भजेदिति भावः ॥ २—३ ॥

सर्वदेहिनां साधारणानां कृपणानाम सर्वोत्कृष्टानाम उत्तमश्लोकवर्गाणां सर्वोत्कृष्टानामपि स्वस्तये भवतो यात्रा भवति यथा पित्रोरागमनं त्रिविधानामपि पुत्राणां स्वस्तये भवेदिति ॥ ४ ॥

तथैवाह—भूतानामिति ॥ ५ ॥

कर्म चात्र भगवद्भजनमेव साधवस्तु न कर्मानुगताः प्रत्युत स्वानन्देन तत्स्वरूपेव दयालव इत्याह, साधव इति ॥ ६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु, कृतार्थस्य तव तत्पृच्छायां नास्ति प्रयोजनमित्याशङ्क्याह-प्रायेणेति । मत्प्रसङ्गेन श्रुत्वा मर्त्योऽपि ॥ ७ ॥

अथ ब्रह्मशापभयेन श्रीकृष्णास्मरणाय भ्रमः व्यग्रः स्वप्रयोजनमपि निवेदयति-अहमिति द्वाभ्याम् । देवस्य भगवतो मायया कृपया मोहितस्तन्माधुरीवशीभूतो मोक्षायापि नापूजयं किमु तान्यस्मै किन्तु प्रजार्थं तद्रूपपुत्रप्राप्त्यर्थ एव ॥ ८ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

द्वितीये वसुदेवेन पृष्टोऽभून्नारदो निमेः ।
प्रश्ने कविहरी धर्मान् वैष्णवान् प्रोचतुः क्रमात् ॥

अभीक्ष्णमवात्सीदिति कृष्णप्रभावादेव न तत्र ब्रह्मशापः प्राभवतीति भावः ॥ १ ॥

यद्भजने मुक्तानामपीदृशौत्सुक्यं तं मुकुन्दं खलु को नु न भजेदित्याह-कोन्विति । इन्द्रियवानिति श्रोत्रादीन्द्रियवतस्त्व एव तद्भजनेऽधिकार इति भावः । न केवलमीशिकृत्वा जीवा एव न भजन्ति किन्त्वमरोत्तमैः रुद्राद्यैरपि ॥ २—३ ॥

सर्वदेहिनां साधारणानां कृपणानां सर्वनिकृष्टानाम् उत्तमश्लोकवर्त्मनां सर्वोत्कृष्टानां भक्तानामपि स्वस्त्यय भवतो यात्रा आगमनं भवति यथा पित्रोर्यात्रा त्रिविधानामपि पुत्राणामिति सर्वभूतवात्सल्यं नारदस्य दर्शितम् ॥ ४ ॥

देवैरपि साधूनामुपमानमनुचितमित्याह—भूतानामिति । देवचरितमनुवृत्त्याविना दुःखायापि भवति ॥ ५ ॥

किञ्च, देवाः स्वार्थपरतयैव सुखयन्ति साधवस्तु न तथेत्याह-भजन्तीति । छाययेति यथा पुरुषो यद्यत्करोति छायापि तस्य तथा, कर्मसचिवाः कर्मसहायाः ॥ ६ ॥

तथापीति यद्यपि तव दर्शनमात्रेणैव कृतार्था अभूमैव तवापीत्यर्थः । यान् श्रुत्वेति त्वद्दर्शनसम्भावनारहितोऽपि मर्त्यो यान् श्रुत्वापि किमुताचरन् ॥ ७ ॥

ननु, त्वं तु कृतार्थ एवासि तत्राह-अहं किलेति । प्रजार्थ एव न तु मुक्त्यर्थः ॥ ८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मुमुक्षुजनोपकाराय भगवत्प्राप्त्युपायतद्भक्तलक्षणतद्गुणस्वरूपादिकञ्च वसुदेवनारदसम्वादेन चतुर्ध्याऽऽध्या दर्शयति- तत्र तावत्पूर्वाध्यायान्ते यदुक्तम् "भगवान् ज्ञातसर्वार्थ ईश्वरोऽपि तदन्यथा । कर्तुं नैच्छद्विप्रशापम्" इति तद्ब्रह्मविशापनैपुण्यसूचनं द्रढयति-गोविन्देति । यद्यपि ब्रह्मविशापाधिकारस्य नैकत्र वासस्तथापि नारदः अभीक्ष्णं गोविन्दभुजगुप्तायामवात्सीत गोविन्दभुजगुप्तार्थं तस्या शापादेः प्रवृत्तिर्नास्तीति भावः । नारदस्य तत्र वासे हेतुमाह-कृष्णोपासनलालस इति । कृष्णोपासने लालसा प्रीत्यतिशयो यस्य सः ॥ १ ॥

यद्भजनं भगवदवताराणां नारदादीनामपि लालसा तच्चरणं को नाम न भजेदित्याह-क इति । अमरा देवास्तदुत्तमाः ब्रह्मशिवनारदादयः तैरपि मुकुन्दस्य मुक्तिदस्य चरणाम्बुजमुपास्यं सर्वतो मृत्युर्यस्य स इन्द्रियवान् इन्द्रियोपलक्षितज्ञानवान् को नु न भजेत् अपि तु (सर्वोऽपि) भजेदेवेत्यर्थः ॥ २ ॥

तं प्रीत्यतिशयेन कृष्णोपासनार्थं द्वारवत्यां निवसन्तम् एकदा तु गृहागतं तत्रार्चितं तदनन्तरं सुखमासीनं प्रश्नार्थं पुनरभिवाद्येदं वक्ष्यमाणमब्रवीत् ॥ ३ ॥

हे भगवन् ! पित्रोः जननिजनकयोः यात्रा आगमनं यथा अपत्यानां स्वस्त्यय मङ्गलाय भवति तथा भवतः सत्यन्तिना भगवदुपदिष्टानामुत्तमश्लोकवर्त्मनाम् उत्तमकीर्तेर्हरेः वर्त्मभूतानां तत्प्रापकानाम् उत्तमश्लोको हरिर्वा उत्तमाः श्लोकाः प्रतिपादकाः यस्य भक्तियोगस्य स वा वर्त्म येषां तेषां यात्रा सर्वदेहिनां अधमानां स्थिरचरदेहवतां तथापि कृपणानां स्वस्त्यय भवति किमुत भवद्यात्रा तेषां स्वस्त्यय भवतीति वक्तव्यम् ॥ ४ ॥

यद्यपि महतां स्वार्थनैरपेक्ष्यणागमनं पित्रोस्तु न तथातोऽनुपमं महदागमनं तथापि स्वाभिजनकत्वसादृश्यात्सोपमं तदुक्तमधुना तु महच्चेष्टितस्य देवचेष्टितमप्युपमानं नास्तीत्याह, भूतानामिति । त्रिगुणकर्मभेदात् त्रिविधानां भूतानां सुखाय दुःखाय चशब्दात्तदुभयाभिभावाय देवानां चरितं चेष्टितं भवति देवानां तत्तत्कर्मसापेक्षत्वात् साधूनाम् आगमन हितोपदेशादि चरितं तु सर्वेषां भूतानां सुखायैव तत्र हेतुगर्भं विशेषणम् अच्युतात्मनामिति अच्युते हरौ आत्मा बुद्धिर्येषां तेषाम् ॥ ५ ॥

एतदेव विवृणोति-भजन्तीति । ये यथा येन सात्त्विकेन राजसेन तामसेन वा प्रकारेण देवान् भजन्ति तान् फलदानकाले देवा अपि तथैव भजन्ति तत्र हेतुगर्भं विशेषणं कर्मसचिवा इति तत्तत्कर्मसापेक्षा इत्यर्थः । तत्र दृष्टान्तमाह, छायेव छाया यथा स्वाश्रयापेक्षा तद्वत् साधवस्तु दीनवत्सलाः दीनाऽनुकम्पिनः तत्तद्धर्मानुसारेण निग्रहानुग्रहपरा इत्यर्थः ॥ ६ ॥

एवं हि सर्वेषां ... ऽऽगमनमात्रेणास्मदादिकृतार्थतासिद्धौ धर्मप्रश्नापेक्षा नास्ति ... पुनस्तस्य भवत एतागमनमात्रेण कृतार्थतासिद्धौ धर्मप्रश्नापेक्षा नास्तीति वक्तव्यं तथापि हे ब्रह्मन् ! तव त्वां भागवतान् भगवद्धर्मान् प्रक्ष्यामः मर्त्यः जन्ममरणप्रवाहपतितः यान् धर्मान् श्रुत्वैव सर्वतो भयम् यस्मिन् तस्मात्संसाराज्जन्ममरणप्रवाहात् मुच्यते मुक्तो भवति किमुत तेषां धर्माणामनुष्ठाने मुच्यते इति वक्तव्यम् ॥ ७ ॥

ननु, भवता भागवता धर्माः अनुष्ठिता एव यतो भवत्पुत्रत्वेन भगवान् तव गृहेऽवतीर्णोऽतः किमर्थो धर्मप्रश्न इत्यत्राह-अहमिति द्वयेन । अहं भुवि प्रजार्थः पुत्रप्रयोजनः सन् अनन्त त्रिविधपरिच्छेदशून्यं भगवन्तम् अपूजयम् पूजितवान् न तु मोक्षाय निःशेषकार्यकारणरूपप्रकृतिसम्बन्धराहित्यपूर्वक भगवत्प्राप्तये तत्र हेतुमाह-मोहित इति देवमायया । देवस्य भगवत मायया सङ्कल्परूपया मां पुत्रभावेन भजतोऽस्य मुक्तिरनायासेनैव प्रजार्थो मां तावद्भजतु न मुक्तिकामनया इत्येवंभूतया मोहित मुक्त्युपायावाञ्छित. ॥ ८ ॥

———

यथा विचित्रव्यसनाद्भवद्भिर्विश्वतो भयात् ।
मुच्येमह्यञ्जसैवाद्धा तथा नः शाधि सुव्रत ! ॥ ९ ॥

श्रीशुक उवाच ।

राजन्नेवं कृतप्रश्नो वसुदेवेन धीमता ।
प्रीतस्तमाह देवर्षिर्हरेः संस्मारितो गुणैः ॥ १० ॥

नारद उवाच ।

सम्यगेतद्व्यवसितं भवता सात्वतर्षभ! ।
यत्पृच्छसे भागवतान् धर्मांस्त्वं विश्वभावनान् ॥ ११ ॥
श्रुतोऽनुपठितो ध्यात आदृतो वाऽनुमोदितः ।
सद्यः पुनाति सद्धर्मो देवविश्वद्रुहोऽपि हि ॥ १२ ॥
त्वया परमकल्याणः पुण्यश्रवणकीर्तनः ।
स्मारितो भगवानद्य देवो नारायणो मम ॥ १३ ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
आर्षभाणां च सम्वादं विदेहस्य महात्मनः ॥ १४ ॥
प्रियव्रतो नाम सुतो मनोः स्वायम्भुवस्य यः ।
तस्याग्नीध्रस्ततो नाभिर्ऋषभस्तत्सुतः स्मृतः ॥ १५ ॥

भाषा टीका ।

श्रीभागवतधर्मेभ्यो नमः ।

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—हे कुरूद्वह, हे राजन् ! श्रीकृष्ण की भुजाओं से रक्षित श्रीद्वारका पुरी में श्रीकृष्ण की उपासना की लालसा से नारदजी निरन्तर वास करते हुए ॥ १ ॥

हे राजन्, सर्व लोकों में मृत्यु जिसके पीछे लगी है फिर ऐसा पुरुष कौन है, कि—जो इन्द्रियों को प्राप्त होकर ब्रह्मरुद्रादि देवताओं से उपास्य ऐसे मुकुन्द के चरणारविन्द का न भजन करै ॥ २ ॥

एक समय अपने महलों में आये हुए नारदजी का वसुदेवजी ने पूजन किया, और आसन पर बैठाये, और नारदजी को वन्दना कर वसुदेवजी इस प्रकार बोलते हुए ॥ ३ ॥

वसुदेव उवाच ॥

वसुदेवजी बोले, कि—हे भगवन् ! जैसे माता पिता का आगमन अपनी संतान के मंगल के लिये होता है, और जैसे, परमेश्वर के मार्ग रूप महान् लोगों का आगमन बिचारे कृपणों के मंगल के लिये होता है। इसी प्रकार यह आपका शुभागमन सर्व प्राणियों के मंगलार्थ है ॥ ४ ॥

देवताओं का चरित प्राणियों को सुख देने वाला है और दुःखदेने वाला भी है, परन्तु आप सदृश अच्युत में चित्त लगाने वाले साधुओं का चरित तो सदा सुख ही के देने वाला है ॥ ५ ॥

जो लोग देवताओं को जिस प्रकार भजते हैं, वे देवलोग भी उनको उसी प्रकार भजते हैं । जैसे, कि पुरुष जितनी चेष्टा करता है छाया भी उतनी ही चेष्टा करती है इसी प्रकार पुरुष जितना कर्म करता है, देवता भी उतनीही सहाय करते हैं। ऐसे साधु लोग नहीं होते हैं, किन्तु वे लोग तो बिना उपकार भी दीन मात्र को देखकर दया करते हैं ॥ ६ ॥

हे भगवन् ! इस रीति से हम तो आपके आगमन मात्र से ही कृतार्थ हुए, तो भी हे ब्रह्मन् ! मैं आप से भागवत धर्मों को पूछता हूं कि—जिनके सुनने मात्र से ही पुरुष सर्व भय से छूटजाता है ॥ ७ ॥

हे श्रीनारदजी ! मैंने तो पूर्व जन्म में इस पृथिवी पर मुक्ति देने वाले श्रीअनन्त भगवान् का संतान केही अर्थ पूजा, मोक्ष के लिये नहीं, क्योंकि ? मैं देवमाया से मोहित होगया ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अतो यथा मुच्येमहि तथा नोऽस्मान् शाधि । विस्रय विचित्राणि व्यसनानि यस्मिन् संसारे तस्मात् संसारात् तथा विश्वतः सर्वतो भये यस्मिंस्तस्मात् भवद्भिर्हेतुभूतैः अञ्जसाऽनायासेन अद्धा साक्षात् ॥ ९ ॥

**तमाहुर्वासुदेवांशं मोक्षधर्मविवक्षया ।**
**अवतीर्णं सुतशतं तस्याऽऽसीद्ब्रह्मपारगम् ॥ १६ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हरेर्गुणैर्वर्णनीयत्वेन प्रस्तुतैर्हरिः संस्मारित इत्यर्थः ॥ १० ॥

प्रीतिमाविष्करोति—सत्यगिति त्रिभिः । पृच्छसे पृच्छसि विश्वभावनान् सर्वशोधकान् ॥ ११ ॥

आहतः आस्तिक्येन गृहीतः अनुमोदितः परैः क्रियमाणाः संस्तुतः सद्धर्मो भागवतो धर्मः देव ! हे वसुदेवेत्यर्थः । यद्वा, देवेभ्यो विश्वस्मै च द्रुह्यन्ति ये तानपि ॥ १२ ॥

किञ्च, त्वया महानुपकारः कृत इत्याह—त्वयेति । पुण्ये श्रवणकीर्तने यस्य सः ॥ १३ ॥

अत्रापि भागवतधर्मनिर्णयेऽपि विदेहस्य जनकस्य ॥ १४ ॥

आर्षभाणामुत्पत्तिं सान्वयां विविच्य कथयति, प्रियव्रत इति सप्तभिः ॥ १५ ॥

मोक्षधर्मविवक्षया मोक्षधर्माणां प्रवर्तनेच्छया अवतीर्णं वासुदेवांशमाहुः तस्य च वेदपारगं सुतशतमासीत् ॥ १६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

यतोऽहं मोक्षाय नापूजयमतः तस्मात् संसारात् साक्षात् "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति श्रुतेः विदेहमुक्तिं प्राप्तुम् इत्यर्थः ॥ ९ ॥

वर्णनीयत्वेन वक्तव्यत्वेन प्रस्तुतैः प्रकरणप्राप्तैर्गुणैः कर्तृभिः हरिं प्रति संस्मारितः ॥ १० ॥

प्रीतिमनुमोदनात्मकप्रसादं भागवतान् धर्मान् पृच्छसे इति यत् एतद्गतता सम्यक् व्यवसितं निश्चितमित्यन्वयः ॥ ११ ॥

पूर्वार्थे नामैकदेशस्य नामादिशब्दवत् नाम्नि लक्षणेत्यरुचौ यद्वेति विश्वस्मै सर्वस्मै जीवमात्रायेत्यर्थः ॥ १२ ॥

नारायणो भागवतधर्मोपदेशे मम गुरुर्बदरीपतिर्नारायणर्षिः मां प्रति स्मारितः यतः कृष्णोपासनावेशेन तस्यापि विस्मृतिर्जाता ॥ १३ ॥

संवादं सम्वादरूपमितिहासम् ॥ १४ ॥

सान्वया सवंशा सुतान्वय इति च पाठद्वयं तस्य प्रियव्रतस्य ॥ १५ ॥

तम् ऋषभं तस्य ऋषभस्य ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अञ्जसा सुखेन तथा नः मद्या शाधि अञ्जसा शाधि ॥ ९—११ ॥

देवविश्वद्रुहोऽपि ॥ १२—१८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतो यथा विचित्राणि व्यसनानि दुःखानि यस्मिंस्तस्मात् सर्वतो भयावहात्संसारार्णवात् अञ्जसा सुखेनाद्धा स्फुटम् मुच्येय मुक्तो भवेयं ( मुच्येय मुक्तो भवेयम् ) तथा हे सुव्रत ! नाऽस्मांश्छन्धि शाधि ॥ ९ ॥

राजन्निति । हे राजन्नेवं श्रीमता वसुदेवेन कृतः प्रश्नो यस्य स देवर्षिः हरेर्गुणैर्वर्णनीयैः संस्मारितः " ययस्तास्मरतेः कर्माणि कः " तत एव प्रीतस्तं वसुदेवमाह ॥ १० ॥

तावत्प्रश्नमभिनन्दति— सम्यगित्यादिभिः त्रिभिः । हे सात्वतर्षभ ! तवैतत्सम्यग्व्यवसितं निश्चितं परमार्थविषयनिश्चयात्मकबुद्धिमांस्त्वमित्यर्थः । कुतः ? यद्यस्माद्भागवतान् धर्मान् पृच्छसे भागवतधर्मप्रश्नेन लिङ्गेन त्वां परमार्थविदमनुमनोमीति भावः तत्र हेतुत्वेन तान्विशिनष्टि—विश्वभावनान् जगदभ्युदयकरान् ॥ ११ ॥

किञ्च, श्रवणादिविषयः सन् सद्धर्मो भागवतधर्मः हे देव विश्वद्रुहः विश्वेभ्यो भूतेभ्यो द्रुह्यन्तीति तथा तानपि सद्य एव पुनाति ॥ १२ ॥

किञ्च, महानुपकारस्त्वया कृत इत्याह—त्वयेति । पुण्यावह श्रवणं कीर्तनं च यस्य सः परमकल्याणः निःशेषमङ्गलदेवो भगवान्नारायणोऽधुना मम स्मारितः ॥ १३ ॥

इत्थं प्रश्नमभिनन्द्य तस्य विदेहार्षभसंवादात्मकम् उत्तरं वक्ष्यन् प्रस्तौति—अत्रापीति । अत्रापि त्वत्प्रश्ने महात्मनो विदेहस्य जनकस्यार्षभाणां च संवादं तद्रूपम् इतिहासम् वदाहरन्त्युत्तरत्वेन उदाहरन्ति (वदन्ति) त्वत्प्रश्नस्य विदेहप्रश्नतुल्यत्वात्तत्र यदुत्तरं तदेव त्वत्प्रश्नेऽप्युत्तरम् इत्यभिप्रायेणोदाहरन्तीत्युक्तम् ॥ १४ ॥

के त आर्षभाः ? इत्यत्रान्वयकथनेन तान् दर्शयति—प्रियव्रत इति सप्तभिः । स्वायम्भुवस्य स्वयम्भुवो ब्रह्मणः पुत्रस्य मनोः यः सुतः प्रियव्रतो नामासीत्तस्याग्नीध्रः सुत इति सम्बन्धः ॥ १५ ॥

तमृषभं मोक्षधर्मान् वक्तुमिच्छयाऽवतीर्णं वासुदेवांशमाहुः तस्यर्षभस्य सुतशतमासीत् कथम्भूतं ब्रह्मपारगं ब्रह्मशब्दस्तन्त्रेण वेदपरः परब्रह्मपरश्च पारशब्दस्तु यथावस्थितस्वरूपपरः उभयोरप्यानन्त्यात्तत्र केचिद्वेदपारगाः केचिद्भगवत्पारगाश्चेति ज्ञेयम् ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नष्टपुत्रस्य जीवत्पुत्रमुखदर्शनाल्लोकावाप्तिः श्रूयते अतः कथं प्रजार्थं इति निन्दाध्वनिरिति तत्राह—यथेति । अस्मिन् भवे जन्मनि विचित्रव्यसनात् नानाक्लेशात् विश्वतो भयावहात् यथाऽञ्जसा क्षिप्रं मुच्येमहि तथा पुनरद्धा प्रत्यक्षं शाधीत्यन्वयः " अद्धा प्रत्यक्षतत्त्वयोः " इति यादवः । अनेन वसुदेवस्य पुत्रीभूतश्रीकृष्णमुखेन्दुदर्शनादशेषव्यसनाकुलसंसारान्मुक्तिर्निश्च-

तेषां वै भरतो ज्येष्ठो नारायणपरायणः ।
विख्यातं वर्षमेतद्यन्नाम्ना भारतमद्भुतम् ॥ १७ ॥
स भुक्तभोगां त्यक्त्वेमां निर्गतस्तपसा हरिम् ।
उपासीनस्तत्पदवीं लेभे वै जन्मभिस्त्रिभिः ॥ १८ ॥
तेषां नव नवद्वीपपतयोऽस्य समन्ततः ।
कर्मतन्त्रप्रणेतार एकाशीतिर्द्विजातयः ॥ १९ ॥
नवाऽभवन् महाभागा मुनयो(१) ह्यर्थशंसिनः ।
श्रमणा वातरशना आत्मविद्याविशारदाः ॥ २० ॥
कविर्हरिरन्तरिक्षः प्रबुद्धः पिप्पलायनः ।
आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः ॥ २१ ॥
त एते भगवद्रूपं विश्वं सदसदात्मकम् ।
आत्मनोऽव्यतिरेकेण पश्यन्तो व्यचरन् महीम् ॥ २२ ॥
अव्याहतेष्टगतयः सुरसिद्धसाध्यगन्धर्वयक्षनरकिन्नरनागलोकान् ।
मुक्ताश्चरन्ति मुनिचारणभूतनाथविद्याधरद्विजगवां भुवनानि कामम् ॥ २३ ॥
त एकदा निमेः सत्रमुपजग्मुर्यदृच्छया ।
वितायमानमृषिभि(२)रजनाभे महात्मनः ॥ २४ ॥

भाषा टीका।

श्रीशुक उवाच।

श्रीशुकदेवजी बोले, कि—हे राजन्! बड़े बुद्धिशाली वसुदेवजी ने जब ऐसा प्रश्न किया, तब देवर्षि श्रीनारदजी को श्रीहरि के गुणों का स्मरण हो आया, और नारदजी प्रसन्न होकर वसुदेवजी से कहने लगे ॥ १० ॥

नारद उवाच।

श्रीनारदजी बोले, कि—हे यदुश्रेष्ठ! हे वसुदेवजी! यह तुमने बहुत ही अच्छा विचार किया, कि—जो विश्व को पवित्र करने वाले भागवत धर्मों का प्रश्न किया ॥ ११ ॥

हे वसुदेवजी! यह सद्धर्म अर्थात् भागवत धर्म कैसा है, कि—इसका श्रवण किया हो, पठन किया हो, ध्यान किया हो, आदर किया हो, अथवा अनुमोदन किया हो, आचरण करे तब तो कहना ही क्या है, परंच श्रवणादि से भी यह भागवत धर्म विश्व के द्रोह करने वालों को भी तत्काल पवित्र करता है ॥ १२ ॥

हे वसुदेवजी! तुम धन्य हो, तुमने भागवत धर्मों के प्रश्न करने से, पवित्र करने वाला श्रवण कीर्त्तन जिनका ऐसे परमकल्याण रूप भगवान् जो श्रीनारायण देव हैं, तिनका मुझको स्मरण करा दिया ॥ १३ ॥

इस भागवत धर्म के विषय में भी लोग इस प्राचीन इतिहास का उदाहरण देते हैं। इस इतिहास में श्रीऋषभदेव के पुत्र नव योगेश्वर और महात्मा श्रीविदेहराज राजा निमि का संवाद है ॥ १४ ॥

स्वायंभुव मनु के जो प्रियव्रत पुत्र हुए, तिनके आग्नीध्र हुए, तिन से नाभि महाराज, तिन नाभि महाराज के पुत्र श्रीऋषभ देवजी हुए हैं ॥ १५ ॥

उनको मोक्ष धर्म के प्रवर्त्तन करने की इच्छा से अवतार लेने वाले श्रीवासुदेव भगवान् के अंश रूप कहते हैं। उनके सौ १०० पुत्र वेद में पारंगत होते हुए ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

तेषामृषभसुतानां मध्ये नवयोगीश्वराणां चरितं वक्तुमितरेषां चरितं ततो विविच्याऽऽह—तेषामिति। एतदजनाभं नाम वर्षं यस्य नाम्ना भारतमित्यद्भुतं विख्यातमासीत् एतेन तस्य धर्मातिरेको निरूपितः ॥ १७ ॥

इमां पृथ्वीं गृहादिभोगैः हरिमुपासीनः सेवमानः सन् ॥ १८ ॥

नव सुताः नवद्वीपपतयो नवानां ब्रह्मावर्त्तादिभूखण्डानां

(१) [illegible]शंसिनः (२) राजनाभा इति विज० पा०।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतज्ज्ञानिरूढज्ञानादयमर्थः सिद्ध इति तन्नामान्याह—कविरित्यादिना । द्रुत मिल मिथो मेलनं वेदार्थानामैक्यकरणं येन स तथा चाम्यन्ति वेदतीर्थम् इति चमसा वेदतीर्थपायिनः तेषु सारश्रमसः "द्रु गतौ" इति धातोः डुप्रत्ययः करे गात्रजनयति प्रकाशयतीति करभाजनः हस्तामलकवत् प्रतिभातवेदार्थ इत्यर्थः ॥ २१ ॥

आत्मविद्याविशारदा आत्मविद्याज्ञानेनेति भावेनाह—त एत इति । ये मुनिभिर्नोक्तास्त एते महीं व्यचरन्नित्यन्वयः । किं कुर्वाणाः विश्वं पूर्णं सदसदात्मकं कार्यकारणरूपं भगवद्रूपम् आत्मना जीवात्मव्यतिरेकेण वैलक्षण्येन पश्यन्त इति. यद्वा, सदसदात्मकं भगवद्रूपं भगवता मूर्त प्रतिमास्थानीयं विश्वं प्रपञ्चमात्मनो हरेर्व्यतिरेकेण पश्यन्त इति यद्वा, विश्वमन्तः प्रविश्य वर्त्तमानं सदसदात्मकं बहिश्च जगत् व्याप्य वर्त्तमानं भगवद्रूपं ब्रह्मसंज्ञमात्मनोऽन्तर्यामिणो हरेर्व्यतिरेकेणाभेदेन पश्यन्तः "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति श्रुत्यर्थं समनुभवन्त इत्यर्थः । विश्वस्य परमात्मनोऽभेददर्शनं सदसदात्मकमिति विशेषणेन निरुक्तमनङ्गीकारात जहदजहल्लक्षणाप्यप्रामाणिकीत्युपेक्षणाय तत्सर्वमिति ॥ २२ ॥

महीमित्यत्र चारकाणामप्यस्ति किं विशेषमाहात्म्यमेषामत्राह—अव्याहतेति । मुक्ताः जीवन्मुक्ताः मुनिचारणादीनां भुवनानि लोकानपि सुरसिद्धादीनां लोकांश्चरन्तीति किं कर्मवशादिति आह, कामेनेति । यत्नवता प्रतिपद्य कामतोऽपि सञ्चरणं तु शक्यं स्यादित्यत उक्तम् अव्याहतेति ॥ २३ ॥

किमेतेन प्रकृत इति तत्राह—त एकदेति । अजनाभस्य हरेः पुत्राः प्राजनाभाः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भगवतो रूपं स्फूर्तिर्यत्र तादृशं पश्यन्तः सदसदात्मकं स्थूलसूक्ष्मरूपं तच्चात्मनो व्यतिरेकेण आत्मानमपि तदनुगतं पश्यन्त इत्यर्थः ॥ २२ ॥

मुन्यादीनां भुवनानि च ॥ २३—२७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तेषाम् ऋषभपुत्राणां मध्ये नवद्वीपपतयो नवानां ब्रह्मावर्त्तादिभूखण्डानां पतयः अस्य भारतवर्षस्य एकाशीतिपुत्राः कर्ममार्गप्रवर्त्तका ब्राह्मणा अभवन् ॥ १९ ॥

अर्थशंसिनः परमार्थनिरूपकाः श्रमणा आत्माभ्यासे कृतश्रमा इत्यर्थः । वातरशना इति वसनापदेन वसनं लक्ष्यते दिगम्बरा इत्यर्थः ॥ २० ॥ २१ ॥

आत्मनः परमात्मनः सकाशादव्यतिरेकेण विश्वस्य तच्छक्तिमयत्वादिति भावः ॥ २२—२५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रस्तुतानां तमार्षभाणां चरितं वक्तुमन्येषां चरितानि तेषां विविच्याऽऽह—तेषामिति । तेषां शतसङ्ख्याकानामृषभसुतानां मध्ये भरतो ज्येष्ठः जन्मनेति शेषः । गुणतोऽपि स ज्येष्ठ इत्याशयेन तं विशिनष्टि—नारायणपरायण इति । एतदजनाभं नाम वर्षं यस्य नाम्ना भारतमिति विख्यातम् सर्वेषां वर्षाणामध्ये भगवत्प्राप्तिसाधनस्थानत्वेन भारतस्य श्रेष्ठत्वं दर्शयितुं तद्विशिनष्टि—अद्भुतमिति ॥ १७ ॥

स भरतः इमां वसुधां त्यक्त्वा निर्गतः गृहादिति शेषः तपसा हरिमुपासीनः सेवमानः सन् तत्पदवीं हरिभावापत्तिं त्रिभिर्जन्मभिरेव प्राप ॥ १८ ॥

तेषामध्ये नव अस्य भारतस्य वर्षस्य समन्ततः नवानां द्वीपानां ब्रह्मावर्तादिभूखण्डानां पतयोऽभवन् एकाशीतिश्च कर्मतन्त्रस्य कर्मकाण्डस्य प्रणेतारः प्रवर्तकाः द्विजातयोऽभवन् ॥ १९ ॥

नव तु महाभागाः अतो मुनयोऽभवन् तत्रापि विशेषमाह—वात एव रशना कटिसूत्रं येषां ते तथा दिगम्बरा इत्यर्थः । अर्थशंसिनः वेदान्तार्थभूतभगवत्तत्त्वोपदेष्टारः यतः श्रमणाः वेदान्तेषु कृतश्रमाः तत्रापि आत्मविद्यायां वेदान्तशास्त्रे विशारदाः पटवः ॥ २० ॥

तेषां नामान्याह—कविरिति ॥ २१ ॥

आत्मविद्याविशारदा इत्युक्तं तदात्मविद्यावैशारद्यं विश्वभिन्नाभिन्नब्रह्मज्ञानेन भवत्यतस्तेषां विश्वभिन्नाभिन्नब्रह्मज्ञानकौशलमाह—त एते इति । ते च मुनयः सदसदात्मकं स्थूलसूक्ष्मरूपं विश्वं चिदचिदात्मकं सर्वं कार्यजातं भगवद्रूपं भगवतः चिदचिच्छक्तेः विश्वकारणस्य रूपम् अवस्थाविशेषं तदव्यतिरिक्तं पश्यन्तः आत्मनः भगवतो विश्वकारणात् व्यतिरेकेण च पश्यन्तो महीं व्यचरन्नित्यन्वयः । तथाह भगवान् सूत्रकारः "उभयव्यपदेशात्त्वहिकुण्डलवत्" (३।२।२६) इति अस्यार्थो वेदान्तकौस्तुभे द्रष्टव्यः ॥ २२ ॥

अव्याहता अनिवार्या इष्टगतिर्येषां ते मुक्तास्तत्र तत्रासक्तिरहिताः कामं यथेष्टं सुरादिलोकान् मुन्यादिभुवनानि च चरन्ति ॥ २३ ॥

एवं सर्वत्र चरमाणाः एकदा अजनाभे भारतवर्षे ऋत्विग्भिर्वितायमानमनुष्ठीयमानं निमेः सत्रं बहूपकारकं यज्ञं यदृच्छया उपजग्मुः न तु पाण्डित्याख्यापनादिप्रयोजनाय महात्मान इत्यनेन निमित्ताभावमेव तेषां तत्समीपगमने हेतुरिति द्योतयति ॥ २४ ॥

---

भाषा टीका ।

तिन सबों के मध्य में जेष्ठ पुत्र बड़े नारायण परायण महाराज भरत हुए, जिनके नाम से यह अद्भुत भारतखण्ड विख्यात हुआ है ॥ १७ ॥

वे भरत महाराज इस पृथिवी के भोगों को भोगकर इस पृथिवी को त्यागकर गृह से निकल गये, वन में जाकर

तान् दृष्ट्वा सूर्यसङ्काशान् महाभागवतान् नृप ! ।
यजमानोऽग्नयो विप्राः सर्व एवोपतस्थिरे ॥ २५ ॥
विदेहस्तानभिप्रेत्य नारायणपरायणान् ।
प्रीतः सम्पूजयाञ्चक्र आसनस्थान् यथाऽर्हतः ॥ २६ ॥
तान् रोचमानान् स्वरुचा ब्रह्मपुत्रोपमान्नव ।
पप्रच्छ परमप्रीतः प्रश्रयावनतो नृपः ॥ २७ ॥

विदेह उवाच ।

मन्ये भगवतः साक्षात्पार्षदान् वो मधुद्विषः ।
विष्णोर्भूतानि लोकानां पावनाय चरन्ति हि ॥ २८ ॥
दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः ।
तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥ २९ ॥
अत आत्यन्तिकं क्षेमं पृच्छामो भवतोऽनघाः ! ।
संसारेऽस्मिन् क्षणार्द्धोऽपि सत्सङ्गः शेवधिर्नृणाम् ॥ ३० ॥
धर्मान् भागवतान् ब्रूत यदि नः श्रुतये क्षमम् ।
यैः प्रसन्नः प्रपन्नाय दास्यत्यात्मानमप्यजः ॥ ३१ ॥

नारद उवाच ।

एवं ते निमिना पृष्टा वसुदेव ! महत्तमाः ।
प्रतिपूज्याब्रुवन् प्रीत्या ससदस्यर्त्विजं नृपम् ॥ ३२ ॥

भाषा टीका ।

तप से श्रीहरि की उपासना करते हुए तीन जन्मों में श्रीहरि की पदवी को प्राप्त होते हुए ॥ १८ ॥

अवशिष्ट जो रहे निन्यानवे (९९) पुत्र तिन में नव, पुत्र इस भारत वर्ष के नवद्वीपों ( खण्डों ) के पति हुए, और इक्यासी ८१ पुत्र कोई महदनुग्रहादिरूप कारण से कर्ममार्ग के प्रवृत्त करने वाले ब्राह्मण होते हुए ॥ १९ ॥

और भी शिष्ट रहे जो बड़भागी नव पुत्र वे नव योगेश्वर होते हुए, तथा परमार्थ के निरूपण करने वाले, आत्मा-ध्यान के विषे परिश्रम शाली, दिगंबर और वेदान्त विद्या में निष्णात होते हुए ॥ २० ॥

वे नव योगेश्वर ये हैं—कवि, हरि, अन्तरिक्ष, प्रबुद्ध, पिप्पलायन, आविर्होत्र, द्रुमिल, चमस, और करभाजन, ॥२१॥

ये नव योगेश्वर भगवद्रूप स्थूल सूक्ष्म इस विश्व को परमात्मा से अपृथक् सिद्ध देखते हुए, इस पृथिवी पर विचरते हुए ॥ २२ ॥

और इन योगेश्वर लोगों की अभीष्ट गति कहीं भी प्रतिहत नहीं होती है, ये योगेश्वर लोग, सुर सिद्ध साध्य



गन्धर्व यक्ष नर किन्नर नाग इनके लोकों में; तथा मुनि चारण भूतनाथ श्रीमहादेवजी तथा विद्याधर द्विज और सुरभि प्रभृति गायें, इनके भवनों में यथेष्ट विचरते रहते हैं, कहीं भी रुक नहीं सकते हैं ॥ २३ ॥

वे ही योगेश्वर एक समय इसी भारतवर्ष में विदेहराज महात्मा राजा निमि के यज्ञ में जिसमें कि—बहुत से ऋषि लोग अनुष्ठान कर रहे थे उसमें इच्छा से पहुंच गये ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यजमानो निमिः अग्नय आहवनीयादयः विप्रा ऋत्विगादयः ॥ २५ ॥

अभिप्रेत्य ज्ञात्वा ॥ २६ ॥

स्वरुचैव रोचमानान् स्वाभरणादिप्रकाशैः ब्रह्मपुत्रोपमान् सनत्कुमारादिसदृशान् ॥ २७ ॥

परमप्रीत्या तद्दर्शनमभिनन्दति द्वाभ्याम्—मन्ये इति । ननु, भगवतः पार्षदानां कथमत्रोपलब्धिस्तत्राऽह, विष्णोरिति । विष्णुभक्ता लोकपावनार्थं सर्वत्र पर्यटन्तीत्यर्थः ॥ २८ ॥

कविरुवाच ।

मन्येऽकुतश्चिद्भयमच्युतस्य पादाम्बुजोपासनमत्र नित्यम् ।
उद्विग्नबुद्धेरसदात्मभावाद्विश्वात्मना यत्र निवर्तते भीः ॥ ३३ ॥

ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये ।
अञ्जः पुंसामविदुषां विद्धि भागवतान् हि तान् ॥ ३४ ॥

यानास्थाय नरो राजन् ! न प्रमाद्येत कर्हिचित् ।
धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह ॥ ३५ ॥

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वाऽनुसृतस्वभावात् ।
करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत् ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मानोऽपि मानुषो देहो दुर्लभः युष्मादृशः वैकुण्ठप्रियदर्शनयोग्यत्वात् भवतां दर्शनं महद्भाग्यमाद्य मया लब्धमिति भावः ॥ २९ ॥

अमीदं पृच्छति—अत इति द्वाभ्याम । हे अनघाः ! निरवद्याः! यतः क्षणार्धोऽपि सत्सङ्गः शेवधिर्निधिः मोक्षसुखदः अतः भवतः युष्मान् आत्यन्तिकं क्षेमं मोक्षोपायं सुखं भागवतधर्मं पृच्छामः ॥ ३० ॥

तत्राऽऽत्यन्तरोपायानपि श्रूत्वेत्याह—धर्मानिति । यदि नोऽस्माकं श्रुतये श्रवणाय क्षमं योग्यं भवति तर्हि भागवतान् यैः धर्मैः प्रसन्नः अजो नित्यमूर्तिः भगवान् प्रपन्नाय स्वशरणागताय "पद गतौ" इत्यस्य रूपम आत्मानमपि ददाति तान् ब्रूत ॥ ३१ ॥

ते सर्वे एवं निमिना पृष्टाः सदस्यैः ऋत्विग्भिश्च सह वर्तमान निमिं प्रतिपूज्य अभिनन्द्य प्रीत्या अब्रुवन् कविमुखेनेति शेषः ॥ ३२ ॥

---

भाषाटीका ।

हे वसुदेवजी ! उन सूर्य सदृश कान्ति वाले महाभागवतों को देखकर यजमान ( राजा निमि ) अग्नि और ब्राह्मण ये सबही उठ खड़े हुए ॥ २५ ॥

और विदेह राजा उनों को नारायण परायण जानकर बड़े प्रसन्न हुए, और उनको आसनों पर विराजमान कराकर यथा योग्य पूजा करने लगे ॥ २६ ॥

अपनी कान्ति से भ्राजमान भृगु सनकादिकों के सदृश उन योगेश्वरों से प्रसन्न और बड़े विनीत हो कर निमि राजा प्रश्न करते हुए ॥ २७ ॥

विदेह उवाच ॥

राजा निमि बोले, कि—मैं आप लोगों को साक्षात् मधुसूदन भगवान् के पार्षद जानता हूं । क्योंकि ? विष्णुभक्त लोग लोकों के पवित्र करने के लिये सर्वत्र विचरते रहते हैं ॥ २८ ॥

जीवों को क्षण भंगुर भी यह मनुष्य देह बड़ा दुर्लभ है, परन्तु उस मनुष्य देह में भी वैकुंठप्रिय जो आप सदृश भागवत जन हैं तिनका दर्शन और भी दुर्लभ है ॥ २९ ॥

हे अनघ हो ! हे योगेश्वर हो ! इसी से हम आप लोगों से अत्यन्तिक क्षेम पूछते हैं, क्योंकि इस संसार में मनुष्यों को अर्धक्षण भी सत्पुरुषों का संग मिलना एक निधि मिलने तुल्य है ॥ ३० ॥

तस्मात् यदि हमारे श्रवण करने के योग्य होवें तो आप भागवत धर्मों का वर्णन कीजिये, क्योंकि—जिन धर्मों से प्रसन्न होकर गोविन्द अपने प्रपन्नजन को अपने आत्मा ( आप ) को भी देदेते हैं, अर्थात् आप भी अपने भक्तजन के होजाते हैं ॥ ३१ ॥

नारद उवाच ॥

नारदजी बोले, कि—हे वसुदेवजी ! उन महत्तम भागवतों से जब राजा निमिने इस प्रकार पूछा, तब वे भी राजा के वचन की प्रशंसा कर बड़ी प्रीति पूर्वक सभ्य लोग और ऋत्विज लोगों के सहित राजा निमि से बोलते हुए ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रथममात्यन्तिकं क्षेमं कथयति—मन्य इति । न कुतश्चिद्भयं यस्मात्तदकुतश्चिद्भयम् अत्र संसारेऽसदात्मभावाद्धेतोर्देहाद्यात्मभावनातो नित्यं सर्वदोद्विग्नबुद्धेः विश्वात्मना सर्वथा निःशेषं यत्र पादाम्बुजोपासने भीर्निवर्तते तत् ॥ ३३ ॥

भागवतधर्मलक्षणमाह—ये वै इति । सत्यादिमुखेन वर्णाश्रमादिधर्मा विधर्मानुष्ठवाऽतिरहस्यत्वात्स्वमुखेनैव भगवताऽविदुषामपि पुंसामञ्जः सुखेनैवाऽऽत्मलब्धये ये वै उपायाः प्रोक्तास्तान् भागवतान्धर्मान्विद्धि ॥ ३४ ॥

अञ्जःपदेनोक्तं सुकरत्वं विवृणोति—यानिति । यानास्थायाश्रित्य योगादिष्विव न प्रमाद्येत विघ्नैर्न विहन्येत किञ्च,

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अलौकिकमन्त्रद्वारो देवर्षयः ततोऽपि पुष्टिमार्गमन्त्रद्रष्टृत्वाद्वि-भूतित्वं वस्त्वर्थे प्रकृते त्वस्योपयोगः गृहागतमिति स्वाधीनता पूजितत्वमुत्तमप्रश्नोपयोगः भगवत्प्रेरणया समागतस्योपा-सनार्थमपि वैयर्थ्यं नास्तीति सुखमासीनमित्युक्तं पुनरभिवादनं गुरुत्वबोधकं बहुकालमारभ्य प्रष्टव्यमिति हृदि स्थितमिदमा निर्दिश्यते ॥ ३ ॥

प्रश्नमाह-षड्भिः—

॥ वसुदेव उवाच ॥

भगवच्छब्दवाच्याः षडर्था इति षट् श्लोकाः तत्र प्रोत्साहनं त्रिभिः प्रश्नश्च त्रिभिः तत्र प्रथमं नारदस्यैवासाधारणगुणैरुक्तं प्रोत्साहयति—

मू० भगवन् ! भवतो यात्रा स्वस्तये सर्वदेहिनाम् ।
कृपणानां यथा पित्रोरुत्तमश्लोकवर्त्मनाम् ॥ ४ ॥

"ब्रह्म वेद ब्रह्मैव भवति यो यच्छ्रद्धः स एव सः" गुरुत्वाच्च भगवन्निति सम्बोधनं "जगन्मित्रं हि नारदः" यात्रा आगमनं राजादि-सर्ववैलक्षण्याय सर्वदेहिनामित्युक्तं अतोऽपि निरपेक्षत्वात् अहिंसाप्रचुरधर्मबोधनात्संसारोद्धारकत्वाच्च देहाभिमानिना-मिति मुक्तवैलक्षण्यार्थं अत एव विचार्यं तेषां अतो हित-करणे दृष्टान्तः अकृपणानां सर्वतः सम्पन्नानामपि पित्रोरागमनम् स्वस्तये किं पुनः कृपणानाम् उभयोर्वियोगे ह्यतिकृपणाः अतः परमोत्कर्षार्थे विशेषणम् उत्तमश्लोकस्य मार्गभूतानां तत्र प्रविष्टानां भगवत्प्राप्तेर्निश्चितत्वात् तथा च नारदस्य त्रयो गुणाः सर्वमैत्री सर्वहितपरत्वं गोविन्दपरत्वं चेति एकैकेनैव वयं कृतार्थाः किंपुनस्त्रिभिः ! उपसंहारे बहुवचनं पूज्यार्थे व्यवहारे वा कृतदोषपरिहाराय च आगमनं तु भगवदिच्छयेति न कोऽपि विरोधः ॥ ४ ॥

कथं नारदागमनेनैवमित्याशङ्क्य देवर्षिविभूतित्वं प्रकट-यति—

मू० भूतानां देवचरितं दुःखाय च सुखाय च ।
सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम् ॥ ५ ॥

देवापेक्षया उत्तमत्वं सर्वेषां सुखैककारित्वेन विभूतित्वमग्रिम-श्लोके देवा हि द्विविधाः प्रवाहमर्यादाभेदेन तत्र प्रवाहदेवा वृष्ट्यादिकर्तारो भवन्ति ; वृष्ट्यादिकं तु दुःखकरमपि प्रवाह-देवा अपि द्विविधाः बाह्याभ्यन्तरभेदेन सुखदुःखे च लौकिका-लौकिके चकाराभ्यामलौकिके परिगृहीते वेदितव्ये भूतानि भूलोकस्थितजीवाः प्रकरणात् विशेषः चरित्रं तु स्वरूपतो महत् परं तु सुखदुःखजनकं च ऋषिचरित्रं हि मन्त्र द्रष्टृत्वं मन्त्रास्तु सहजमपि धर्ममपेक्ष्य तन्मात्रमधिकारं प्रतिबध्नन्ति तदत्र सहजभाविदुःखं प्रतिबध्नन्तीति नात्र तिरोहितमिव सर्वजनीन-मित्याह-हीति । साधवः सदाचाराः मर्यादारक्षकाः लोकावेशार्थं भगवता अधिकृता नारदतुल्याः पुष्टिमार्गस्था गोपिकातुल्या अच्युतात्मानः मन्त्रा अपि त्रिविधाः मर्यादास्थाः देवगुह्याः भगवद्वशीकरणरूपाः अतो भवन्तो भगवद्विचारितं देवकृतं मर्यादया प्राप्तं च दुःखं मन्त्रप्रयोगेण दूरीकृत्य सुखमेव साधयन्तीत्यर्थः ॥ ५ ॥

विभूतित्वं वक्तुं ततोऽपि विशेषमाह—

मू० भजन्ति ये यथा देवान् देवा अपि तथैव तान् ।
छायेव कर्मसचिवाः साधवो दीनवत्सलाः ॥ ६ ॥

ननु, यदि भगवदवयवभूता देवा "यन्न दुःखेन सम्भिन्न"मिति वाक्यानुसारेण सुखमेव प्रयच्छन्तीति चेत् न नहि एकेन यागे कृते तत्सम्बन्धिनां स्वर्गो भवति नवा अग्निष्टोमे कृते ब्राह्मणा-दस्वर्गो भवति । ननु तेषां भगवदवयवभूतानां कथमेवमत आह, कर्मसचिवाः राजाधीना हि मन्त्रिणो भवन्तीति वेदमार्गस्थ-त्वेन नात्र किमपि विचारणीयं वैलक्षण्यमाह-साधवो दीनव-त्सला इति । चतुर्थपादः सिद्धान्त इति सन्त आत्मा अहमेव चेति चतुर्थः पादः नहि अंशेनतया कर्तुं शक्यं यथा अंशिना दैन्यमेव करणे हेतुः यत्सं स्वामिन जिह्वया माददते इति कार्या-कार्यविचाराभावेन सहजस्नेहवन्तो वत्सलाः सामान्यवाक्यं विशेषपरमिति प्रकरणादवगन्तव्यं तस्माद्भवत्समागममात्रेणैव भगवदवतार इति सर्वेषां सर्वं सिद्धं भवतीति तद्गुणवर्ण-नेन प्रोत्साहनमुक्तम् ॥ ६ ॥

प्रश्नमाह—

मू० ब्रह्मंस्तथापि पृच्छामो धर्मान् भागवतांस्तव ।
यान् श्रुत्वा श्रद्धया मर्त्यो मुच्यते सर्वतो भयात् ॥ ७ ॥

ब्रह्मभावाभिलाषी विदितसर्ववृत्तान्तो विदितसाध्यसाधन-भावो धर्मान् पृच्छति, "कथमाचार्यवान् पुरुषो वेद"ति शास्त्रार्थ-त्वाय भगवतो ब्रह्मत्वभावनायामपि गुरुत्वस्य भगवताङ्गी-करणाच्च शास्त्रार्थसिद्धिः किन्तु अलपवृज्ञानमुपदिष्टं तेन जीव-न्मुक्तिन्यायेन ब्रह्मभावे जातेऽपि ब्रह्मभूतः प्रसन्नात्मेत्यादिनि-रूपितार्थस्यासिद्धेः भगवद्धर्माचरणेन तत्सिद्धिरिति प्रश्नः नारदस्य ब्रह्मभावो जात इति तथा सम्बोधनं स्तुतिमात्रत्वा-भावाय स्वस्यानुष्ठेयः स्वविचारितो भविष्यतीति तथापीति भवदागमनेनैव सिद्धोऽस्माकमर्थस्तथापि शास्त्रार्थपरिपालनाय पृच्छामः देवकीप्रभृतीनामप्ययमर्थोऽभिलषित इति बहुवचनं भाग-वतानिति प्रमाणतः स्वरूपतः फलतश्चेति त्रेधा निरूपतभगव-त्सम्बन्धान् तवेति स्वात्वनुष्ठेयान् दुःखनिवर्तकत्वं तु तेषामि-दानीमेवाह-यान् श्रुत्वेति । उपायपरिज्ञाने हि निश्चिन्तता भवति श्रद्धया तदात्मत्वेन करणं सम्भवति मर्त्य इति स्वभावतः सम्भवत्वं सर्वत इत्याध्यात्मिकादिभिः ॥ ७ ॥

ननु, दिव्यद्वादशसहस्रवर्षानन्तरं प्रसन्नो भगवान् कथं कर्दमस्य शुक्र इव न गुरुर्जात इतिचेत्तत्राह—

मू० अहं किल पुराऽनन्तं प्रजार्थो भुवि मुक्तिदम् ।
अपूजयं न मोक्षाय मोहितो देवमायया ॥ ८ ॥

अलौकिकज्ञानज्ञापकस्य देवकीजठरादुद्भवस्य कुतो न गुरुत्वमित्यत आह-किलेति । प्रसिद्धार्थज्ञापकत्वेन न गुरुत्व प्रसि-द्धिस्तु जन्मद्वयां सत्यमकुलपरत्वाद्यत्रापि पुत्रत्वमेव न गुरुत्वम् अस्मिन् जन्मनि प्रसिद्ध्यभावात् अत आह, पुरेति । ईश्वरपरि-चर्यामायानुपदेशोऽनुचित इति आशङ्क्य देवत्वान्तराभावात् कत्वेन परिचयः प्रकारे परं निरोधः प्रजार्थ इति भुवि मुक्तिद-मिति न क्रममुक्तिः न वा उभयार्थेन मोक्षार्थेन तपसा शुद्धचि-त्तस्य कथमेवमत आह—मोहित इति । प्रजासर्गे ब्रह्मणा आदिष्टो नन्वाद्येकः प्रथमं मत्कुलपक्ष तवेति भगवतापि तथैव विचा-रितं ततो भगवत्साक्षात्कारयाविद्यमानस्य प्रार्थ्यमानत्वादिद्वयैव:

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततस्तपस आधिक्याच्चित्तशुद्धिः ततो भगवद्विचारितत्वात्स्वयमावामस्मभवान्मायामोहः यया देवा अपि मुह्यन्ति सा दैवमाया ॥८॥

ननु, कथमिदानीमन्यथा भविष्यतीत्याशङ्क्याह—

मू० यथा विचित्रव्यसनाद्भवद्भिर्विश्वतो भयात् ।
मुच्येम ह्यञ्जसैवाद्धा तथा नः शाधि सुव्रत ! ॥ ९ ॥

इदानीं विशेषप्रार्थना "वाञ्छेय मद्गतिं पराम्" इति वचनात्त भगवतः प्रतिबन्धकत्वम् अत्र कियत्यभावकारणत्वाभावे हेतुमाह, विचित्रव्यसनादिति । भगवतः पुत्रत्वेन कियताऽपि यदा व्यसनमन्यपुत्रादिसंसारचिन्ता तदा कदाचन निवृत्तिः तथा तस्य व्यसनस्यैकः प्रकारः व्यसनाभावार्थं परिगृहीतादपि व्यसनमिति विचित्रता जन्मान्तरे पुनः साधनसम्पत्तिः कीदृशी भवेदिति प्रतिमन्तेव जन्मनाऽयुक्तम अधिकारोऽपि भयहेतुः तथा वैकुण्ठादप्यागमनम् अतः सर्वनिषेधायाह—सर्वतो भयादिति । अञ्जसेति प्रतायासेन आयासे हि विलम्बोऽङ्गप्राप्तिरवाप्तिमेवेत् अद्धा साक्षात् परम्परया साधनायं यतो बाह्याऽन्तरभेदेन तत्रान्यसम्बन्धिमासिद्धिस्य मोचनं सम्भवति । यथा सर्वं नश्यत्यर्थमाह—साक्षादिति । शासनं वाक्यरीत्या नोपदेशमात्रेण कार्यसिद्धिः सुव्रतेति सम्बोधनं सर्वनिर्वाहाय आश्रितसर्वकार्यसिद्धिकरणाद्भवं भगवन्तमपि प्रार्थयित्वा सर्वं करिष्यतीति एवं त्रिभिः प्रश्नः सिद्धः परिनिष्ठितोऽपि ॥ ९ ॥

सावधानश्रवणार्थं शुकवचनम्

शुक उवाच ॥

मू० राजन्नेवं कृतः प्रश्नो वसुदेवेन धीमता ।
प्रीतस्तमाह देवर्षिर्हरेः संस्मारितो गुणैः ॥ १० ॥

राजन्निति महत्त्वसम्बोधनं वोत्तकथाप्रश्नापनायोभयोर्गुणकथनं धीमता देवर्षिरिति सर्वथा परमासक्तान्तकरणे हेतुः प्रीत इति हरेर्गुणैः पुत्रादिभावनानुवृत्त्यादिभिः सम्यक्त्वेन महात्मयमिति स्मारितः तस्य पूर्ववृत्तान्तः सम्यक् ज्ञात इत्यर्थः ॥ १० ॥

उत्तरत्वेन शास्त्रं वक्तुं स्वयमप्यभिनन्दनमाह—त्रिभिः—

गुरुशिष्ययोर्मध्ये प्रवचनस्य स्तुतिर्वक्तव्या तत्र प्रथमं श्रोतुः पुरस्कारः—

श्रीनारद उवाच ॥

मू० सम्यगेतद्व्यवसितं भवता सात्वतर्षभ ! ।
यत्पृच्छसे भागवतान् धर्मांस्त्वं विश्वभावनान् ॥ ११ ॥

यदस्माभिर्वक्तव्यं भगवद्धर्मापां श्रवणानुष्ठाने कर्तव्ये इति सर्वशास्त्रार्थनिर्णयोऽयमिति च भगवन्मार्गोऽन्यस्य कर्तव्यत्वाभावात् तदेतत् त्वयैव निश्चितं मात्वता भगवद्भक्ताः तदेषमत्त्वं निश्चितमार्गवक्तृत्वात् विशेषतो गुरुत्वार्थञ्च पृच्छसे अनुवादे पुनर्भगवदीयत्वनिर्देशो भक्त्या विश्वभिमनुभावो येषामिति तदभावे मार्गान्तर इव कार्यासिद्धेः अनेन गुरोरभावे प्रश्नहेतुरप्युक्तः सामान्यतोऽपि श्रुताश्चेतयान्तःकरणवृत्तिं सम्पादयन्ति ॥ ११ ॥

अलौकिकानुभावत्वं प्रश्नहेतुत्वेनोक्त्वा कैमुतिकन्यायेन तान् स्तौति—

मू० श्रुतोऽनुपठितो ध्यात आदृतो वाऽनुमोदितः ।
सद्यः पुनाति सद्धर्मो देवविश्वद्रुहोऽपि हि ॥ १२ ॥

सतो भगवद्भक्तस्यैकोऽपि धर्मो लोकवेदघातिनः सर्वथा बहिर्मुखानपि भगवद्विद्विषो महतोऽपि बहुतरापि श्रुतमात्रः सद्यः पुनाति किम्पुनर्भगवद्धर्माणाम् माहात्म्यं वक्तव्यमित्यर्थः । यथा गङ्गामिव भगवत्सेवकानां पदपानतलस्य स्वभावः "भूतानि विष्णोः सुरपूजितानि" इति न्यायेन श्रुतः पावयति लोके वेद च दुर्लभमति फलत्वेन कीर्तने श्रवणानन्तरमात्मकीर्तनमनुपठनं ध्यानं मानसङ्कल्पवाङ्मनसोर्मोचरस्तथा करोतीति त्रयम् आदृतो वेति पूर्वेण सह स्वतन्त्रविकल्पः आदरस्य प्रेमसहितत्वात् भिन्नकर्तृकश्रवणादावनुमोदनं मात्सर्याभावाय पदार्थे महतां कथञ्चिदनुमोदनं भवतीति नाम प्रमाणान्तरमपेक्षते तस्माद्यत्र भगवत्सेवकधर्मोऽप्येताहशः तत्र भगवद्धर्माणां किं माहात्म्यं वक्तव्यमित्यर्थः ॥ १२ ॥

स्वस्यापि कृतार्थतया समाजनमाह—

मू० त्वया परमकल्याणः पुण्यश्रवणकीर्तनः ।
स्मारितो भगवानद्य देवो नारायणो मम ॥ १३ ॥

भगवद्धर्मप्रश्नः सर्वत्र दुर्लभः तेषामाप्यासामपि सर्वदा पिहितं स्मरणादिप्रेमाभिभावे तु तेनैव पिहितं चित्तं सम्यक् प्रविष्टं स्मरति तद्विचारार्थं अतमिति सम्यक् स्मारित इत्यर्थः । कल्याणं विवाहादिपुण्यं गङ्गास्नानादि तथा ऐहिकामुष्मिकपुरुषार्थरूपता भवति । परमत्वं परमानन्दरूपत्वात् रूपनामविभेदेनेति वक्तुं श्रवणकीर्तन इत्युक्तं परस्वरूपाध्यभेदेन भगवानिति धर्मिनिर्देशः ऐहिकामुष्मिकानन्तरं फलत्वमपि भगवत आह—देवो नारायण इति । देवपक्षपातित्वाद्देवः अज्ञजनकत्वाय नारायण इति । सर्वेषामपेक्षितः मम तु स्वामी सेव्य इत्यर्थः सेवायामपि तिरोहित एवेत्यद्येति विशेषः ॥ १३ ॥

एवमभिनन्दनमुक्त्वा शास्त्रमारभते । अत्रापीत्यादि सवापरमाङ्गमित्यन्तं गुरोः केवलवाक्याच्छास्त्रीयं प्रमाजनकमिति सिद्धं तत्र कथोपक्षेपमाह—

मू० अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
आर्षभाणां च संवादं विदेहस्य महात्मनः ॥ १४ ॥

अत्र धर्मप्रश्ने अयमर्थः सर्वथा न त्वयैव पृष्टः किन्तु पुरातनोऽपि अनेन फलस्यापि नियतत्वं ज्ञापितं कल्पान्तरीयाहत इति सूचयितुमुदाहरन्तीति जन्मान्तरस्थाः गुरवोऽन्ये च भगवतो ब्रह्मणो या वाक्यं नोदाहृतम उक्तविषयत्वात् पुरातनमिति नारदकल्पापेक्षया ऋषभदेवपुत्राणां विदेहस्य च इतरेतरयोगेन प्रत्येकं प्राधान्यार्थे वा चकारः अस्य निर्गतत्वमस्कन्धोक्तादन्यत्वात् योचमप्रतिष्ठितत्वेन दूषणं श्रोतुर्धर्शकयने प्रयोजनाभावादुत्तमत्वमात्रं वक्तव्यं तद्यथमभ्यादिष्यतं वक्ष्यति देहाभिमानाभावः भगवच्चित्तता चात्राप्युक्ता तादृशोऽयं वंशः यत्र भगवता स्वधर्माविर्भावः पट्सु कृतः शुकवंशवत् सप्तमी हि कथा भगवद्धर्मे प्रतिपादिका ॥ १४ ॥

तान् वक्तुं षट् पुरुषानाह—

मू० प्रियव्रतो नाम सुतो मनोः स्वायम्भुवस्य यः ।
तस्याग्नीध्रस्ततो नाभिर्ऋषभस्तत्सुतः स्मृतः ॥ १५ ॥

पञ्चमस्कन्धोक्तोऽयमिति वक्तुं तृतीयाद्यारम्भः स्पष्टम् ॥ १५ ॥

सप्तमानामुत्पत्तिं वदन् पितुर्माहात्म्यपुरःसरमाह—

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मू० तमाहुर्वासुदेवांशं मोक्षधर्मविवक्षया ।
अवतीर्णं सुतशतं तस्यासीद्ब्रह्मपारगम् ॥ १६ ॥

ज्ञानमध्ये तेषामप्युत्पत्तिः वेदाध्ययनं च साधारणमुक्तं भगवद्धर्माः अत तेनोऽप्यधिकाः सन्तीति तन्मध्ये नवानामप्युत्पत्तिः सर्वोत्तमत्वात् ॥ १६ ॥

अत्र न कोऽपि प्रवाहपतित इति वक्तुं पुत्रित्वं श्लोकाभ्यामाह-स्वरूपकार्याभ्यां रूपतः ज्येष्ठत्वं वदन् स्वरूपमाह—

मू० तेषां वै भरतो ज्येष्ठो नारायणपरायणः ।
विख्यातं वर्षमेतद्यन्नाम्ना भारतमुत्तमम् ॥ १७ ॥

नारायणपरायणत्वे हि रूपोत्कर्षः यन्नाम्ना महतोऽपि नाम प्रसिद्धं भवति स नामोत्कर्षः ज्येष्ठस्योत्तमत्वं सर्वेषां तादृशत्वज्ञापनाय ॥ १७ ॥

कार्यमाह—

मू० स भुक्तभोगां त्यक्त्वेमां निर्गतस्तपसा हरिम् ।
उपासीनस्तत्पदवीं लेभे वै जन्मभिस्त्रिभिः ॥ १८ ॥

भरत एव हि भगवान् बद्धमुमुक्षुमुक्तावस्थाः प्रदर्शितवान् प्रवाहमेतदेव रूपमेषां क्रियेति प्रवृत्तिनिवृत्तिधर्माश्च भगवदिच्छया प्रतिबद्धाः नारायणपरायणस्य धर्मनिष्ठा न प्रयोजिकेति पदवीं लेभे इति ततोऽग्रे गतिर्न ज्ञायत इत्यर्थः । नारायणपराः सर्वे इति वचनात् भुक्तभोगा धरित्र्यक्तेत्युपपत्तिकथनार्थं भुक्तभोगानि विशेषणं विगत इति न सन्यासो गृहीत इति ज्ञापयति तथा सति हरिणासक्तं पतितत्वं स्यात् ॥ १८ ॥

अन्येषामपि नव व्यतिरिक्तानां मर्यादायां विनियोगमाह—

मू० तेषां नव नवद्वीपपतयोऽस्य समन्ततः ।
कर्मतन्त्रप्रणेतार एकाशीतिर्द्विजातयः ॥ १९ ॥

रूपमर्यादां हि नव रक्षितवन्तः अर्हदृक्षमध्यभेदाद् भरतजन्मभोगेनाभ्योऽन्यासभागेन नवविधा भवन्ति ते कर्तारि कर्माणि च प्रविष्टा एकाशीतित्वं सम्पादयन्ति एतावन्त एव हि प्रवृत्तिमार्गे वेदनिष्ठाः तेषां मध्ये नव नवद्वीपपतयो जाताः अस्येति पुरःस्थितभूमिनिर्देशो बुद्धिस्थभरतनिर्देशो वा कर्मतन्त्रप्रणेतार इति यजनयाजने प्रदर्शिते ब्राह्मणवाविर्भावस्तेष्वेवाति द्विजातय इत्युक्तम् ॥ १९ ॥

अवशिष्टानाह—

मू० नवाभवन्महाभागा मुनयो ह्यर्थशंसिनः ।
श्रमणा वातरशना आत्मविद्याविशारदाः ॥ २० ॥

भागवतधर्मवक्तारो नव महाभागवता इति ज्ञानभक्तिसहिता अन्यो मन्त्रमिव भागवतधर्मवक्तारा इत्युक्तत्वात् अलौकिकत्वद्वये षड् हेतवनाह, ते हि नवधा भक्तिरेव प्रकटीति तुल्यस्वभावाः लोके निखिलभगवद्धर्माः इति महाभागा इत्युक्तं प्रायो निधिवज्ञानादशक्त्या च गच्छन्तीति अज्ञानं त्रिभिर्निवारयति । मननशीला हि अवेत्तुकालतत्र सत्यं परिपालयन्तीति तत्रापि नारतम्यज्ञानार्थमर्थशंसिन इति परमार्थभूतमेव वस्तु शंसते मत् बालवदेव पतिकाङ्क्षित इदमपि तस्मात्कथनार्थं धर्माणां सम्यगवधारणमुक्तं श्रमणा इति सामर्थ्ये येषां मनोवाक्कायानां तद्धर्मेति नाज्ञानेन प्रमादः अशक्तिं निराकरोति द्वयेन परिग्रहयो हि व्याकुलता अपरिग्रहे देहाध्यासे सति ततोऽपि अतः अपरिग्रहः आत्मज्ञानं चोक्तं देहाध्यासस्य सर्वथा बाधितत्वाय विशारदत्वम् ॥ २० ॥

गुरोर्नामपरिज्ञानाय तेषां नामान्याह—

मू० कविर्हरिरन्तरिक्षः प्रबुद्धः पिप्पलायनः ।
आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः ॥ २१ ॥

अथशब्दः प्रकरणविच्छेदकः "तस्माद्भारत सर्वात्मा" इत्यत्र निरूपितः विस्तरभयान्नोच्यते ॥ २१ ॥

तेषामाश्रमधर्मं ज्ञानवैराग्याभ्यां श्लोकद्वयेनाह तत्र ज्ञानेन परिभ्रमणं प्रथममाह—

मू० त एते भगवद्रूपं विश्वं सदसदात्मकम् ।
आत्मनोऽव्यतिरेकेण पश्यन्तो व्यचरन्महीम् ॥ २२ ॥

सङ्गपरिभ्रमणं निषिद्धमाशङ्क्य भगवद्धर्मवर्णनात्तत्परकथनार्थमप्येत इत्याह—त एत इति । वैदिकं भागवतज्ञानं चैकविधं भगवद्रूपेण परं विशेषः । भागवते तु विकल्प दूरीकरणैकरूपानुभवः लोके तु बहिर्दर्शनमात्र एव तत्र वैदिके वेदान्ते च प्रकारत्रयेण ब्रह्मनिरूपणं ब्रह्मजगज्जीवप्राधान्यभेदात् तत्र जगत्प्राधान्यज्ञानमाह—भगवतोऽनन्तमूर्तेः कार्यरूपमेकं त्रिविधबुद्धिहेतुभूतं व्यवस्थया न सदसद्रूपं किन्तु सर्वत्रैव तत्र स्वरूपाद्यभेदः आत्मनः अव्यतिरेकः परिभ्रमणेऽपि ब्रह्मनिष्ठत्वाय जगत्प्राधान्यज्ञानम् ॥ २२ ॥

वैराग्यमाह—

मू० अव्याहतेष्टगतयः सुरसिद्धसाध्य—
गन्धर्वयक्षनरकिन्नरनागलोकान् ।
मुक्ताश्चरन्ति मुनिचारणभूतनाथ—
विद्याधरद्विजगवां भुवनानि कामम् ॥ २३ ॥

वैराग्यमपि त्रिविधं विषयाणां स्वामिनां कालानां दूरपरित्यागः अभ्यन्तरे स्थितवा समागतानामुपेक्षा रागाभावाय सङ्गननुगमोऽनिषिद्धप्रकारेण तत्र तृतीय एतेषु भगवद्धर्मरसाभिनिवेशात् विषयानामङ्गीकारेण न व्याहता इष्टा गतिर्येषां चतुर्दशलोकाभिप्रायेण गणिता लोकाः तत्रलोकेगुणानं सम्बन्धा मुक्ताः काममिति भगवदिच्छापरिपालकत्वान्नोपि अपि दुष्प्राः ॥ २३ ॥

भारते यज्ञकर्तारः शुद्धाः भगवद्धर्मजिज्ञासवो भविष्यन्तीति भगवदाज्ञापरिपालनाय तत्र समागता इत्याह—

मू० त एकदा निमेः सत्रमुपजग्मुर्यदृच्छया ।
वितायमानमृषिभिरजनाभे महात्मनः ॥ २४ ॥

सर्वथा आगन्तव्यमिति निर्बन्धो नास्तीति यदृच्छयेत्युक्तं सत्रे हि लौकिकवैदिकक्रियापेक्षानिरिक्तकालः सम्भवति । पञ्चदशसान् सम्पाद्याहरन्सृजन्तीतिवत् तत्र आह, वितायमानमिति । अभावाय ऋषिभिरिति तथापि गमनमनुचितमिति आयन्तेयमिति मातृनाम्ना निर्देशः परं भावं निमेरित्याह-महात्मन इति ॥ २४ ॥

समागमः पूजनं च प्रश्नश्चेति त्रिभिः क्रमात् तत्र समागममाह—

मू० तान् दृष्ट्वा सूर्यसङ्काशान् महाभागवतान्नृप ।
यजमानोऽग्नयो विप्राः सर्व एवोपतस्थिरे ॥ २५ ॥

तेषां ब्रह्मविदत्वं भागवतत्वं चेति विशेषणद्वयं सूर्यत्वादुचितमुपस्थानं लोकतः ब्रह्मविदस्यायजमानस्याप्युचितं महाभागव-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तस्माद्विप्रिविप्रयोः सहभावेनाग्रे अनेन तेषां सहजोत्कर्षः प्रतिपादितः ॥ २५ ॥

पूजनमाह—

मू० विदेहस्तानभिप्रेत्य नारायणपरायणः ।
प्रीतःसम्पूजयाञ्चक्रे ह्यासनस्थान् यथार्हतः ॥ २६ ॥

तेषां ब्रह्मत्वेन भगवत्त्वेन च ज्ञानम् अतो राजनि विशेषणद्वयं विदेह इति नारायणपर इति च अग्रिमविशेषणस्य पूजाया-मप्युपयोग इति पश्चान्निरूपणं दृष्ट्वैव प्रीतः तेनास्य तद्गतं सर्वं ज्ञातमिति सम्पन्नं सम्यक् पूजा यथा भगवतः बहुकाल-स्थित्यै आसनस्थानिति ज्येष्ठानुक्रमेण यथारुचि पदार्थदानं च ज्ञात्वा पूजनं तेषामित्युत्कर्षः ॥ २६ ॥

प्रश्नमाह—

मू० तान् रोचमानान् स्वरुचा ब्रह्मपुत्रोपमान्नव ।
पप्रच्छ परमप्रीतः प्रश्रयावनतो नृपः ॥ २७ ॥

अप्रष्टव्यः पदार्थस्तेषु वर्तत इति बोधहेतुः स्वरुचा रोचमाना-निति रुच्युत्पादककान्तिमत्त्वं ब्रह्मविदो भगवद्धर्मवत्त्वेन पितुः स्वस्य च मनसा कृता गुरवः सनकादय इति कथं तदुल्लङ्घ-नेन प्रश्न इत्याशङ्क्य तत्तुल्या एवेत्याह—ब्रह्मपुत्रोपमानिति । तथा-प्यनुचितेनाज्ञत्वाज्ञित्यनेन समाधानमेते नवेति च वैकुण्ठस्थिता एवैते चत्वारोऽपि दुर्लभा लोके कुतो नवेति बहुकालमनो-रथसिद्धिर्भविष्यतीति परमप्रीतः आसक्त इत्युक्तं विनयेन नम्रता प्रश्ने फलहेतुः नृप इति देशकालादिसर्वचातुर्यम् एवं तस्य प्रश्नपर्यन्तं नारदोक्तिरुक्ता राज्ञः प्रश्नमाह, चतुर्भिः । अभिनन्दनं द्वयेन द्वयेन च प्रश्नः भगवत्सेवकत्वेन भगव-द्धर्मवत्त्वेन च ज्ञानं तु ब्राह्मणानां सहजत्वात्स्तूयते तथैव प्रश्नोऽपि द्वयेन धर्मपरिपालनात्फललाभाभ्याम् ॥ २७ ॥

तत्र प्रथमं भगवत्सेवकत्वेन तान् स्तौति—

जनक उवाच ॥

मू० मन्ये भगवतः साक्षात्पार्षदान्वो मधुद्विषः ।
विष्णोर्भूतानि लोकानां पावनाय चरन्ति हि ॥ २८ ॥

दर्शनादेव परमहंसा वैष्णवा इति ज्ञानं गोत्रादिप्रश्ने न कोऽपि पुरुषार्थः आगमनप्रयोजने सन्देहः स्वार्थमागमनं परार्थं चेति प्रथमो दर्शनादेव निवृत्तः परार्थे च प्राणिनो न स्वतः प्रवृत्तिः प्रेक्षापूर्वप्रवृत्तिश्चेयम् अतो भगवत्प्रेरणया ऽस्मदुद्धारार्थं समा-गतं तत्र बहिः सेवका राजसेवकाधिकारिणो भवन्ति । तैश्चास्व-तन्त्रैर्न सर्वं कार्यम् सिध्यति अतः कृत्रिमवैकुण्ठादौ सनका-दय इवान्येऽपि तत्सदृशा भगवत्सभायां तिष्ठन्ति पार्षदसङ्घेऽपि केचन गच्छन्ति तानिवृत्त्यर्थं साक्षादिति मुख्यानित्यर्थः । कस्मिन्न-वसरे पार्षदत्वं तत्राह—मधुद्विष इति । मधुकैटभौ हत्वा ब्रह्मणो वेदान् दत्तवान् हयग्रीवरूपेण ततश्च वेदरक्षावसरे सर्वेषां महतामवसरः अनेन तेषां वचनं न केनाऽपि शास्त्रेण विरुद्ध-मिति ज्ञापितं कार्यार्थं भगवदाज्ञयाऽऽगमनसम्भावनायामपि परिभ्रमणमयुक्तमित्याशङ्क्याह—विष्णोर्भूतानीति । पालकस्य सेवकाः यं गृह्णन्ति तं स्वसमानं कुर्वन्तीति भूतानि अथवा भगवदुत्पन्नानि गङ्गावत्सर्वपापनाशकरणार्थं परिभ्रमन्तीत्यर्थः नात्र सन्देहः गङ्गेव इदान्तः इति हीत्युक्तं भगवतैवोत्पाद्य प्रेषिता इत्युक्तं भवति ॥ २८ ॥

भगवद्धर्मवत्त्वेन तेषां प्रशंसा गङ्गातोऽप्याधिक्यार्थमाह—

मू० दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः ।
तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥ २९ ॥

अन्यथा सुदुर्लभमिदमिति न्यायेन स्वर्गापवर्गयोर्द्वारमिति च अत्रैव मृग्य इत्यादिवचनैश्च मानुषदेहो नौकावत्साधनं परं सन्तो नाविका इव यदि भवन्ति तदा फलं सिध्यति तथात्र प्रत्यक्षबाधः शाकुनीयः हेतुस्वरूपफलैः प्रत्यक्षैर्हि स भवति तत्र हेतुरप्रत्यक्ष एव फलं साधनाभावात् स्वरूपेऽपि बहवः पथिका इतरस्यां विषमनद्यां प्राप्तनौका न नौकां सुलभां मन्यन्ते बहुभ्रमणेन प्राप्तत्वात् चतुरशीति लक्षयोनिष्वेका मनुष्ययोनि-रिति युक्त्या बाधो निराकार्यः देहाभिमानस्य तामसत्वाद्राज-समानुषदेहो दुर्लभ इत्यर्थः । क्षणेन भङ्गुरम् आरम्भनाशौ न निष्ठतीति मानुषदेहप्राप्तिःस्वस्य दुर्लभा दुर्लभेऽपि दुर्लभा भगवत्प्रियप्राप्तिः तदभावे प्राप्तापि व्यर्था अनर्थहेतुश्चेति लोकप्रसिद्ध्यभावेऽपि स्वानुभवः प्रमाणमित्याह—मन्य इति । वैकुण्ठं स्थित्वा सर्वस्वरूपस्वधर्मान् दत्त्वा सेवकवाञ्छया प्रेषयित्वा तत्प्रतीक्षया तिष्ठन्तीति वैकुण्ठस्य प्रियाः ॥ २९ ॥

महतां समागमः पुनः सम्भविष्यति येन विलम्बः कर्तव्यः किन्तु शरीरस्योपयोगः कर्तव्य एवेत्याशयेनाह—

मू० अत आत्यन्तिकं क्षेमं पृच्छामो भवतोऽनघाः ! ।
संसारेऽस्मिन् क्षणार्धोऽपि सत्सङ्गः शेवधिर्नृणाम् ॥ ३० ॥

विरोधिसहभावाभावे सति अनन्तत्वमात्यन्तिकत्वं क्षेमो लब्धस्य परिपालनं लब्धो हि दुर्लभो देहः सङ्गश्च स येनो-पायेन नित्यो भवेत्स वक्तव्य इत्यर्थः । भवत इति द्वितीयं कर्म पदार्थद्वयस्य दुर्लभत्वेऽपि प्रारम्भकपापसम्भवात्ताभ्यां न सर्वथा कार्यसिद्धिः अत अनघा ! इति सम्बोधनं प्रतिबन्धकाभावाय विष्णोर्भूतानीति हेतुः आत्यन्तिकक्षेमस्योत्कर्षं वक्तुं कैमुतिक-न्यायेनाह । संसारे स्मिन्निति । स्वव्यतिरिक्तानि क्षुद्राणि फलानि दातुं न बहुकालस्थितिरपेक्ष्यते निधिप्राप्तौ दारिद्र्यमिव क्षण-दानेन संसारदुःखनिवृत्तिरित्यर्थः । अतः सदिति सामान्यपदं नरत्वमेवाधिकारिविशेषणम् ॥ ३० ॥

अलब्धलाभं पृच्छति ॥

मू० धर्मान् भागवतान् ब्रूत यदि नः श्रुतये क्षमम् ।
यैः प्रसन्नः प्रपन्नाय दास्यत्यात्मानमप्यजः ॥ ३१ ॥

भागवतधर्माः कदापि न प्राप्ताः योग्यस्य क्षमाभावे ह्यप्रयोज-कत्वम् अत आह—यदि नः श्रुतये क्षममिति । स्वरूपयोग्यतायां भव-च्छ्रवणानुकूलश्चेत्तदा धर्माणां ताद्रूप्यं भवति । धर्माणां योग-त्वाय पूर्वापेक्षया अधिकफलत्वमाह । यैः प्रसन्न इति । अनुष्ठितै-र्धर्मैर्भगवत्प्रसादो नियतः अपरिमितरधिकारिविशेषणमधिकं पूर्वश्लोके नरत्वमेवोक्तं ततोऽधिकमित्यर्थः । अन्यथात्मनिवेदिनो भगवा-नात्मानं न समर्पयति, प्रसादे कीर्त्यादिदानपुरः सरमात्म-दानं च धर्माणां हेतुत्वं वरं वृणीष्वेत्यापीति प्रसादेऽपि प्रार्थ-नायाः क्रियमाणत्वात् अविशेषेण भक्तसङ्गं धर्माणामनन्य-हेतुत्वाच्च न सम्बन्धेन प्रपद्यतेत्याह—अज इति ॥ ३१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं प्रश्नद्वयं सिद्धं मध्ये नारदो वसुदेवं सावधानं करोति—

नारद उवाच ॥

मू० एवं ते निमिना पृष्टा वसुदेव ! महत्तमाः ।
प्रतिपूज्याब्रुवन् प्रीत्या ससदस्यर्त्विजं नृपम् ॥ ३२ ॥

महत्तमा इति तत्त्वाधिकारमपि सम्पाद्य धर्मान्वक्ष्याम इत्युक्तं भवति, हितं वदति कारयति योग्यं कृत्वा च कारयतीति तथा प्रतिपूजनं बहिरेव ससदस्यर्त्विजमिति वचनात् मुख्यमेकं गौणद्वयं च वक्तव्यमिति सूचितम् ॥ ३२ ॥

तत्र मानुषदेहसत्सङ्गयोः प्राप्तौ मोक्षावश्यकमाव इति तदुपायप्रश्नः भगवद्धर्मप्रश्नश्चेति प्रश्नद्वयं तत्र समुदाये पृष्टस्य मुख्यपर्यवसानादर्तिनिपुणः कविराह सर्वत्र कुशलः तत्र प्रथमस्योत्तरमाह —

कविरुवाच ॥

मू० मन्येऽकुतश्चिद्भयमच्युतस्य पादाम्बुजोपासनमत्र नित्यम् ।
उद्विग्नबुद्धेरसदात्मभावाद्विश्वात्मना यत्र निवर्तते भीः ॥ ३३ ॥

भक्तिमार्गेण गोविन्दभजनमित्युक्तं भवति अन्यस्य स्वपरनिर्वाहकत्वाभावात् उद्विग्नबुद्धेरिति वचनाद्वैराग्यरागाभावावुक्तौ "नत्वेवैतस्य पुनर्मृताय" इति वचनात् [illegible] जन्मफलं पुनर्जन्ममरणाभावायेति तस्सर्वथा अभयं तत्र कर्ममार्गे प्रवाहस्य बाधकत्वं ज्ञानमार्गे त्वनधिकारः विषयिणोऽध्यापातत एवानुद्वेगः ज्ञानोत्तरं तु सर्वथा तद्वैराग्यसाध्यं तन्महत्त्वा न निर्वहति । अतः सुगमोपायप्रश्नयोः कतरार्पणेन च्युतिरहितस्य चरणसेवैवोपाय इति तदभावे मानुषदेहसत्सङ्गयोर्विफलत्वं तस्यैतस्यैव कथं निर्वाह इत्यत आह, मन्य इति ममैवं विचार इत्यर्थः । जगत्प्राणादिकृत्यानेषु काचदूतत्वा मरणपर्यन्तं भगवत्सेवायां न किञ्चिद्बाधकमिति भावः । गृहकृत्या देवा रोगाश्च न तत्र बाधका भविष्यन्तीत्यकुतश्चिद्भयं तत्र हेतुरच्युतस्येति ये हि स्वकृत्यानात् च्युतास्ते बाध्यबाधकतां प्राप्नुवन्ति भगवांस्तु न स्थानात् च्युतः तत्सम्बन्धादच्युता इव भवन्तीत्यर्थः । पादाम्बुजमित्यवताराद्यि समनासन्नादेव गत्वैत समीपे स्थित्वा यथायोग्यकरणमुपासना अत्र मानुषदेहे एतदेव नित्यं परं गमनार्थं साधनमुद्वेगः प्रवाहस्यावृत्तर्णं बुद्धिरिति दुःखमंत्वाच्छात्कस्यासत्य देहस्य तत्रात्मबुद्धिरज्ञानाद्भवति निश्च तदेति फलं "मृत्युरुत्माबयेति" इति न्यायात् । यत्रापासनातामूर्ध्वीकरणमुत्सुक तदूपासनार्थं सङ्कं स्थितस्तदा निवर्तते सर्वात्मनैव सत्यविनिवर्तिकं मृत्युर्निवर्तत इत्यर्थः "भयनाशाऽभयपद्यत" इति वचनात् प्रकिञ्चित्करत्वाय स्त्रीपदप्रयोगः ॥ ३३ ॥

द्वितीयस्योत्तरमाह—

मू० ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये ।
अञ्जः पुंसामविदुषां विद्धि भागवतान् हि तान् ॥ ३४ ॥

त्रिविधा हि भगवद्धर्मा गीतायामुक्ताः "यत्करोषि" इत्यादिश्लोकद्वयेन "मन्मना भव" इत्यपरं उभयेषामप्यात्मलाभहेतुः फलं पर[illegible] सात्त्विका अध्यात्मयुक्ताः आत्मलाभस्य सुसाधनत्वात्पादिना भगवतापि भक्तिज्ञानानन्तरं "सर्वधर्मान्परित्यज्य" इत्युक्तमस्ति । तत्र ये धर्मा [illegible] साक्षात् भगवत्फला एव भगवद्रूपा एव कायवाङ्मनसां क्रमेण समस्तैर्भगवतैव च प्रोक्ता "मन्मना भव" इति ते भागवताः सर्वत्र भगवत्सम्बन्धात् इत्युक्तम् आत्मा भगवान् अञ्जः पुंसामविदुषामिति कर्मभक्तिज्ञानानां सहकारित्वं निषिद्धं एकत्वं हि स्वतन्त्रः प्रत्येकं ते भगवत्प्राप्त्युपायाः अत्रापि सर्वप्रासिद्धिरिति इत्युक्तं विजातीयसहिताः प्रत्येकं ते उपाया मार्गाः "मनसैवानुद्रष्टव्यः" इति ज्ञानमार्गः द्वितीयतृतीयौ कर्मणो नम इति सदुपदिशन्ति कर्तव्यनिर्धारणेन भगवति साधारणं सर्वेषां त एव प्रधानभूता मिलिता भगवद्धर्मा इति विशेषः स्वतन्त्रफलरूपत्वं तेषां वक्तुं वाक्यद्वयस्तयोर्निर्देशप्रतिनिर्देशौ निरुक्ताविति नात्र सन्देहः कर्तव्यः ॥ ३४ ॥

सर्वमार्गापेक्षयोत्कर्षं वक्तुं प्रवाहमर्यादयोर्बाधकत्वाभावमाह—

मू० यानास्थाय नरो राजन्न प्रमाद्येत कर्हिचित् ।
धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह ॥ ३५ ॥

तेषामास्थितिः कायवाङ्मनसां तदीयत्वं लोके हि बहवः प्रमादाः सम्भवन्ति कालविशेषेण च राज्ञां चायमनुभवः मनुष्याधिकारफलं वदन्ति इति प्रवाहे बाधाभावमुक्त्वा मर्यादायामप्याह, धावन्निति । शीघ्रदेहद्वयदेशगमनं धावन मध्ये मध्ये क्रियालङ्घनं वा शास्त्रगुरू श्रुतिस्मृती वा नेत्रे स्खलनं गतिकरणाच्च विभातः पतनमन्यथावितः इहेति धर्मेषु सत्यवालुकाभूमिवत् त्वरायां साधनपरित्यागे शास्त्रगुरुलङ्घने फलविलम्बः फलाभावो वा न भवतीत्यर्थः ॥ ३५ ॥

एवं श्लोकद्वयेन मुख्या भागवता धर्मा उक्ताः प्रथमानाह श्लोकत्रयेण कायेनेत्यादिना । "यत्करोषि" इत्यत्र लौकिके कर्तृत्वभोक्तृत्वे होमदाने पूजिकागृह कर्तव्य तपोनामकानुष्ठानमिति लोकवेदयोः समर्पणमुक्तम् । ततश्च फलस्य समर्पणस्य सुखदुःखाभाव फलं चाक्त त्यागयोगसहितस्य मोक्षतारा साक्षात्कृत्ता "सन्यासयोगयुक्तात्मे" ति तथा [illegible] विशेषेण वदति, प्रपञ्चयति । प्रश्ने वचनात् आत्मनिवेदन एव सर्वस्य समर्पणार्पि पूर्वस्वभावानुवृत्त्या भगवत्सान्निध्यं च निस्मृत लौकिककर्तृत्वेन करोति तस्यैव समर्पणमिति विशेषः त्यागो भगवद्भजनार्थं इति सन्यासस्थाने भक्तिरूपा कार्यसमर्पणं भक्तियोगश्चेति श्लोकत्रयेण निरूपयन् आद्यमाह—

मू० कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वानुसृतस्वभावात् ।
करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत् ॥ ३६ ॥

ज्ञानप्राधान्येन क्रियाप्राधान्येन वा करणं तत्र कायवाङ्मनांसि कर्मेन्द्रियाणि क्रियात्मकस्वरूपाणि ज्ञान [illegible] करणं [illegible] करणं पृथक्त्वे [illegible] निषिद्धानि [illegible] कानां च कृतानि तु [illegible] समर्पणानीति न किन्तु [illegible] एतया कृतमपि इत्यर्थं समर्पयेत् ॥ ३६ ॥

द्वितीयमाह—

मू० भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः ।
तन्माययातो बुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मा ॥ ३७ ॥

"मामेव ये प्रपद्यन्ते" इति [illegible] सर्वेषामन्यथा मनुष्यामस्मात्—[illegible] अतो देहोऽहममेति विपर्ययः । सर्वस्य देहभूतस्य [illegible] तदपि स्मृतिमायया पुन-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कृतम् अलौकिकतापहारि हि महर्षिः प्रतिपुरुषं तथात्वपरिज्ञाना-वेक एव निर्धारितमेकमुपाय वक्ति । एकवचनं स्थूलधियो बहि-र्मुख ज्ञानमार्गकरहिता इत्यर्थः । तत्र स्थूलधियां तरणोपायो वक्तव्यः "मायेन ये पश्यन्ति" इति एवकारेण सर्वेषामनुपायत्वं प्रतीयते स्थूलबुद्धि कथापायस्तैवोपायो वक्तव्य इति नाग्रहः किन्तु स्थूलबुद्धीनामपि यथा तरणं सिद्ध्यति तथोपायो वक्तव्यः तत्रो-पायो नारायणपरत्वमेव तद्भक्तिरपि सा भगवद्धर्मैर्भगवच्छास्त्रे साध-नत्वेन प्रतिपादितैः तेन गुरुसेवया सा च गुरुशरणं गतस्य-तच्छरणागमनमैहिकामुष्मिकफलभोगनिरागाभावे न भवति "न तस्य नरकग्रहणाय" इति वचनात् । तत्रैहिकवैराग्यं साधनमेवेदम् तत्र लौकिकानि कर्माणि स्वयं च परित्यजेत्युक्ते न परित्य-जति ॥ १७ ॥

अनुभवस्य बलिष्ठत्वादनुभवमेवाह-

प्रयुक्त वचात्र ।

मू० कर्माण्यारभमाणानां दुःखहत्यै सुखाय च ।

पश्येत्पाकविपर्यासं मिथुनीचारिणां नृणाम् ॥ १८ ॥

नृणामिति लौकिकानां मिथुनीचारिणामित्याग्रहः प्रथमतः "सुख-मस्यात्मनो रूपम्" इति ज्ञानेन कर्म आरभ्य एव विपरीतं भवति कर्माणीति बहुवचनात्पुनःपुनरारम्भः कर्मणा दुःखमित्य-नुभवः सुतरां फलाभावे अपेक्षितसुखकाङ्क्षोऽपि पुनःपुनरा-रम्भं गच्छति तन्निवृत्तिविपर्यासेऽपि विपर्यासमेव पश्येत्-

"उपक्रमानुरोधेन स्वयं चापि तथा निधिः ।

स्वस्याभावकता भाग्या परकष्टान एव हि ।

प्रवाहात्तु पृथक् ज्ञानं प्रतिकूलकार्थिनः ।

शास्त्रतः सर्वनिर्णीतं यस्य तस्यैवमुच्यते ॥

प्रयासवर्जिता नात्र निर्वाणं इति मे मतिः ।

एवं स्त्री तत्सङ्गपरित्याग उक्तः ॥ १८ ॥

धनपरित्यागमाह—

मू० नित्यार्तिदेन वित्तेन दुर्लभेनात्ममृत्युना ।

गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥ १९ ॥

"तावच्चिन्तनमारभ्य विनाशावधिदुःखदम् ।

मृत्युस्तु सुलभो लोके दुर्लभं धनमेव हि" ॥

एतदपि मृत्युरूपम् एतादृशेन का प्रीतिः तेन साधितैर्वा गृहापत्याप्तपश्वादयः अन्येषामस्थैर्यात् —

"मूर्त्यादिसुलभः सिद्धाः साध्यानां गृहशोचना ।

देहे तु यस्य वैराग्यं स पूर्वत्र निरूपितः ॥ १९ ॥

पारलौकिकवैराग्यमाह—

मू० एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् ।

सतुल्यातिशयध्वंसं यथा मण्डलवर्तिनाम् ॥ २० ॥

"यथाज्ञानतो ज्ञातं वैदिकं कर्मणैव च ॥

पौराणं च ततो ज्ञातं फलं गृहगतेन हि ॥

अक्षयतृतीयाश्राद्धादि तथानन्तव्रतादि च ॥

समर्पितं प्रति विष्णौ ततोऽपि फलितं तथा ॥

अतो नश्वरमित्युक्तं पृथक् भक्तिफलात् क्रमात् ॥

सतुल्यातिशयध्वंसमन्तःकरणदोषतः ॥

ज्ञानभक्तिफलं मोक्षो नाश दोषस्ततो भवेत् ॥

ऐश्वर्यमहितेष्वेवमिति इत्यनन्तक्रमः ॥

स्वर्गं मुक्तौ यतो लोको मण्डलाधिपलाञ्छनः ॥

लोकद्वयफलं यस्मादनयोरिति निश्चयः ॥ २० ॥

अतो मोक्षफले हेतुमूलभूतमाह हि—

मू० तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ।

शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥ २१ ॥

"निराश्रयं यथा लोके कल्पवृक्षं निगद्यते ॥

हरेः कृपानिधिशोऽपि गुरुहीनस्यैव हि ॥

यथा भक्तिः समन्तोक्ता गुरुसेवापि तादृशी ॥

जिज्ञासाबोधमात्रत्वं तथापि विनिगद्यते" ॥

यदेव पृच्छति तदेव वदिष्यतीति उत्तम श्रेय इत्युक्तं च गुरुर्मुक्तः लोके ज्ञापकं रूपमुपरमाश्रयमिति सर्वसन्देहवारणाय वेधदीक्षान्तरूपत्वमपेक्षायां शास्त्रनिष्णातत्वम् —

मार्गान्तररहितत्वं हि तत्र बाधको न समागमः ॥

प्रपञ्चितं तत्प्रथमे शुको वक्ता न नारदः ॥

सत्यमेव च दृष्टान्त दर्शनार्थं तथापि तु ॥ २१ ॥

सर्वज्ञत्वात्सर्वं वदिष्यतीत्याशयेनाह—

मू० तत्र भागवतान् धर्मान् शिक्षेद्गुर्वात्मदैवतः ।

अमाययानुवृत्त्या यैस्तुष्येदात्मात्मदो हरिः ॥ २२ ॥

गुरोरात्मत्वे स्नेहः श्रद्धा भगवत्त्वेन ज्ञानं च देवतात्वे मन्त्र-शास्त्रेऽप्युक्ता मन्त्रा गुरुमुखश्रवणरहिता न फलन्तीति तत्र शिक्षा-गुरुस्तोषोपायमाह, निष्कपटानुवृत्तिभिः भागवतधर्माणामेव शिक्षायां हेतुमाह, तुष्येदिति । स्वस्वसन्तोषाभावे हेतुत्वेन न सिद्ध्येत् फलदातुरस्तोषे फलम् अतः स्वपरार्थसाधका धर्मा इति किञ्च-दुःखाभावोऽप्यनुषङ्गिकः ॥ २२ ॥

तत्र प्रथमं स्त्रीपुत्रादिप्रवाहनिवृत्तिः कर्ममार्गप्रवेशः ज्ञान-मार्गप्रवेशश्चोच्यते तदभावे भागवतधर्मानधिकारात् तत्र प्रथमं प्रवाहनिवृत्तिमाह—

मू० सर्वतो मनसोऽसङ्गमादौ सङ्गं च साधुषु ।

दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम् ॥ २३ ॥

संसक्तिरूपं गमनम् आकर्षणं मनसा हि सर्वं भवतीति स्वाश्रयः साधनेषु प्रथमसत्सङ्गः लोकानां परित्यागः पूर्वं न सम्भवति, सन्निवेशमाह, दीनेषु दया समेषु मैत्री उत्तमेषु प्रश्रयः यथोचितमिति देशकालानुरोधः ॥ २३ ॥

कर्ममार्गप्रवेशमाह—

मू० शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम् ।

ब्रह्मचर्यमहिंसां च समत्वं द्वन्द्वसंज्ञयोः ॥ २४ ॥

कर्म त्रिविधं कायिकादिभेदेन तत्र त्रयं त्रयमेकैकस्य । शौचं मृदादिभिः तपः कृच्छ्रादिः शीतादिसहनं तितिक्षा इति कायिकम् । वृथालापपरित्यजनं वेदाभ्यासः सर्वत्र प्रियभाषणं वाचि-निकम् । मानसे हि कामजयः क्रोधजयः वैषम्याभावश्चेति निर्दोषे हि द्वन्द्वेनैव तयोः संज्ञा निर्दिष्टा यथा सुखदुःखे प्रियाप्रिये इति ॥ २४ ॥

ज्ञानमार्गप्रवेशमाह—

मू० सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम् ।

विविक्तचीरवसनं सन्तोषं येन केनचित् ॥ २५ ॥

आत्मेश्वरयोरैक्ये सिद्धे तस्य सर्वत्र निरीक्षणं ज्ञानम्—

(१ ते देवानुचरा दृष्ट्वा स्त्रियः श्रीरिव रूपिणीः।
गन्धेन मुमुहुस्तासां रूपौदार्यहतश्रियः ॥ १३ ॥
तानाह देवदेवेशः प्रणतान् प्रहसन्निव।
आसामेकतमां वृङ्ध्वं सवर्णां स्वर्गभूषणाम् ॥ १४ ॥
ओमित्यादेशमादाय नत्वा तं सुरवन्दिनः।
उर्वशीमप्सरःश्रेष्ठां पुरस्कृत्य दिवं ययुः ॥ १५ ॥
इन्द्रायाऽऽनम्य सदसि शृण्वतां त्रिदिवौकसाम्।
ऊचुर्नारायणबलं शक्रस्तत्रास विस्मितः ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अत एव तपः वृथोत्सृजन्ति चकारात् कोपविषयस्य जनस्य पापं गृह्णन्ति ॥ ११ ॥

तेषां कामादीनाम इति इत्येवं गृणतां विभुः नारायणः स्त्रियः इच्छयाऽऽविःकृताः स्त्रीः भगवन्! आज्ञापयेत्येवं शुश्रूषां कुर्वतीः भगवतापि साधुसमाधिवति स्वर्चिताः सुष्ठु अर्चिताः अद्भुतदर्शनाः महदाश्चर्यदर्शनाः कामादिनियोजकेन्द्रादिभ्यश्चात्यन्तमुत्कृष्टदर्शनाः तत्सौन्दर्यादिदर्पहराः दर्शयामास ॥ १२ ॥

भाषा टीका।

हे नरदेव! परीक्षित जी! इस प्रकार से अभय देनेवाले भगवान् के कथन को सुनकर कामादिक देवता लज्जित होकर मस्तकों को नीचा करके बड़ी अधीनता से भगवान् से बोले, कि—हे प्रभो! यह ऐसी बात आप के विषय में कुछ आश्चर्य नहीं है, क्योंकि? आप माया से परे हैं और विकार रहित हैं केवल अपने आत्मस्वरूपही में रमण करने वाले और मुनिजन आप के चरण कमलों की सेवा करते हैं ॥ ९ ॥

जो पुरुष आप की सेवा करते हैं उनके ऊपर देवता लोग बहुत विघ्न करते हैं क्योंकि वे उपासक लोग देवताओं के स्थानों को भी लांघकर आप के परमपद को जाने वाले हैं, तिस से और जो लोग कर्मकांड में देवताओं को बली देते हैं तिनका विघ्न देवता नहीं करते हैं परन्तु तौ भी यदि आप भक्तों की रक्षा करने वाले हो तो वे उपासक लोग विघ्न करने वालों के मस्तकपर पैर रखकर आप के स्थान को चले जाते हैं ॥ १० ॥

संसार में कोई तपस्या वाले ऐसे हैं कि जो क्षुधा तृषा और तीनों कालों के दुःख और गुण कृत दुःख पवन के जिह्वा रस के लिंग इंद्रिय के दुःख इस काम आदि अपार समुद्रों के पार उतर कर निष्फल केवल क्रोध के वश होजाते हैं सो गौ खुर के गार जल में डूब जाते हैं बड़ी दुष्कर तपस्या को व्यर्थ ही छोड़ देते हैं ॥ ११ ॥

इस प्रकार से उन के स्तुती करतेही में भगवान् ने बड़ी अद्भुत रूप वाली स्त्रियों को दिखा दिया जोकि सुन्दर प्रसंशनीय थीं और शुश्रूषा कर ने में हाजिर होरहीं थीं ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

रूपिणीर्मूर्त्तिमतीः श्रीरिव ताः स्त्रियः स्त्रीर्दृष्ट्वा तासां तु रूपस्यौदार्येण महत्त्वेन हता श्रीः कान्तिर्येषां ते ॥ १३ ॥

वृङ्ध्वं वृणीध्वं [illegible] इति [illegible]ऽऽह सवर्णां समानरूपाम [illegible]रूपेति [illegible] भवतु तथाऽपि स्वर्गस्य भूषणरूपाम ॥ १४ ॥

सुरवन्दिनो देवभृत्याः ॥ १५ ॥

इन्द्राय इन्द्रं प्रति नारायणबलमूचुः [illegible] प्राप्तो विस्मितश्च तत्र [illegible] ॥ १६ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपनी टिप्पणी।

स्त्रियः स्त्रीः तासामुर्वश्यादीनाम ॥ १३ ॥

तान् कामादीन् तेषां तिरस्कारे शमितां हासानौचित्यादित्यन्येन मुखप्रसादसूचित्यते। यद्वा, भगवदाराधनतत्पराणां न विघ्नाः प्रभवन्तीति प्रहसन् तथाच इत्यनाविष्कार्थं स्वर्गभूषणरूपामिति व्याख्यानाद्भूषणामित्येव पाठः ॥ १४ ॥

तु ओमित्यङ्गीकार आदेशमाज्ञाम ॥ १५ ॥

तत्र नारायणबले विस्मितो बभूव ॥ १६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

वृङ्ध्व वृणीध्वम ॥ १४—१६ ॥

१ ता इति वीर० पाठः।

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ता इति देवानुचराः कामादयः श्रीरिव रूपिणीः सुन्दरमूर्तिमतीः ता नारीर्दृष्ट्वा तासां रूपौदार्येण रूपसौन्दर्येण हृता श्रीः कान्तिर्येषां ते तासां गन्धेन शरीरसौरभ्येण मुमुहुः पारवश्यं प्रापुः ॥ १३ ॥

किञ्च, देवदेवो ब्रह्मा तस्यापीशः श्रीनारायणः तान् कामादीनाह-तत्राह, आसां स्त्रीणां मध्ये एकतमां वृङ्ध्वं वृणीध्वं क वयं वराकाः क चेमा इति चेत्तत्राह सवर्णां समानरूपाम् इति न कान्त्यस्मदनुरूपा इति चेत्तत्राह, स्वर्गभूषणामिति । स्वर्गस्य भूषणरूपाम् इति ॥ १४ ॥

ओमित्यादि मुनिवाक्यम् ते सुरवन्दिनो देवभृत्याः कामादयः आदेशं भगवदाज्ञाम् ओमित्यङ्गीकृत्य तं प्रणम्य च सर्वस्त्रीणाम-प्सरःश्रेष्ठामादाय तां च पुरस्कृत्याग्रतो निधाय दिवं स्वर्गं ययुः ॥ १५ ॥

गत्वा च किं चक्रुरिन्द्रश्च किं कृतवांस्तदाह-इन्द्रायेति । सदसि त्रिदिवौकसां देवानां शृण्वतां सताम् इन्द्राय नमस्कृत्य श्रीनारायणस्य बलम् ऊचुः शक्र इन्द्रस्तत्र तासां विस्मितः सन् तत्रास अभैषीत् ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रूपिणीः प्रशस्तरूपाः ॥ १३ ॥

वृङ्ध्वं स्वीकुरुत ॥ १४ ॥

सुराणां वन्दिनः वन्दिग्रहणापटवः ॥ १५—१६ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अदेयदानं वक्तुं तदपेक्षमाह—देवानुचरा अपि इन्द्राद्यन्तः-पुरस्त्रीदर्शनेऽपि मोहाभावाय तादृशोऽपि सर्वजगत् श्रियो मूर्ति-मत्य इव ता जाता इति तासां पद्मकिञ्जल्कगन्धानां गन्धेनैव मोहं प्राप्ताः कुतः पुनर्ज्ञानमित्यर्थः । श्रीरिति द्वितीया बहु-वचनं गन्धेनैव यत्र मोहः किं पुनः स्पर्शनादिभिरिति भावः । लोलुतां वक्तुं विशेषणान्तरमाह—तासां रूपौदार्याभ्यां हृता श्रीर्येषामिति उत्तरसम्बन्धे षष्ठ्या अलुक् श्रीर्द्विविधा: कान्ति-र्धनं चेति रूपेण कान्त्याधारेण कान्तिनाशः औदार्येण च धनस्य च औदार्याभावे धनं शिलावत् अथवा रूपस्य यदौ-दार्यं तासां रूपसन्निधानमात्रेण सर्वे रूपवन्तो भवन्तीति पूर्वकान्तिनाशः ॥ १३ ॥

तेषामभिप्रायं ज्ञात्वा अदेयमपि दत्तवानित्याह—अधि-काराभिनिवेशं दृढं मत्वा सन्तुष्ट इव ददातीति देवानां देवा इन्द्रादयस्तेषामीश इति सर्वदयापीन्द्रस्य भोगः अतः अपकारिभोगपर्यवसानाच्च दद्यात् तेषां दोषाभावमाह—प्रण-तानिति । मोहमपि प्राप्य ते न पश्यन्तीत्यर्थः । अत एव द्रष्टुमपि भीतान् दृष्ट्वा जातमपि हास्यं दोषाभावायोपसंहृतमित्याह—प्रहसन्निवेति । भवतामिन्द्रस्य चोपकाराय सवर्णां स्वर्गभूषणा-मिति समानो वर्णो यस्या इति पञ्चमी ॥ १४ ॥

अननुभावप्रवृत्तिं वक्तुं हेतुमाह—ओमित्यङ्गीकारे आदा-मादाय नमनेन सेवकत्वख्यापनं दत्तग्रहणे कीर्तिख्यापने च हेतुः वन्दिन इति अप्सरस्त्वमेतेषां सुखाय ॥ १५ ॥

अनुभावमाह—कामादिजयो वशीकरणम् इन्द्रादिमानभङ्ग-श्चेति यत् तत्रासेति भयम् यथासुखं करिष्यतीति चरित्रस्य विस्मयः । एवं देवविस्मापनं नारायणचरित्रमुक्त्वा क्रमेणोप-कारानुसारेण सर्वावतारान् सङ्क्षेपत आह—यावदध्यायसमाप्ति तत्र क्रियापेक्षया ज्ञानस्य प्राधान्यं तत्रापि प्राधान्यं सनकादीनां तेन प्रथमं हंसचरित्रं त्रयोदशाध्याये स्पष्टम् ॥ १६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तेषां पराभवदर्शनेन प्रहसन् इवस्मितगाम्भीर्येण महाक्रोधो व्यञ्जितः वृङ्ध्वं वृणीध्वं क वयं वराकाः क चेमा इति चेत्तत्राह—सवर्णां समानवर्णां अस्मदनुरूपां विभूतिरूपां प्राकृतीमपि काञ्चिदित्यर्थः । तथापि स्वर्गस्य भूषैव भविष्यतीत्याह, स्वर्गेति ॥ १४ ॥

आदेशमादाय आज्ञां गृहीत्वा सुरवन्दिनो देवभृत्याः ॥ १५ ॥

तत्रास अहो मया अपराद्धमिति भयं प्राप्तः ॥ १६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

देवस्येन्द्रस्यानुचराः ते कामादयः रूपिणीः प्रशस्तरूपाः किं बहुना ? श्रीरिव श्रीसारूप्ययुक्ताः स्त्रियस्ताः स्त्रीर्दृष्ट्वा तासां रूपस्यौदार्येणोज्जृम्भितत्वेन हृता श्रीः कान्तिर्येषां ते तथाभूताः सन्तः तासां गन्धेन मुमुहुः ॥ १३ ॥

देवाः इन्द्रादयः तेषां देवाः ब्रह्मशिवादयः तेषामीशः इव-शब्दः स्वभावादेव प्रहसितमुखत्वं भगवतो द्योतयति-वृङ्ध्वं वृणी-ध्वम् । ननु, अस्कुणेन गरुडस्येव मादृशैः एतासां स्वीकरणं न युक्तमित्यत्राह-सवर्णामिति । समानरूपाम् । ननु, सवर्णा अासु नास्तीत्यत्राह—स्वर्गभूषणामिति । एकस्य प्राणिनस्तु का कथा सर्वोऽपि स्वर्गः आसां मध्ये एकतमाया अपि तुल्यो यद्यपि नास्ति तथापि स्वर्गालङ्कारतयैकां स्वीकुरुतेति फलितोऽर्थः ॥ १४ ॥

सुरस्येन्द्रस्य वन्दिनो भृत्याः ॥ १५ ॥

इन्द्राय इन्द्रं प्रति आनम्य प्रणम्य नारायणस्य बलमैश्वर्य-मूचुः तदा शक्रः विस्मितः तत्रास भीतश्च ॥ १६ ॥

### भाषा टीका ।

इन्द्र के सेवक उन काम देवादिकों ने अब रूपवती लक्ष्मी सरीकी उन स्त्रियों को देखा तब उनके रूपकी सुन्दरतासे इनकी शोभा हतगई और उनके गन्ध से मोहित होगये ॥ १३ ॥

जब वे देवता नमस्कार करते थे तब भगवान् हसते सरीके उन से बोले कि इन अप्सराओं के मध्य में से एक किसी को अपनी स्त्री देख कर तुम लेजाओ जो कि तुमारे स्वर्ग की भूषण रूप हो जावेगी ॥ १४ ॥

हंसस्वरूप्यवददच्युत आत्मयोगं दत्तः कुमार ऋषभो भगवान् पिता नः ।
विष्णुः शिवाय जगतां कलयाऽवतीर्णस्तेनाऽऽहृता मधुभिदा श्रुतयो हयास्ये ॥ १७ ॥
गुप्तोऽप्यये मनुरिलौषधयश्च मात्स्ये क्रौडे हतो दितिज उद्धरताऽम्भसः क्ष्माम् ।
कौर्मे धृतोऽद्रिरमृतोन्मथने स्वपृष्ठे ग्राहात्प्रपन्नमिभराजममुञ्चदार्त्तम् ॥ १८ ॥
संस्तुन्वतोऽब्धिपतितान् श्रमणानृषींश्च शक्रं च वृत्रवधतस्तमसि प्रविष्टम् ।
देवस्त्रियोऽसुरगृहे पिहिता अनाथा जघ्नेऽसुरेन्द्रमभयाय सतां नृसिंहे ॥ १९ ॥
देवासुरे युधि च दैत्यपतीन् सुरार्थे हत्वाऽन्तरेषु भुवनान्यदधात्कलाभिः ।
भूत्वाऽथ वामन इमामहरद्बलेः क्ष्मां याञ्चाच्छलेन समदाददितेः सुतेभ्यः ॥ २० ॥

भाषा टीका ।

तब वे देव के मुख्य गण भगवान् की आज्ञा का अङ्गीकार करके नमस्कार करके सब अप्सरों में श्रेष्ठ उर्वशी को ले आगे करके स्वर्ग को चले गये ॥ १५ ॥

इन्द्र की सभा में जाकर नमस्कार करके सब देवतों के सुनतेही श्रीनारायण के प्रभाव को उनने वर्णन किया जिसको सुनकर इन्द्र भी विस्मय को प्राप्त होकर बहुत डरगये ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्यान्यप्यवतारचरितानि आह—हंसस्वरूपीति । दत्तो दत्तात्रेयः कुमारः सनकादिः नः पिता ऋषभश्च विष्णुरेव कलयाऽवतीर्णः सन्नात्मयोगमवदत, तेन विष्णुना हयास्ये हयग्रीवावतारे मधुभिदा सता तत्र पातालतः सनातन्यः श्रुतय आहृताः ॥ १७ ॥

इला पृथ्वी ओषधयश्च गुप्ताः क्रौडे च वाराहावतारे ग्राहाद्गजेन्द्रममुञ्चन्मोचयामास एवमादौ यत्रावतारे नाम नास्ति तत्र विष्णुः शिवाय जगतां कलयाऽवतीर्ण इत्यनुवर्तनीयम् ॥ १८ ॥

संस्तुन्वतः स्तुतिं कुर्वाणान् ऋषीन्वालखिल्यान्कश्यपार्थे समिदाहरणे गोष्पदे निमग्नानिन्द्रेणोपहसितानुद्धृत्याऽऽपद्भ्योऽमोचयत् तमसि ब्रह्महत्यायां प्रविष्टं मोचयामास असुरगृहे पिहिता निरुद्धा या देवस्त्रियस्ताश्चामुञ्चदनेकावतारैः ॥ १९ ॥

अन्तरेषु सर्वमन्वन्तरेषु कलाभिर्मूर्तिभिर्भुवनान्यदधात्पाल-[illegible]व इमां क्ष्मां समदाद्ददौ ॥ २० ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

आत्मयोगं ज्ञानयोगं तत्र हंसः सनकादिभ्यः दत्तो यदुप्रह्लादादिभ्यः कुमारो नारदाय ऋषभश्चात्मजेभ्यः ज्ञानयोगमवददिति ज्ञेयं ततः मधुरैस्यात् ॥ १७ ॥

गुप्त इति युग्मकं हरिसञ्ज्ञकेऽवतारे ग्राहाद्गजेन्द्रं मोचयामास कुतो मोचयदित्यपेक्षायां कश्यपार्थमित्याद्युदाहृतम् ॥ १८—१९ ॥

दधातेरप्यनेकार्थत्वेन अपालयदिति व्याख्यातम् अपेत्यर्थान्तरे ॥ २० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

दत्तः कुमारो दत्तात्रेयः अत्रापि भगवान् कलयावतीर्णः इत्यनुषङ्गः ॥ १७ ॥

मात्स्ये अप्यये प्रलये इलां भूमितरणम् अमुञ्चत अमोचयत् ॥ १८ ॥

पिहिता येनेत्यध्याहारः ॥ १९ ॥ २० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अन्यान्यप्यवतारचरित्राणि आह—हंसस्वरूपीति । अच्युतो विष्णुर्हंसादिरूपेण जगतां शिवाय मङ्गलाय कलयाऽवतीर्णः सन्नात्मयोगं जीवात्मपरमात्मयाथात्म्यज्ञानयोगमवदत् उपदिष्टवान् इति सम्बन्धः । तत्र दत्तो दत्तात्रेयः कुमारः सनकादिः नोऽस्माकं कव्यादीनां पिता भगवानृषभश्च तेन विष्णुनैव हयास्ये हयग्रीवावतारे मधुभिदा मधुनामासुरमभिनदिति तथाभूतेन श्रुतयो वेदा अपहृता आनीताः ॥ १७ ॥

तथा मात्स्येऽवतारे मनुः सत्यव्रतः गुप्तो रक्षित इला पृथ्वी ओषधयश्चकारादृषयश्च गुप्ता इत्यर्थः । क्रौडे वराहावतारे ऽम्भसः प्रलयजलात् क्ष्मां भूमिम् उद्धरता विष्णुना दितिजो हिरण्याक्षो हतः कौर्मे कूर्मावतारेऽमृतोन्मथननिमित्तं स्वपृष्ठेऽद्रिर्मन्दरो धृतः तथा ग्राहाद्गजेन्द्रं शरणागतममुञ्चत् अमोचयत् यत्रावतारनाम न दृश्यते तत्र विष्णुः शिवाय जगतां कलयावतीर्ण इत्यनुसन्धेयम् ॥ १८ ॥

संस्तुन्वतः स्तुतिं कुर्वाणानृषीन् वालखिल्यान्कश्यपार्थं समिदाहरणे गोष्पदे मग्नानिन्द्रेण उपहसितान् उद्धृत्यापद्भ्योऽमोचयत् तमसि ब्रह्महत्यायां प्रविष्टं मोचयामास असुरगृहे हिरण्यकशिपुगृहे

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पिहिता निरुद्धा या अनाथा देवस्त्रियस्ताश्चामोचयत् नृसिंहः सन् सतां साधूनामभयायासुरेन्द्रं हिरण्यकशिपुं जघ्ने हतवान् ॥ १९ ॥

देवासुरे युधि युद्धे सुरार्थे इन्द्राद्यर्थं दैत्यपतीन् हत्वाऽन्तरेषु सर्वमन्वन्तरेषु कलाभिर्मूर्तिभिरवतारैरिति यावत् भुवनान्यदधादपालयत् वामनो भूत्वा याच्ञा व्याजेन बलेः सकाशादिमां क्ष्मामहरत्तां चादितेः सुतेभ्यः इन्द्रादिभ्यः समदात्प्रायच्छत् ॥ २० ॥

———

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ये ये हरेरवतारास्ते ते सर्वेऽप्येवंविधमाहात्म्याम्बुधय इति ज्ञाप्यते—हंसस्वरूपीति । विष्णुः कलया हंसरूप्यवतीर्णो जगतां शिवायात्मयोगं परमात्मज्ञानमवदत् एवं दत्तादावप्यन्वेतव्यं कुमारो नाम हरेरूपान्तरं सनत्कुमारादियोगीश्वरज्ञानोपदेष्टा—

> "कुमारनामा तु हरिर्ब्रह्मचर्यवपुः स्वयम् ।
> सनत्कुमाराय परं प्रोवाच जगदीश्वरः" ॥

इत्यनया स्मृत्या—

> "विष्णोः सनत्कुमाराख्याच्छुश्रुवुर्ज्ञानमुत्तमम् ।
> सनत्कुमारप्रमुखा योगीशाः परमेश्वरात्" ॥

इत्यनया चोक्तार्थः सिद्ध इति हयास्ये हयग्रीवावतारे तेन मधुभिदा श्रुतय आहृताः ॥ १७ ॥

मात्स्येऽवतारे इला भूमिर्गुप्ता मत्स्ये प्रलये मत्स्यगतो नाम मनुः सप्तऋषयश्च गुप्ताः अम्भसः क्ष्मामुद्धरतो हरेः क्रोडे वराहावतारे दितिजो हिरण्याक्षो हतः अमृतोत्पत्तये क्षीरसमुद्रोन्मथने मन्दराद्रिः तापसो नाम हरिरिभराज ग्राहादमुञ्चत् ॥ १८ ॥

व्यासावतारे संस्तुन्वतः श्रमणान्निःसङ्गानृषींश्च संसाराब्धिपतितान् संसाराब्धेरमूमुचत्—

> "सुपर्णा ऋषयो व्यासं नाथमाना ययुः सदा ।
> ध्वान्तं निवर्तयास्माकं मुमुक्षूनिति च वादिनः" ॥

इति वचनात् । व्यासावतारे इयं कथेति ज्ञायते नृसिंहे नरसिंहावतारे तमपि प्रविष्टं कर्तव्यमूढमिन्द्रं वृत्रवधतो दोषादमूमुचत् सतामभयायासुरेन्द्रं जघ्ने असुरगृहे पिहिताः अनाथाः देवस्त्रियः सत्स्वस्थ व्यमोचयदिति—

> "स्मरणात्तु नृसिंहस्य शक्रो मुक्तो वृत्रवधात् ।
> हिरण्यकहृताश्चापि तथैवाप्सरसां गणाः" ॥

इति वचनात्सिद्धेयं कथा ॥ १९ ॥

उपेन्द्ररूपो हरिः देवासुरयुद्धे सुरार्थे दैत्यपतीन् हत्वा अन्तरेषु मन्वन्तरेषु भुवनान्यदधात् वामनो भूत्वा याच्ञाच्छलेन बलेरिमां क्ष्मामाहरत् हृत्वा च तामदितेः सुतेभ्यः समदादित्यन्वयः तदुक्तं—

> "उपेन्द्ररूपी भगवान्प्रतिमन्वन्तरं विभुः ।
> असुरान्हन्ति नियत श्राद्धदेवे च वामन" ॥

इति ॥ २० ॥

———

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तथाऽन्यान् प्रमाणपर्यन्तानाह—अच्युत इति । सर्वरूपेष्वपि स्वरूपादप्रच्युतः आनन्दरूप एव तत्तदाकारं प्रदर्शयतीत्यर्थः अवदत्स्वच्युत आत्मतत्त्वमिति पूर्वार्द्धे सर्वत्रानुषङ्गः हंसदत्तात्रेयसनत्कुमारऋषभा ज्ञानकलावतीर्णाः तृतीयपादस्य सर्वत्रावतारेष्वनुषङ्गः फलवाक्यस्य कथयति ज्ञानशक्त्या क्रियाशक्त्या वा जगतामिति त्रिलोकस्थानां तत्तदुपकारसिद्ध्यर्थं बहुवचनम् । सनत्कुमारास्त्रिविधाः सहजरूपाः समागताः शुद्धसत्त्वस्वरूपे आविर्भूताः अत एव च तत्र पुरुषः शरीरे नारायणः स्वतः शरीरे च तदन्ये शरीरे कृष्णः अत एकयमाभिमाने आधाराधेयभावो निरभिमाने हंसस्तु आनन्दमयः प्रियशिरस्त्वादिरूपः हंसस्यैव स्वरूपमस्यास्तीति हंसस्वरूपी अतोऽस्य भिन्नतया निर्देशः ततश्चाधारः कुमारस्याविशेऽप्यवतारत्वत्वम् ऋषभे विशेषमाह—भगवान् पिता स इति । षड्गुणैश्वर्याविर्भावो भगवन्मार्गप्रवर्तकश्च अजनाभनामाऽऽप्यवर्षादित्यैश्वर्यं परिपालनं वीर्यं शतकृत्व इति धर्मो वा जनपद इति यशः जयन्त्यामिति श्रीः नायं देह इति ज्ञानं सङ्गृहीत इवेति वैराग्यम् अस्मज्जनत्वं भगवन्मार्गः तेनेति सहितस्तृतीयपादोऽपि समचतुर्षु ज्ञानप्राधान्येन वेदोद्धरणं हयग्रीवे मधुकैटभवधो वेदोद्धरणं च चरित्रं कर्णाभ्यामुत्पद्यमानौ शब्दमिन्द्रियमन्तर्भिन्नोत्पन्नौ तद्येन तदुदरात् शङ्खं निवेश्याहृताः श्रुतय इत्यर्थः । सर्वोऽपि प्रहणं पक्षे ज्ञानोपयोगाय प्रपञ्चस्य मधुकैटभावपीन्द्रियापादिता मायेति तामसी माया तस्यामुत्पन्नः कैटभः प्रवाहपोषक इति तद्वधे मर्यादासिद्धिः ॥ १७ ॥

क्रियापादमवतारानाह—इलामिति । वेदोद्धरणमात्स्यात् [illegible] मत्स्ये [illegible] प्रलये मनुः इला ओषधयश्च चकारादिदाः [illegible] कृत्वा आहृता महाकालप्लवनेच्छाया[illegible]: इच्छयैव पालयः परिमन्वन्तरान्[illegible] पृथिव्यामिमा विकारादिरूपाणि च सस्यादीनि यानि च [illegible] तथा कृता [illegible] कृष्णावतारादिवौकिकाधिकाराय [illegible] तथा [illegible] भूमिसाक्यात्तदन्तरं वराहः दितिजो हिरण्याक्ष [illegible]ध्यायकथात्र अत एव [illegible] गौणा अम्भस इति न कृष्णावतारवत् मथ्योद्धरणसाम्यात् [illegible] कूर्मः [illegible] स्वपृष्ठ इति कालकूटभक्षणादिदोष[illegible] एवं देवानामानन्दहितान् चतुर अवतारा[illegible] चतुर्थपञ्चमषष्ठमन्वन्तरावतारान् कार्यसमाप्तौ वैकुण्ठगमनसम्भावनाभावेन वैकुण्ठादागतान् चतुरोऽप्याह हरिर्गजेन्द्रं मोचितवान् प्रपन्नार्तिमोचनमिति आर्तप्रपन्नेषु चतुर्थमन्वन्तरावतारचरित्रत्वेन गजेन्द्रस्य स्पष्टत्वात् पञ्च[illegible] ज्ञायते ग्राहस्य वैराग्यहेतुत्वाद्[illegible] निर्देशः प्रपन्नमिति सद्ग्रामे च प्रपन्नानामिति पुंस्त्वाद्दोषः अमोचयदिति वक्तव्ये सर्वकर्तृत्वादमुञ्चदिति आह प्रपन्नमोचने यस्य ब्रह्मत्वक्षत्रत्वेऽपि विरुध्येतेत्यत आह आर्त्तानिति नहि ते मोदनभूता आर्त्ताः पञ्चमन्वन्तरावतारावतारस्थान् मोचितवान् उत्तरपूर्वकाण्डस्थान् इन्द्रं च अभिषेचितानिति कल्पान्तरस्थानि [illegible] कश्यपस्याहरणसमये गोमूत्रपतितानिति मोचयत् गजेन्द्र इव तेषामवस्था गरुडेन नीयमानानां वा समुद्रे पात

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रकारेण भेदः स्तोत्रकरणं च भिन्नतया समागत्य ऋषीन्मुमु- चानिति इन्द्रश्च तेनैवोद्धृत इति पुनश्च प्रकारः वृत्रवधे प्रतीका- रामावादसुरगर्तं प्राप्तः सोऽप्यागत्योद्धृत इति ज्ञातव्यं षष्ठे मन्वन्तरावतारे अमृतं पायवित्वा बलिना इन्द्रासने गृहीते देवेषु क्षीणेषु देवस्त्रियः असुरैः स्वस्वगृहे गुप्ताः तथापि नाशताश्च तत उद्धृताः निरभिमानिनं नृसिंहमाह पूर्वं च तथात्वाच हिर- ण्यकशिपुपीडासमसत्कन्योक्ता अनुसन्धेया सतामभयाय न केवलं प्रह्लादस्य मर्यादारक्षणत्वात् मन्वन्तरावतारानाह अंशेन प्रामाण्यतः सर्वान् विशेषतः ॥ १८ ॥ १९ ॥

पुनरंशेन वामनं सर्वेषु मन्वन्तरावतारेषु युद्धे दैत्यान् हत्वा पुष्टिरूपत्वाद्दानार्थे त्रिभुवनरक्षणं चरित्रं चकारादन्येष्वपि सङ्क्रा- न्तेषु रञ्जितनैवरिव देवावध्यत्वस्थापनाय पतीनिति मन्वन्तरेषु भिन्नता चतुर्दशत्वं च ज्ञापितं कलाभिः षड्भिः मन्वन्तरावता- रैश्चां विलक्षणं वामनचरित्रमिति भिन्नप्रक्रमाभावाच्छब्दः स्मामिति सप्तममन्वन्तरे वस्तु मत्स्यकृतः प्रलयः स कल्पान्तरे तथिना योगे इते वा सर्वेषां बीजरूपेण स्थितिः पश्चादुद्भव इति मन्वन्तरारम्भोऽपि तथैव बीजरूपधर्मविशेषात्पूर्ववत्कथा दर- ण्यः अतः वाञ्छांशे दाने पुष्टित्वाद्दोषः मातृनाम्ना मसा- मर्थ्ये अतः वामनस्यैव वृत्तया त्रिविक्रमत्वात् वामन इत्युक्तं अवतारनाम वामनस्वरूपेण हृता, किन्तु बलिसम्बन्धेन स्वत्व- त्याजनं वाञ्छात्र हेतुः याञ्चामूलकत्वाद्दानस्य स्वार्थत्वाभावाच्चतुर्थं त्रिभिः क्रमैरसन्तुष्ट इत्यत्र ब्रह्मायतं तद्वारणानीत्युक्तम् मदि- ग्रास्तपसा सन्तुष्टः अस्मिन् मन्वन्तरे केवलं पुरन्दरस्यैव न प्राधान्यं पदत्रयस्य दानाभावादिमामित्युक्तम् ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हंसस्वरूपी हंसाकारः दत्तो दत्तात्रेयः कुमारः नः पिता ऋषभश्च विष्णुरेव कलयाऽवतीर्णः सन्नात्मयोगमवदत् तेन हयास्ये हयग्रीवावतारे मधुभिदा सता ततः श्रुतय आहृताः ॥ १७ ॥

मत्स्यो प्रलये मनुः सत्यव्रतः इला पृथ्वी ओषधयश्च गुप्ताः क्रौडे वराहावतारे इभराजं गजेन्द्रम् अमुञ्चत् मोचया- मास ॥ १८ ॥

संस्तुन्वतः ऋषीन् वालखिल्यान् कश्यपार्थे समिदाहरेण गोष्पदे निमग्नान् इन्द्रेणोपहसितानुत्थाप्यामोचयत् शक्रञ्च तमसि ब्रह्महत्यायां प्रविष्टममोचयत् पिहिता निरुद्धा देवस्त्रियः प्रामोचयत् अनेकावतारैरिति शेषः ॥ १९ ॥

अन्तरेषु सर्वमन्वन्तरेषु अवधात् अपालयत् कलाभिर्मन्व- न्तरावतारैः ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीहंसादीनवतारान् तच्चरित्राणि चाह-हंसस्वरूपीति। विष्णु- रेव कलया हंसस्वरूपी दत्तादिनामकश्च अवतीर्णः सन् आत्मनः 'यद्विज्ञानेन सर्वं विज्ञातं भवति" तस्य ब्रह्मणः सम्बन्धियोगं ज्ञान- योगं भक्तियोगं च अवदत् तेन विष्णुना हयास्ये अवतारे मधु- भिदा सता ततः श्रुतयः आहृताः आनीताः ॥ १७ ॥

मात्स्ये मत्स्यावतारे अप्यये प्रलये मनुर्गुप्तः रक्षितः इला भूमिः ओषधयः चकारात्सप्तर्षयः गुप्ताः अम्भसः क्ष्मामुद्धरता विष्णुना क्रौडे वराहावतारे दितिजो हिरण्याक्षो हतः अमृता- र्थमथने कौर्मे कूर्मावतारे आद्रिः मन्दराद्रिः स्वपृष्ठे धृतः ग्राहात् गजेन्द्रममुञ्चत् मोचयामास विष्णुरवतीर्ण इत्यनुवर्तते एवं बह्वावतारनाम नोक्तं तत्रानुवर्तनीयम् ॥ १८ ॥

गरुडोपाख्यानप्रसिद्धान् श्रमश्चान् तपसातिक्षीणान् कश्यपाश्रमा समिदाहरणे पलाशपत्रमूलवाहिकामेकैकां गृहीत्वा सूक्ष्मशरीरत्वेन गोष्पदे पतितान् महत्त्वारवता इन्द्रेणोपहासितान् संस्तुन्वतः स्तुतिं कुर्वाणान् वालखिल्यान् उद्धृत्यामुञ्चत् । वृत्रवधतो हेतोः चकारात् विश्वरूपवधतो हेतोस्तमसि ब्रह्महत्यायां प्रविष्टममुञ्चत् असुरगृहे पिहिताः निरुद्धाः वा देवस्त्रियस्ताश्चामुञ्चत् असुभि- रवतारैः सतां प्रह्लादादीनाम् ॥ १९ ॥

अन्तरेषु भुवनानि अवधात् अपालयत् ॥ २० ॥

---

### भाषा टीका ।

अच्युत भगवान् ने हंस स्वरूपी होकर ब्रह्मा को आत्म योग का उपदेश किया दत्तात्रेय होकर यदु आदिकों को ज्ञान दिया फिर हमारे पिता ऋषभ देव का रूप लिया जोकि साक्षात् कला से सब के हित के वास्ते अवतीर्ण भये उन्ही ने हयग्रीव अवतार मे मधुकैटभ को मार कर वेद लाकर ब्रह्माजी को दिये ॥ १७ ॥

उन्होंने मात्स्य अवतार से सब औषधि और पृथिवी तथा चाक्षुष मनु इनकी रक्षा करी वराहावतार से जल से पृथिवी को उद्धार करते समय में हिरण्याक्ष को मारा कूर्मावतार में समुद्र मंथन के समय अपने पीठ पर मंदर पर्वत को धारण किया श्रीहरि अवतार में शरणागत गजराज को ग्राह से छुड़ाया ॥ १८ ॥

किसी अवतार में स्तुति करते हुए समुद्र में पड़े विरक्त ऋषियों की विपत्ति छुड़ाई और वृत्रासुर के वध करने से पाप में प्रविष्ट इन्द्र का पाप दूर किया। नृसिंह अवतार में देव- ताओं की स्त्री जो असुर के घर में घिरी थीं उनको छुटा कर सत्पुरुषों को निर्भय करने के लिये हिरण्यकशिपु को मारा ॥ १९ ॥

देवता असुरों के युद्ध में देवतों के वास्ते असुरोंको मारकर फिर मन्वंतरों मे कला अवतारों से संसार की रक्षा करी तदनंतर वामन अवतार लेकर देवतों के वास्ते बलिसे पृथिवी की भीख मागने के छलसे इस भूमीको लेकर अदिती के पुत्रों को दिया ॥ २० ॥

---

निःक्षत्रियामकृत गां च त्रिःसप्तकृत्वो रामस्तु हैहयकुलाप्ययभार्गवाग्निः ।
सोऽब्धिं बबन्ध दशवक्त्रमहन् सलङ्कं सीतापतिर्जयति लोकमलघ्नकीर्त्तिः ॥ २१ ॥
भूमेर्भरावतरणाय यदुष्वजन्मा जातः करिष्यति सुरैरपि दुष्कराणि ।
वादैर्विमोहयति यज्ञकृतोऽतदर्हान् शूद्रान् कलौ क्षितिभुजो न्यहनिष्यदन्ते ॥ २२ ॥
एवं विधानि कर्माणि जन्मानि च जगत्पतेः ।
भूरीणि भूरियशसो वर्णितानि महाभुज ! ॥ २३ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् एकादशस्कन्धे
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

हैहयानां कुलस्याप्ययाय भार्गवरूपोऽग्निः स रामो दाशरथिः सन् सलङ्कं लङ्कायां स्थितं सत्त्वं अवधीत् वर्त्तमानकालीनोऽवतार इत्यर्थः ॥ २१ ॥

भाविनं रामकृष्णावतारमाह—भूमेरिति । बुद्धावतारमाह—वादैरिति । अतदर्हान् यज्ञानर्हान् दैत्यान्विमोहयिष्यति कल्क्यवतारमाह—शूद्रानिति । न्यहनिष्यदिहनिष्यति ॥ २२ ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी ।

त्रिःसप्तकृत्वः एकविंशतिवारान् स रामो दाशरथिः सन्निस्त्वं शालिनोरभेदाभिप्रायेण सलङ्कमिति सहार्थस्य द्वैविध्येऽपि विद्यमानमात्रत्वमभिप्रेत्य लङ्कायां स्थितमिति व्याख्यानम् । यद्वा, लङ्काशब्देन तत्स्थरक्षोगणो लक्ष्यते तथाच सपरिवारदशग्रीवमहन् ॥ २१ ॥

शूद्रान् । म्लेच्छान् कलेरन्ते ॥ २२ ॥

जगत्पतेरिति । तज्जन्मादीनामपि जगत्पालकत्वं व्यञ्जितं भूरियशस इति तेषां यशोमयत्वञ्च ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिविरचितायां दीपिकादीपनी
टिप्पण्याम् चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

हैहयेति । हैहयकुलाप्ययहेतुभूतो भार्गव इत्यर्थः ॥ २१ २३ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हैहयानां कुलस्याप्ययाय नाशाय भार्गवरूपोऽग्निः रामः परशुरामः त्रिःसप्तकृत्वः एकविंशतिवारान् गां भूमिं निःक्षत्रियां क्षत्रियरहितां चकार स विष्णुः सीतापतिर्भूत्वा लोकानां मलं पापं हन्तीति तथा सा कीर्त्तिर्यस्य सः दाशरथिः जयतीति वर्त्तमाननिर्देशस्य वर्त्तमानकालीनोऽयमवतार इत्यभिप्रायः ॥ २१ ॥

अथ भाविनोऽवतारानाह—भूमेरिति । अजन्मा कर्मायत्तोत्पत्तिरहितः भूमेर्भारावताराय यदुषु जातोऽवतीर्णः सन् सुरैरपि कर्तुमशक्यानि कर्माणि चेष्टितानि करिष्यति । बुद्धावतारं तत्कर्म चाह—वादैरिति । अतदर्हान्यज्ञानर्हानपि यज्ञकृतः यज्ञान् कुर्वाणान् वेदबाह्यैर्वादैर्विमोहयिष्यति कल्क्यवतारं तत्कर्म चाह शूद्रानिति । कलौ कलियुगान्ते क्षितिभुजः शूद्रान्न्यहनिष्यत् निहनिष्यति ॥२२॥ उपसंहरति । एवमिति ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निःक्षत्रिया क्षत्रियरहिता हैहयकुलाप्ययार्थं उज्ज्वलितभार्गवाग्निः भृगुकुलोत्थवह्निः लङ्कामहन्हतवान् दशवक्त्रं चाहन् हतवान् लोके जयति ॥ २१ ॥

बुद्धो यज्ञकृतो वादैर्विमोहयति कल्की कलेरन्ते शूद्रान् क्षितिभुजोऽन्यहनिष्यत् ॥ २२ ॥

निगमयति । एवं विधानीति ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सवङ्कुमिति । लङ्काधिपतत्कुलसहितमित्यर्थः । जयतीति "जयति जननिवासः" इतिवत् ॥ २१ ॥

शूद्रानित्युभयत्रान्वयः पूर्वत्र उपायपान् परत्र म्लेच्छानित्यर्थः ॥ २२ ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

रामावतारमाह त्रिरूपेण तुशब्दादवमावेश इति केचित् क्षत्रक्षया-पेक्षयावतारप्रयोजनं रूपद्वं सीतानिमित्तपलायितादिपरित्यागादेक-विंशतिवारमुद्यमः तत्रापि पृथ्वीनिष्कण्टका कर्तव्येत्युद्यमः पुष्टि-मार्गीयता न मर्यादापालका इति मारणं दत्तात्रेयोऽपि पुष्टिस्थः रामो तु मर्यादापालको ब्रह्मतेजसा क्षत्रिया उपसंहर्तुं शक्याः भगवत्तेजसा वा तत्र स्वयं भगवान् पालकत्वात् क्षत्रियाञ्च हन्ति अत आह—भार्गवाग्निरिति । इध्मसाम्याद्दकाभिशब्द देव-लोकानां वा तावत्पाद्रक्षार्थमवतीर्णस्तावद्वारं ततः परं भग-वान् अवतरिष्यतीति भावः । गुणात्रयकार्यत्वात्त्रिधा विभागे अन्यथा भवति वङ्गाः सहस्रजिद्धय इति यादवानामपि मध्ये हैहयोऽत्यमर्यादः तस्य कुलनाशार्थमग्निप्राकट्यार्थे वेणुस्था-नीयता उक्ता मुख्यभूततेजो भगवद्रूपं भृगौ स्थापितमिति तद-वतीर्णभगवदवतारत्वेनोच्यते परशुरामः "वैष्णवं तेज आसाद्य समशामयत्" इति सिद्धान्तः एवं त्रैलक्षण्यात् तुशब्दः केचित् रूपक-माहुः लौकिकास्ते स इति रामशब्देनो गृहीतः रामो वैश्वानरावतार इत्यन्ये तस्य चरित्रं पञ्चविधम् मन्या धीला समुद्रबन्धनं रावण-वधः सीतापतित्वं सर्वोत्कर्षेण सदा स्थितिः । चरित्रमात्रस्य पापनाशकत्वमिति तत्र समुद्रबन्धनमलौकिकं पुरदाहरावणवध-सहितरावणवधः अजेयत्वादमर्यादः मुख्यपुष्टिः सीतापतित्वं "स वै पतिः स्यात्" इति न्यायेन च जयतीति स्वस्य विकाराद्य-भावेन सर्वदोषविवर्जितत्वम् अन्यस्यापि दोषदूरीकरणं चरि-त्रेण ॥ २१ ॥

ग्रहान् श्रीनवतारानाह कृष्णं सर्वावतारापेक्षया विशेषमाह, अजन्म जात इति गुणातीतोऽप्याविर्भूत इत्यर्थः । गुणवान् कदाचिज्जाय-तापि ननु बीजप्रयोजनाभावात् न कस्यचिदुत्पत्तिरित्यत आह, वसुषु भरावतरणायेति वसुषु नवमस्कन्धे भक्तिरुक्ता तद्बीजं मदन-कृष्णभारहारायेति निमित्तं दशमस्कन्धे प्रपञ्चितमेतत् गुणाती-तत्वे हेतुः सुरैरपि दुष्कराणीति अपिशब्दात् तिर्यग्भिः गुणिनामप्यर्थं करोतीति अनेन चरित्राण्ययनन्तानीति सूचितं बुद्धावतारमाह, वादैर्विमोहयतीति । वादैरिति बहवो वादाः सांप्रतं सुष्ठाः अनर्हेषु यज्ञो मागच्छत्वित्ति मांसकामोऽव्यतिरेकेण न दृष्टप्रतीतिर्भवतीति वादाः विशेषेण मोहो विपरीते धर्म-बुद्धिः यज्ञकृत यज्ञार्थं स्वयमन्तर्हितो भगवान् यज्ञानन्तर्गात-मित्यर्थः । कोऽयं पुरुषार्थ इत्याशङ्क्याह, अनर्हान् यज्ञानर्हान् कलौ अशुद्धभावे कुण्डभोजकवादृत्ये वादैरेव तत्रिश्चयः

आत्मज्ञानकत्वैवनेदवेदार्थबोधकत्वया बुद्धिरित्यर्थः । त्रैगुण्यविषया इति सांख्यशास्त्रं योगिनस्तु मर्यादां प्रवाहनिवृत्तये प्राहुः गुण-मयान् पुरस्कृत्य निर्गुणान् करोतीत्यर्थः । अत एवायमवतारो यावान्नित्यत्र निवृत्तः अतः परीक्षार्थं वेदनिन्देति सर्वं सुस्थं कल्किचरित्रमाह, शूद्रानिति । क्षितिभोक्तृत्वमधर्माणां माऽभूदिति धर्माः कालव्यूहसत्त्वादिकृताः ते क्रमशः क्षीयमाणाः शुद्धत-मसा शूद्रपर्यवसायिनो भवन्ति प्रान्तभागे कलौ इत्यनम् ॥ २२ ॥

उपसंहरति । एवं विधानि धर्मसंस्थापनप्रकाराणि अनादिसिद्धो धर्मो जन्मना स्थिरो भवति कर्मणा चोपघातनिवृत्तिः धर्मो हि जगत् रक्षकः धर्मे रक्षिते रक्षितं जगत् स वै पतिः स्यादिति स्वाभाव्याज्जगत्पतिः प्रकारेऽपि बाहुल्यार्थमाह, भूरीणीति । तत्र हेतुः भूरियशस इति धर्मार्थकाममोक्षभक्तिप्रपत्त्यादिपुरुषार्थेषु स्था-पकत्वेन भूरीणि यशांसि यस्य तानि न केवलं गुप्तानि कविभिरित्यपोत महाभुजेति क्रियाशक्तिप्राधान्यात् उक्तवि-श्वासः ॥ २३ ॥

इति श्रीभागवतसुबोधिन्यांश्रीमद्वल्लभदीक्षितविरचितायाम्
एकादशस्कन्धविवरणे चतुर्थाध्यायविवरणम् ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सवङ्कं लङ्कास्थसर्वैरसहितमित्यर्थः । जयतीति । कथाया अस्याः तत्कालभवत्वात्किमादर्शविशेषो वक्तुः ॥ २१ ॥

विमोहयति विमोहयिष्यति बुद्धः न्वहनिष्यत् निहनिष्यति कल्किः ॥ २२ ॥ २३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे चतुर्थोऽध्यायः सङ्गतः सङ्गतः समाप्त ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हैहयकुलात्ययार्थं भार्गवाग्निः जमदग्न्याख्याद्भार्गवाज्जातो ऽग्निः रामः गां पृथिवीं निःक्षत्रियामकृत स विष्णुः दाश-रथिः रामस्तु भूत्वा अब्धिं बबन्ध । सवङ्कं लङ्काध्यक्षतत्सत्वा-सुरसमूहपरः लङ्कागतासुरसमूहसहितं दशवक्त्रं रावणमहन् स च सीतापतिर्लोके जयति ॥ २१ ॥

अजन्मा स्वयमवतारी बुद्धावतारे अनर्हान् यज्ञानर्हान् असुरान् विमोहयति कल्क्यवतारे शूद्रान् क्षितिभुजो नृपान् कलौ अन्ते न्यहनिष्यत् निहनिष्यति ॥ २२ ॥

वर्णितानि ऋषिभिस्तत्र तत्रेति शेषः ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुर्थोऽध्यायार्थप्रकाशः ॥ ४ ॥

---

भाषा टीका ।

परशुराम अवतार में भगवान् ने हैहय राजा के कुल के नाश करने को भृगुवंश में जन्म लेकर अग्निवत् प्रकाशमान् होकर इस पृथिवी को एक बीसवार क्षत्रियों से रहित कर दिया उन्हीं भगवान् ने समुद्र को बांधकर लंका के राक्षसों के सहित रावण को मारा जिनके चरित्र के कथन से सब लोगों के पाप नष्ट होते हैं वे श्रीसीतापति रामचन्द्र जी इस समय अयोध्या में विराजमान हैं ॥ २१ ॥

फिर अजन्मा भी भगवान् पृथिवी के भार उतारने के लिये यदुवंश में अवतार लेकर देवताओं से भी नहीं होने वाले कार्यों को श्रीकृष्णावतार में करेंगे फिर बुद्ध अवतार में जो यज्ञ करने लायक नहीं हैं उन लोगों को वेद का निन्दा वाद करके मोहित करेंगे फिर कलि के अन्त में कल्की अवतार लेकर शूद्र जाति के राजाओं को मारेंगे ॥२२॥

हे महाबाहु जनक जी ! बड़े भारी यशोंवाले जगत् पति भगवान् के इस प्रकार के बहुत से जन्म तथा कर्म शास्त्रकारों ने वर्णन किये हैं ॥ २३ ॥

इति श्रीमद्भागवत एकादश स्कन्ध चतुर्थोऽध्याय श्रीवृन्दावनस्थ पं० भागवताचार्यकृत

भाषा टीका समाप्ता ॥ ४ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥

—:*:—

# अथ पञ्चमोऽध्यायः ।

—— * ——

राजोवाच ।

भगवन्तं हरिं प्रायो न भजन्त्यात्मवित्तमाः ! ।
तेषामशान्तकामानां का निष्ठाऽविजितात्मनाम् ॥ १ ॥

चमस उवाच ॥

मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह ।
चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक् ॥ २ ॥
य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् ।
न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः ॥ ३ ॥
दूरे हरिकथाः केचिद्दूरे चाच्युतकीर्त्तनाः ।
स्त्रियः शूद्रादयश्चैव तेऽनुकम्प्या भवादृशाम् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चमे भक्तिहीनानां का निष्ठा को युगे युगे ॥
पूजाविधिरिति प्रश्नद्वयस्योत्तरमुच्यते ॥ १ ॥

त्वां सेवतां सुरकृता बहवोऽन्तरायाः इत्यनेन भक्तिमतां विघ्नमूर्ध्नि पदं दत्त्वा परां गतिं यान्ति अभक्तानां तु विघ्ना भवन्तीत्युक्तं तर्हि तेषां का गतिर्भवतीति पृच्छति—भगवन्तमिति । हे आत्मवित्तमाः ! अविजितात्मनामत एवाशान्तकामानां का निष्ठा किं प्राप्यमित्यर्थः ॥ १ ॥

स्वजनकस्य गुरोर्भगवतोऽनादराद्गुरुद्रोहिणो दुर्गतिं यान्तीति वक्तुं भगवतः सकाशाद्वर्णाश्रमाणामुत्पत्तिमाह—मुखेति । गुणैः सत्त्वेन विप्रः सत्त्वरजोभ्यां क्षत्रियः रजस्तमोभ्यां वैश्यः तमसा शूद्र इति ॥ २ ॥

एषां मध्ये येऽज्ञात्वा न भजन्ति ये च ज्ञात्वाऽप्यवजानन्ति आत्मनः प्रभवो जन्म यस्मात्तम् तदभजने कृतघ्नतामप्याह—ईश्वरमिति । स्थानाद्वर्णाश्रमाद्भ्रष्टाः ॥ ३ ॥

तत्र येऽज्ञात्वा भवादृशानामनुग्राह्या इत्याह—दूर इति । दूरे हरिकथाश्रवणं येषां ते अत एव दूरे चाच्युतकीर्तनं येषां ते दूरे अच्युतकीर्त्तनाश्चेति वा ॥ ४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

का निष्ठा किं प्राप्यं पूजाविधिः पूजाप्रकारः पूर्वाध्याये-
नात्यन्तमङ्गतिमाह—त्वां सेवतामित्यादिना । तेषामभक्तानां का गतिः । किं प्राप्यम् अत एव अविजितात्मत्वादेव ॥ १ ॥

चमसशब्दस्य पात्रवाचकत्वात् कृपापात्राणां गतिवर्णनं सत्पात्रेणैव कर्त्तुं शक्यमिति चमस एवोवाचेति ज्ञेयम् ॥

मुखबाहूरुपादेभ्यः विप्रादयो यथाक्रमं जज्ञिरे आश्रमेषु तु तदुपलक्षणमेव यथोक्तं "गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम । वक्षःस्थलाद्वने वासो न्यासः शीर्षणि च स्थितः" इति ॥ २ ॥

आत्मप्रभवमिति गुरुद्रोह उक्तः । तदभजने भगवदभजने कृतघ्नतापीत्यपिरत्र गुरुद्रोहं समुच्चिनोति ॥ ३ ॥
तत्र भक्ताऽभक्तानां मध्ये अत एव हरिकथाश्रवणाऽभावादेव स्त्रियोऽपि अच्युतं कीर्त्तयन्तीति भक्ता एवोक्ताः ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्मवित्तमा इति सम्बोधनम् न भजन्ति इति द्वयपर्यन्तं तदव-मभजतामिति विवक्षितं प्रतिवचनानुगुणत्वात् ॥ १—४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नान्यस्य बर्हिषि बलीन्ददतः स्वभागानित्यनेन भगवन्तमसेवमानानां सुरकृता विघ्ना न सन्तीत्युक्तं तत्र सर्वेषां भगवत्सुप्रसन्नत्वेऽपि कुतः केषाञ्चिदेव भगवत्सेवारुचिः केषाञ्चित्तदभाव इत्यभजतश्च कीदृशाः कां वा गतिं यास्यन्तीति

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पृच्छति—भगवन्तमिति । यद्यपि मुमुक्षूणां शिक्षोद्देश्यतयाणां वात्तानुपयुक्तत्वाच्च प्रष्टव्या तथापि यत्नेन तत्सङ्गपरिहाराय तत्प्रश्न इत्यभिप्रायेण आत्मविसत्तमा ! इति सम्बोधन तेषाम विजितात्मनामजितेन्द्रियाणामेत एवाशान्तकामानां का निष्ठा प्राप्तिः कुत्राप्तिः किं प्राप्य फलतत्र हेतुः कीदृशाश्चेति प्रश्नाशयः प्रतिवचनानुगुण्यात् ॥ १ ॥

तत्र तावद्भगवत्सेवातदर्चनस्वभावयोर्हेतुमसेवतां गतिं चमस आह द्वाभ्याम् । मुखेति । पुरुषस्य चतुर्मुखशरीरकस्य भगवतः मुखबाहूरुपादेभ्यः गुणैः सत्त्वरजस्तमोभिरुत्पादिताः पृथगमी कर्मणा विप्रादयः चत्वारो वर्णाश्चतुर्भिराश्रमैः सह जज्ञिरे गुणैरित्यनेन सात्त्विकानां भगवत्सेवातदर्चनान्येषामिति सूचितम् ॥ २ ॥

एषां चातुर्वर्ण्यचातुराश्रम्य व्यवस्थया व्यवस्थितानां मध्ये ये जनाः साक्षादात्मनां प्रभव कारणभूतमीश्वरं सर्वनियन्तारं पुरुषं परमपुरुषं न भजन्ति अवजानन्ति देवतान्तरसमत्वेन मन्यन्ते तदेव ह्यवज्ञानं तथा चोक्तं भागवते तन्त्रे—

"यस्तु नारायणं देवं समत्वेनाभिमन्यते ।
सतु तेनावमानेन नरकान्नातिवर्तते" ॥

इति ते स्थानाद्वर्णाश्रमाद्भ्रष्टा अधः पतन्ति नरके पतन्ति आत्मप्रभवं न भजन्तीत्यनेन तेषां कृतघ्नता सूचिता ॥ ३ ॥

ननु, स्वप्रमात्मप्रभवत्वेश्वरत्वसर्वोत्कृष्टत्वादिज्ञाने सत्यपि तमभजतां कृतघ्नत्वादिदोषान्नरकपात इति ये तु तादृशज्ञानरहिताः केवलमज्ञास्तेषां का गतिरित्यत्राह—दूर इत्यादिना । दूरे हरिकथा तत्कृतयां येषां ते दूरेऽच्युतकीर्तनं येषां ते शास्त्रानधिकारादिति भावः । क त इत्यत्राह—स्त्रियः शूद्रादयश्च जनास्ते भवादृशां भागवतानामनुकम्प्याः दयनीयाः भागवतानुग्रहपात्रश्चेत्तेऽपि मुच्यन्ते एवेति भावः ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भुक्तभगवद्भक्तलोकविशेषो राजा भगवद्विमुखानां फलिमस्थाने स्थितिरिति पृच्छति—भगवन्तमिति । हे आत्मविसत्तमाः ! ॥ १ ॥

हरेः पितृत्वेनात्यन्तोपकर्तृत्वात्तदभजनादिदृषोऽधःपातहेतुरिति तद्भक्तानां तमस्येव निष्ठेति वक्तुं भगवदवयवेभ्यो वर्णाश्रमाणामुत्पत्तिप्रकारमाह—मुखेति । शमादिगुणैः ॥ २ ॥

एषामुत्पन्नानां मध्ये आत्मप्रभवं स्वोत्पादकं पितरमित्यर्थः पितुर्द्रोहः स्थानाद्विकुण्ठाद्विलक्षणाः भ्रष्टाः ॥ ३ ॥

श्रवणादियोग्यतारहितत्वेन हरिकथाश्रवणकीर्तनादिसाधनानां स्त्रीशूद्रादीनां अधःपातमाह—दूर इति हरिकथा इति । भवादृशानामनुकम्प्या येषां ते हरिकथाश्रवणादधिकारिणः स्युरिति भावः । अच्युतस्य कीर्तनं येषामस्ति ते अच्युतकीर्तनाः ते च दूरे ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १ ॥

मुखबाहुरिति विराट् तदन्तर्यामिणोरभेदोक्तिः मुखबाहूरुपादेभ्य इत्युपलक्षणमेवाश्रमेषु यथाक्रम—

"गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम ।
वक्षःस्थलाद्वन वासो न्यासः शीर्षणि संस्थितः" ॥

इति ॥ २ ॥

न भजन्त्यत एवावजानन्तीत्यर्थः । यद्वा, केचिदश्रुत्वा न भजन्ति केचिच्छ्रुत्वापि न भजन्ति चेदवजानन्त्येवेत्यर्थः । स्थानाद्वर्णाश्रमरूपात्स्वाश्रमाद्भ्रष्टाः सन्तः क्रमादधोऽधो गच्छन्तीत्यर्थः ॥ ३ ॥

तत्र पूर्वाननुग्राहयति—दूर इति ॥ ४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वक्ता श्रोता तथा वाक्यं त्रिभिरुक्तं विशेषतः ।
लोके सर्वत्रप्रवृत्तौ प्रामाण्यं कुण्ठितं भवेत् ॥
अतस्तत्साधकाध्यायश्चतुर्थोऽयमुदाहृतः ।
देशकालस्वभावानां निर्द्धारक उदाहृतः ॥
अस्यार्थो भगवद्देशे स्थितस्तऽलौकिकर्णितः ।
निराकृत्यान्यथा वादान् शुकः कृष्णं भजेदिति ॥

स्वभावविजयाय भ्रमवादान् निराकर्तुं पृच्छति—भगवन्तमिति । सर्वेष्टसिद्धिः हरिरिति सर्वानिष्टनिवृत्तिः एतादृशमपि बाहुल्येन न भजन्ति आत्मविदः सर्वज्ञाः तत्रापि भगवन्मार्गविदः श्रेष्ठा इति सम्बोधनं ज्ञानयोगाभावाय विशेषणद्वयम् इह लोके परलोके वा किं फलमित्यर्थः । यद्यपि प्रवाहफलमेव फलमभजनमात्रमपदोषत्वेन त्रिगुणस्य गुणा इति परं प्रवाहस्य. किञ्चजा न तिष्ठति निन्दामकुर्वाणा इति प्रश्नः । तत्त्वत्रापि निन्दाया निषिद्धत्वान्नरकपात इति कः सन्देह इति चेत् सत्यम् । भगवद्भक्तान् निकर्षकत्वान् मत्वा धर्मस्थापनार्थं तान्निन्दति प्रवाहफलमेव संस्य तीति सन्देहः अभजनयोग्यता हि निन्दया भवति अशान्तकामत्वाद प्रवाह एव स्थितिः अविजितेन्द्रियत्वाच्चापि ज्ञफलमपि वैदिकत्वाच्च सन्देहवृत्तिः अविजितेन्द्रियान् सकामानपि वेदस्तारयतीति मार्गान्तरस्थास्तु स्वभावत एव पतिता इति वैदिकस्यैव प्रश्नाभिप्रायः उत्तरमाह—चमसऋषिः । तेषां भागस्य तथात्वात् चमस उवाच सिद्धान्ता हि पञ्च तत्र वैष्णवा भजन्त्येव शैवा निन्दकाश्चेत्पापिनः मात्स्यपर्यवसिताः एव एव कृतमतेः वैदिका अज्ञाश्चावशिष्यन्ते प्रवाहपतिता लोकचतुराश्च ॥ १ ॥

तत्र प्रवाहपतितलोकचतुराणां गतिमाह—द्वाभ्याम् । संन्यासवानप्रस्थब्रह्मचारिगृहस्थाः वर्णा इव तथा सत्याश्रमस्यात्रैगुण्य सत्त्वाद्ब्राह्मणाः रजसा क्षत्रियाः रजस्तमोभ्यां वैश्याः ॥ २—३ ॥

इति श्रीवल्लभाचार्यविरचितैकादशस्कन्धस्यैतावती विवृतिः ॥

विप्रो राजन्यवैश्यौ वा हरेः प्राप्ताः पदान्तिकम् ।
श्रौतेन जन्मनाऽथापि मुह्यन्त्याम्नायवादिनः ॥ ५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पञ्चमे चमसो विष्णुविमुखानां सुदुर्गतिम् ।
युगधर्मावतारांस्तु प्रोवाच करभाजनः ।

एवं कृपयावतारैः स्वर्यापितयशस्स्वपि भगवति विमुखीभूय किं लिप्सन्त इत्युद्भूतविस्मयः पृच्छति—भगवन्तमिति । हे आत्मवित्तमाः का निष्ठा किं प्राप्यमित्यर्थः ॥ १ ॥

भजनीयस्य भगवतोऽभजने दुर्गतिरेवेति वक्तुं प्रथमं भजनीयत्वे युक्तिमाह—मुखेति । गुणैः सत्त्वेन विप्राः सत्त्वरजोभ्यां क्षत्रियाः रजस्तमोभ्यां वैश्याः तमसा शूद्राः । अत्र मुखादिभ्य आश्रमैः सह चत्वारो वर्णा जज्ञिरे इत्यन्वये आश्रमाणामपि मुखादिभ्य एवोत्पत्तिः प्रसज्जेत साच न तथा यदुक्तम्—

"गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम ।
वक्षःस्थलाद्वने वासो न्यासः शीर्षणि च स्थितः" ॥

इति तस्मान्मुखबाहूरुपादेभ्य इत्यतः प्राग्जघनहृद्वक्षोमस्तकादिभ्य इत्याहार्यं ततश्च जघनादिभ्यो मुखादिभ्यश्च आश्रमैः सह क्रमेण वर्णा जज्ञिरे इति सङ्गतम् ॥ २ ॥

एषां मध्ये ये न भजन्ति आत्मनः प्रभवो यस्मात्तम् आदिपितरमित्यर्थः । [अत्र अज्ञात्वा च न भजन्तीत्यसन्तो द्विविधाः "अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्" इति भगवदुक्तेर्मानुषत्वेनामायामयत्वभानमेवावज्ञा तद्वन्तो भजन्तश्च दृष्टा इत्यवजानन्तश्च द्विविधाः] न भजन्त्यत एवावजानन्ति अवश्यभजनीयस्य गुरोरभजनमेवावज्ञेति भावः । स्थानाद्वर्णाश्रमलक्षणात् ॥ ३ ॥

तत्र येऽज्ञाः ते सर्वाद्भुतानामनुग्राह्या एवेत्याह—दूरे इति । दूरे हरिकथा येषां ते ये साधुसङ्गभाग्यहीना इत्यर्थः । दूरे अच्युतस्य कीर्त्तनं येषां ते इति येच साधुसङ्गेऽपि बधिरा इत्यर्थः । ते अनुकम्प्या इति तत्राद्या भक्त्युपदेशेन द्वितीया दृष्टिचरणादिदानेन च कृतार्थी कार्या इत्यर्थः ॥ ४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

"त्यक्त्वा विलङ्घ्य व्रजतां परमं पदं ते" इति भगवद्भक्तमाहात्म्यं श्रुत्वा तदभक्तानां का गतिरिति पृच्छति—भगवन्तमिति । हे आत्मवित्तमाः ! यद्वा, ये प्रायः आत्मवित्तमाः प्रायग्रहणात् ये नात्मविदश्च हरिं न भजन्ति तेषाम् अविजितात्मनामस्वार्जितमनस्कानामत एवाशान्तकामानामसतामभोगिनाम् का निष्ठा किं प्राप्यमित्यर्थः । आत्मज्ञानं लब्ध्वापि हरिविमुखो भोगासक्तश्च निन्द्य एव —

"येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः ।
आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः" ॥

इति वचनात् —

"आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमर्थं कस्य वा हेतोर्देहं पुष्णाति लम्पटः" ॥

इति वचनाच्च ॥ १ ॥

स्वजनकद्रोह कृतत्वेन दुर्गतिं यास्यन्तीति वक्तुं भगवतः सर्वजनकत्वमाह—मुखेति । गुणैः सत्त्वादिभिर्हेतुभूतैः यद्वा शमादिभिः स्वासाधारणधर्मैः पृथग्भूता वर्णा आश्रमैः सह जज्ञिरे ॥ २ ॥

एषां पुरुषमुखादिभ्यः जातानां मध्ये ये आत्मप्रभवं स्वजनकं न भजन्ति प्रत्युत तत्र केचिदात्मनि तत्सत्त्वाभिमानेन अवजानन्ति तत्र केचित् परमेश्वरं जीवमात्रं मत्वा प्रतिपादयन्ति केचिद्देवतान्तरसमत्वेन प्रतिपादयन्ति ते स्थानात् वर्णाश्रमात् भ्रष्टाः अधः पतन्ति एवं भूतानां भगवत्पराङ्मुखानां आत्मानमात्मविन्तमं मन्यमानानामधोगतिर्यदुक्तम्—

"योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणात्मापहारिणा ।
यस्तु नारायणं देवं समत्वेनाभिमन्यते ।
स तु तेनावमानेन नरकान्प्रतिपद्यते" ॥

इत्यादिश्रुतिस्मृतय आहुः ॥ ३ ॥

एवमात्मविदां हरिभजनाकर्तॄणामधोगतिमुक्त्वा येत् प्रायग्रहणेन अनात्मविदः प्रागुक्तास्ते द्विविधाः । केचित्स्त्रीशूद्रादयः केचिदाम्नायवादिनस्तत्र पूर्वे सुसाध्यत्वादनुग्राह्या इत्याह—दूरे इति । दूरे हरिकथाः येषां ते अत एव दूरे अच्युतकीर्त्तनं येषां ते स्त्रियः शूद्राश्च आदिना तेभ्योऽपि निकृष्टाः अनुलोमजाः प्रतिलोमजाश्च ॥ ४ ॥

---

### भाषा टीका ।

राजोवाच ।

आत्माज्ञानी मुनि जनो । प्रायः करके कितनेक पुरुष भगवान् हरि को नहीं भजते हैं उनकी कामना भी शांत नहीं होती है वे अजितेन्द्रिय हैं उनकी क्या गती होती है ॥ १ ॥

चमस उवाच महा पुरुष नारायण के मुख बाहु उरु पावों से चारों वर्ण तथा चार आश्रम भये हैं जो कि भिन्न भिन्न ब्राह्मण ब्रह्मचारी आदिक हैं सो सत्त्वादि गुणों से हैं ॥ २ ॥

इन सबों के मध्य में से जो अपनी उत्पत्ती करने वाले ईश्वर को नहीं भजते हैं और अवज्ञा करते हैं वे अपने स्थानों से भ्रष्ट होकर नरकों में पड़ते हैं ॥ ३ ॥

कोइक श्रीहरि के कथा से दूर रहते हैं, कोइ भगवत् नाम संकीर्तन से दूर रहते हैं वे स्त्री होवें अथवा शूद्र होवें पर तुम सरीखे पुरुषों को उनपर कृपा करनी चाहिये ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

आनन्दचतुर्भिर्व्याख्यातानाभिक्ष्यन्तानुरेखया इत्यादायेनाऽऽह—विप्र इति । श्रौतेन जन्मना उपनयनमात्रेण अथ वेदाध्ययनादिनापि हरेः पदान्तिकं तद्भजनयोग्यताधिकारं प्राप्ता अपि मुह्यन्ति

कर्मण्यकोविदाः स्तब्धा मूर्खाः पण्डितमानिनः ।
वदन्ति चाटुकान् मूढा यया माध्व्या गिरोत्सुकाः ॥ ६ ॥
रजसा घोरसङ्कल्पाः कामुका अहिमन्यवः ।
दाम्भिका मानिनः पापा विहसन्त्यच्युतप्रियान् ॥ ७ ॥
वदन्ति तेऽन्योऽन्यमुपासितस्त्रियो गृहेषु मैथुन्यपरेषु चाशिषः ।
यजन्त्यसृष्टान्नविधानदक्षिणं वृत्त्यै परं घ्नन्ति पशूनतद्विदः ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कर्मफलेषु सज्जन्ते कुतः? आम्नायेषु ये वादा अर्थवादास्तै मोहकतया विद्यन्ते येषां ते तदुक्तं गीतासु—

"यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ ! नान्यदस्तीति वादिनः" ॥

इत्यादिना ॥ ५ ॥

भक्तिमार्गदार्ढ्याय तेषां मोहं प्रपञ्चयन्निन्दति, कर्मणीत्यादिना । अकोविदा यथा बन्धकं न भवति तथा कर्म कर्तुमज्ञाः सर्वाभिज्ञान्पृच्छन्ति यतः स्तब्धा अनम्राः स्तब्धत्वे हेतुः यतो मूर्खा अपि पण्डिता वयमिति मानवन्तः । अतः "अपाम सोमममृता अभूम अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति यत्र नोष्णं न शीतं स्यान्न ग्लानिर्नाप्युपरामः" इत्यादिकया यया माध्व्या गिरोत्सुकाः सन्तो मूढास्तया चाटुकान् अप्सरोभिः सह विहरिष्याम इत्यादिप्रियान् शब्दान्वदन्ति ॥ ६ ॥

किञ्च, तेषां कर्माभिनिवेशात्कामक्रोधदम्भादयो भवन्त इत्याह त्रयेण, । रजसेति । घोरोऽभिचारादिः सङ्कल्पो येषां ते अहिवन्मन्युर्येषां ते ॥ ७ ॥

कामुकत्वं प्रपञ्चयति—वदन्तीति । उपासिताः स्त्रियो यैस्ते तु गृहाश्रमे मैथुन्यं मिथुनसुखमेव परं तत्त्वमित्यादि येषु गृहेषु तेष्वाशिषो वदन्ति—

" इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम्" ॥

इत्याकाराः । दाम्भिकत्वं प्रपञ्चयति, यजन्तीति । असृष्टान्नविधानदक्षिणं न सृष्टं न सम्पादितमन्नविधानं दक्षिणा यथा तथा यजन्ति तच्च वृत्त्यै जीविकार्थं परं केवलं पशून् घ्नन्ति अतद्विदो हिंसादोषानभिज्ञाः ॥ ८ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

ज्ञानस्य सत्त्वेन लेशेन दुर्विदग्धाः नैपुण्याभावाद्[illegible]शक्ताः [illegible] उपेक्ष्या हेयाः । अर्थवादाः "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यादिलक्षणाः तत्र अर्थवादमुख्यत्वं पुष्पितां पुष्पवदापातरमणीयां प्रवदन्ति प्रकृष्टफलां वदन्ति वेदवादरताः वेदेषु येऽर्थवादास्तैरेव रताः अभिनिविष्टाः स्वर्गादन्यत् फलं नास्तीति वादिनः ॥ ५ ॥

अनिन्द्यं निन्दा निन्दयितुं न प्रवर्तते किन्तु विधेयं स्तोतुमिति न्यायेन विधेयस्य भक्तिमार्गस्य दृढीकरणाय तेषां काम्यकर्मिणां मीमांसकानाम् अतः पण्डितमानित्वात् सोमममृतमपाम पास्यामः अमृताः मरणशून्या भविष्यामः चातुर्मास्यसंज्ञकेन यागेन यष्टुं शीलं यस्य तस्य सुकृतमपूर्वम् अक्षयमविनश्वरम् । यत्र स्वर्गे ग्लानिर्बलक्षयः माध्व्या मादिकया ॥ ६ ॥

अभिनिवेशः स्वीकृतस्य पुनस्त्यागासहिष्णुत्वम् अभिचारेति मारणेऽनेनेत्यभिचारो मारणप्रयोगः आदिना परस्त्रीवशीकरणादिः ॥ ७ ॥

उपासिताः पादपतनादिभिः सेविताः आतिथ्यादि आतिथ्यमतिथियोग्यसत्कारः आदिनार्चनपुराणश्रवणादिपरिग्रहः मुखेऽभ्यागमो आशिष एव न तु ज्ञानवैराग्यादिवार्ताः अन्नविधान-दक्षिणा अन्नविधानमन्नप्रदानं तत्सहिता दक्षिणा तथा च अन्नविधानाद्यभावे ॥ ८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रौतेन वेदसंयोगत्वेन ॥ ५ ॥ ६ ॥
अहिमन्यवः अभिमानपराः ॥ ७ ॥

उपासितस्त्रियः परतन्त्राः आशिषो वदन्ति तद्व्यापारेण प्रोच्यतां जनस्त्रीस्वाभिप्रायः असृष्टान्नविधानदक्षिणाः लोभादप्रदीयमानान्नादिदक्षिणाः वृत्त्यै जीवनार्थम् ॥ ८ ॥ ९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

येतु सत्यपि शास्त्राधिकारे तज्ज्ञानाभावात् च मौर्ख्यात् सज्जन्ति तेऽधः पतन्तीत्यभिप्रेत्याह—विप्र इति । विप्राद्यास्त्रयः श्रौतेन वेदसंयोगाद्द्वितीयया तज्जन्यज्ञानेन च हरेः पदान्तिकं हरिचरणान्तिकप्राप्तिसाधनानुष्ठानयोग्यमधिकारं प्राप्ताः अद्यत्वेऽपि मुह्यन्ति मोहं प्राप्नुवन्ति न हरिपादाब्जं भजन्ति, किन्तु स्वर्गाद्यर्थकर्मसु सज्जन्त इत्यर्थः । तत्र हेतुत्वेन विशिनष्टि—आम्नायेति । आम्नायेषु वेदेषु वादा अर्थवादास्ते मोहकतया विद्यन्ते येषां ते तथा तदुक्तं भगवता—

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

"यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ ! नान्यदस्तीति वादिनः" ॥

इत्यादिना ॥ ५ ॥

तेषां मोहमेव प्रपञ्चयति—कर्मण्यकोविदा इत्यादिना । यथा बन्धाय न भवति तथा कर्मकर्तुमज्ञाः तथाभिज्ञान्पृच्छन्ति, यतः स्तब्धा अनम्राः तत्र हेतुः मूर्खा अपि पण्डितमात्मानं मन्यन्ते इति तथा " अपाम सोमम् अमृता अभूम अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति यत्र नोष्णं न शीतं न ग्लानिर्न ज्याभय" इत्यादिकया माध्व्या श्रोत्रप्रियमात्रकारिण्या गीरा उत्सुकाः सन्तो मूढाः तथा चाटुकानप्सरोभिः सह चरिष्याम इत्येवं विधानि प्रियवाक्यानि वदन्ति ॥ ६ ॥

किञ्च तेषां कर्माभिनिवेशात्कामक्रोधदम्भादयो वर्धन्त इत्याह—रजसेति त्रिभिः । घोरोऽभिचारादिसङ्कल्पो येषां ते अहेः सर्पस्येव मन्युर्येषां ते मानिनः दुराग्रहकारिणः अच्युतप्रियान् विद्विषन्ति ॥ ७ ॥

कामुकत्वं प्रपञ्चयति । वदन्तीति । उपासिताः स्त्रियो यैस्ते गृहोपसेविनः मैथुन्यं मिथुनसुखमेव परमुत्कृष्टं येषु तेषु गृहेष्वन्योऽन्यमाशिषो वदन्ति—

"इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ॥
इदमस्तीदमपि मे भविष्यति पुनर्धनम्" ॥

इत्यादिकान् प्रवदन्ति तद्द्वारेण परोत्साहनं जनयन्ति इत्यभिप्रायः दाम्भिकत्वं प्रपञ्चयति यजन्तीति असृष्टान्नविधानदक्षिणां लोभादपदीयमानान्नाच्छादनदक्षिणं यथा तथा यजन्ति वृत्त्यै जीवनार्थं परं केवलं पशून् घ्नन्ति अतद्विदः हिंसादोषानभिज्ञाः ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विप्रादीनां हरिभक्त्यभावे श्रुत्यधिकारो न मोक्षहेतुरित्याह—विप्र इति । विप्रादयः श्रौतेन श्रुतिविद्यायोग्येन जन्मना हेतुना हरेः पदान्तिकं प्राप्ताः समीपप्राप्तियोग्याः तथाप्यन्यथाम्नायेन सह वादः विवादो येषामस्तीति आम्नायवादिनः निर्मालिकवचनमुख्यार्थापरिज्ञानात् मुह्यन्ति तत्त्वं न जानन्ति । एतां जन्मादिकम् अप्रयोजकं किन्तु हरिभक्तिरेवेत्यर्थः ॥ ५ ॥

ननु, वेदोक्तकर्मणां तत्त्वज्ञानोत्पत्तेः कथं तेषां मोहः "कर्मणा ज्ञानमातनोति" इति श्रुतेरित्याशङ्क्य नानार्थत्वादित्वेन सम्यगनुदितकर्मतत्त्वापरिज्ञानादिदोषप्रदर्शनपरत्वादित्याह—कर्मणीति । अकोविदत्वे हेतुस्तब्धा इति, तत्र मूर्खा इति मूढत्वेन अन्यतः प्राप्तुं अशक्यमित्यतः पण्डितमानिन इति अतो मूढाः यथा माध्व्या स्वर्गादिमधुवादिन्या गिरा सद्यो मधूनि गिरन्तीव स्थितया वाचा उत्सुकाः जिह्वारसं स्रवन्तः तथा वादकान् स्वर्गादिविषयवचनसन्तोषान्वदन्ति ॥ ६ ॥

किञ्चात इति अत आह—रजसेति । तत्र जनितेन रजसा वेगेन घोरो निष्ठुरः पश्वालम्भनादिलक्षणः येषां ते तथा कामुकाः विषयलोलुपाः तद्विघ्नकर्तॄन् अभिमन्यवः अमितः मन्युरेव प्रधानो येषां ते तथा एवंविधाः पापाः अच्युतप्रियान् विद्विषन्ति पृथक् पृथक् दोषानुकृत्या विद्विषन्तीत्यन्वयः ॥ ७ ॥

एतदेव विवृणोति—वदन्तीति । गृहेषु स्थित्वान्योऽन्यमाशिषो यावत्प्रबन्धात् निजगुणोत्कर्षवचनान् वदन्ति तत्र हेतुरुपासितस्त्रिय इति किञ्चासृष्टान्नविधानदक्षिणाः अदत्तान्नविप्रयुक्तगुरुदक्षिणाः परं केवलं वृत्त्यै जीवनोपायार्थं पशूनजादीन् घ्नन्ति तत्त्वाज्ञमन्ते कुतोऽतद्विदस्तत्त्वाज्ञाः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

उत्तरानुपेक्षयति । विप्र इति । आम्नायवादिनो जैमिनीयाः आम्नायः कर्मकाण्डं ते हि तन्मात्रवदनशीलास्तस्य सुतरां तु ब्रह्मकाण्डस्य याथार्थ्यानभिज्ञोऽनीश्वरवादिनः ॥ ५ ॥

तेषां मोहमेवाह—कर्मण्यकोविदा इति ॥ ६ ॥

अधर्मं पापौ च क्रमेण दर्शयति—रजसेति त्रिभिः । तत्र प्रथमेन सर्वेषामेव तेषां निन्दा द्वितीयेन विप्राणां तृतीयेन राजन्यवैश्यानामिति ज्ञेयम् ॥ ७ ॥ — ॥ ९ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ज्ञानवद्बुद्धिदग्धास्त्वचिकित्स्यत्वादुपेक्ष्या एवेत्याशयेनाह—विप्र इति । श्रौतेन उपनयनाख्येन उपलक्षणमेतत् अध्ययनादिनापि हरेः पदान्तिकं तद्भजनोत्तमाधिकारं प्राप्ता अपि मुह्यन्ति कर्मफलेषु सज्जन्ति । कुतः ? आम्नायेषु ये वादा अर्थवादास्ते मोहकतया विद्यन्ते येषां ते तदुक्तं गीतासु—

"यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ ! नान्यदस्तीति वादिनः" ॥

इति ॥ ५ ॥

अकोविदाः कर्म यथा बन्धकं न भवति तथा कर्तुमज्ञाः तथाभिज्ञान् पृच्छन्ति यतः स्तब्धा अनम्राः यतो मूर्खा अपि पण्डिता वयमिति मन्यमानाः "अपाम सोममृता अभूम अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति यत्र नोष्णं न च शीतं न ग्लानिर्नाप्सरसः" इत्यादिकया यया माध्व्या गिरा उत्सुकाः सन्तो मूढा मुह्यन्ति वयं तथैव चाटुकान् इतो अप्सरोभिः सह विहरिष्याम इत्यादिप्रियान् शब्दान् मिथो वदन्ति ॥ ६ ॥

रजसा प्रवर्धमानेन रजोगुणेन मत्कृतमर्थं छिन्दतामिति घोरः सङ्कल्पो येषां ते प्रतिक्षणं वर्धमानेन क्रोधेन अहिवन्मन्युर्येषां ते एते काष्ठमात्राभूतो भिक्षुका उदरम्भरा विष्णुमाराध्य मुक्तिं गेय प्राप्स्यन्तीति अच्युतप्रियान् विद्विषन्ति ॥ ७ ॥

उपासिताः स्त्रियो युवतय एव ननु महान्तो यैस्ते अत एव अनन्तसन्तत्यादिसम्पादिकाः सम्पत्तयो भवन्ति अन्योऽन्यमाशिषो वदन्ति मैथुन्यसुखमेव परं येषु तेषु गृहेषु न सृष्टा न सम्पादिता अन्नादिदानविधानदक्षिणा यत्र तत् यथा स्यात्तथा यजन्ति वृत्त्यै जीविकार्थं केवलं पशून् छागादीन् घ्नन्ति । अतद्विदः हिंसादोषानभिज्ञाः ॥ ८ ॥

श्रिया विभूत्याऽभिजनेन विद्यया त्यागेन रूपेण बलेन कर्मणा ।
जातस्मयेनान्धधियः सहेश्वरान् सतोऽवमन्यन्ति हरिप्रियान् खलाः ॥ ९ ॥
सर्वेषु शश्वत्तनुभृत्स्ववस्थितं यथा खमात्मानमभीष्टमीश्वरम् ।
वेदोपगीतं च न शृण्वतेऽबुधा मनोरथानां प्रवदन्ति वार्त्तया ॥ १० ॥
लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्नहि तत्र चोदना ।
व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा ॥ ११ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अपरेतु अधः पतिष्यन्ति अत एव ते भगवद्भागवतविमुखा विप्रादयो विशिष्टजन्मकर्मादिभिः श्रेष्ठत्वाभिमानिनो दुःसाध्यत्वादुपेक्षणीया इत्याह—विप्र इति चतुर्दशभिः । विप्रः राजन्यः वैश्यो वेति चार्थे अपत्वा त्रैवर्णिकजन्मना तदनुरूपेण श्रौतेन श्रुतिप्रोक्तेनोपनयनपूर्वकवेदाध्ययनादिना हरेः "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादिश्रुतिवेद्यस्य परमात्मनः पदान्तिकं तच्छ्रवणमननध्यानदर्शनाधिकारं प्राप्ता अपि मुह्यन्ति सुकरमुपायं परमात्मश्रवणादिकं विहाय संसारोपाये कर्मणि सज्जन्ते तत्र हेतुगर्भितविशेषणमाम्नायवादिन इति आम्नायेषु ये वादाः "अपाम सोमम्" इत्याद्या अर्थवादा मोहकतया विद्यन्ते येषां ते तथा ॥ ५ ॥

तन्मोहं प्रपञ्चयति—कर्मणीत्यादिना । तमेतमात्मानं ब्राह्मणा विविदिषन्ति यज्ञेन" इत्यादिश्रुत्युक्तरीत्या ज्ञानाङ्गभूते कर्मणि अकोविदाः कर्म अन्तःकरणशुद्धिद्वारा परमात्मश्रवणमननध्यानज्ञानोपयोगीति न जानन्ति । ननु, तत्त्वज्ञान् कुतो न पृच्छन्तीत्यत्राह—स्तब्धाः अनम्राः अनम्रत्वे हेतुमाह मूर्खाः पण्डितमानिन इति यद्यपि मूर्खाः अपण्डितास्तथापि वयं पण्डिता इति मानवन्तः "अपाम सोमममृता अभूम अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति यत्र नोष्णं नच शीतं स्यान्न ग्लानिर्नाप्यरातयः" इत्यादिकया यया माध्व्या कर्मफलात्मकमधुवादिन्या गिरोत्सुकाः भूत्वा चाटुकान् स्वर्गे विहरिष्याम इत्यादिश्रोत्रप्रियान् ग्राम्यान् वदन्ति ॥ ६ ॥

घोरः अतिदारुणः सङ्कल्पो येषां ते कामुका विषयलुब्धाः अहिवन्मन्युर्येषां ते दाम्भिकाः स्वपूज्यत्वख्यापनार्थं कर्मप्रकाशकाः ॥ ७ ॥

पूर्वश्लोकार्थं विवृणोति—वदन्तीति द्वाभ्याम् । तत्र कामुकत्वं प्रपञ्चयति उपासिताः दानमानादिभिः पूजिताः स्त्रियो येनैतद्गुरवः एवं विधास्ते मैथुन्यं स्त्रीपुरुषसंयोगजं सुखमेव परमतु भगवद्भागवतसेवादिकं येषु गृहेषु तेषु स्थित्वा अन्योऽन्यमाशिषो वदन्ति कलत्रापत्यादिविषयकैः पशुयज्ञादिविषयकैश्च वाक्यप्रबन्धैः परस्परं स्वकीयां स्वकीयां कृतार्थतां योजयन्ति दाम्भिकतां प्रपञ्चयति, यजन्त्यसृष्टान्नविधानदक्षिणम् इति अन्नञ्च विधानं विध्युक्तं कर्म च दक्षिणा च तेषां द्वन्द्वः न सृष्टाः अन्नविधानदक्षिणाः यथा तथा यजन्ति पापत्वं प्रपञ्चयति । परं शिष्यादिकं वृत्त्यै जीविकार्थं घ्नन्ति भिक्षाभटगामानयेत्येवं प्रेषयेति अपरविद्यायां नियोज्य संसारे च भ्रामयन्ति "इमाहिंसागतोः" इत्यस्य रूपम् घोरसङ्कल्पतां प्रपञ्चयति । घ्नन्तीति । तज्ज्ञतया पुनर्योजनीयम् अतद्विदः सिद्धान्ताभिज्ञाः पशून् घ्नन्ति हिंसन्ति स्वसुखार्थमिति शेषः ॥८॥

### भाषा टीका ।

ब्राह्मण क्षत्रिय वैश्य लोग वेदाभ्यास से और जन्म के संस्कार से हरि के स्थान के समीप आनेके योग्य हैं जो केवल कर्मकाण्डवादिक में लगे हैं वे मोहित होजाते हैं ॥ ५ ॥

कर्म में चतुर तो नहीं हैं अभिमानी हैं मूर्ख हैं और पण्डित मानी केवल वेदों के स्वर्गादि के मिलने के मीठे वचनोंमें आनन्दित रहते हैं ॥ ६ ॥

रजोगुण से उनके संकल्प बड़े घोर होते हैं औ कामी हैं सर्प सरीके क्रोधी हैं दम्भ करनेवाले हैं अभिमानी हैं पापी हैं तिसी से अच्युत प्रिय जो वैष्णव जन तिनकी हंसी करते हैं ॥ ७ ॥

केवल स्त्रियों की उपासना करनेवाले वे लोग आपस में कहते हैं कि घरों में तथा मैथुनादि सुखों में ही सब है और भी जिसमें विधि नहीं अन्नदान नहीं दक्षिणा नहीं ऐसे यज्ञों को करते हैं यज्ञों के मर्म को नहीं जानते केवल वृत्ति के वास्ते पशुओं को मारते हैं ॥ ८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मानितां प्रपञ्चयति—श्रियेति । श्रिया धनादिसम्पदा विभूत्या ऐश्वर्येण अभयादिना जातो यः स्मयो गर्वस्तेनान्धा धीर्येषां ईश्वरसहितान् सतोऽवमन्यन्ते ॥ ९ ॥

किञ्च, एवं वर्त्तमानास्ते येदतस्वार्थं स्फुटमपि न जानन्तीत्याह—सर्वेष्विति । केन रूपेणावस्थितं तदाह—परमात्मानमीश्वरमात्मतया ईश्वरतया चावस्थितम् एवमप्यसङ्गतामाह—यथा खं पुरुषार्थतामाह—अभीष्टम् स्फुटत्वमाह—वेदोपगीतं चेति । तस्कृते ततो मनोरथानां व्यवायामिषमद्यसेवाविषयाणां वार्त्तया प्रवदन्ति निवृत्तिपरं सन्तं वेदं प्रवृत्तिपरं वर्णयन्तीत्यर्थः ॥ १० ॥

ननु व्यवायादीनामपि "ऋतौ भार्यामुपेयादृतुकालेऽपि" इत्यादिना विहितत्वात्कथमेवं निन्द्यते अत आह—लोक इति

**धनं च धर्मैकफलं यतो वै ज्ञानं सविज्ञानमनुप्रशान्ति।**
**गृहेषु युञ्जन्ति कलेवरस्य मृत्युं न पश्यन्ति दुरन्तवीर्यम् ॥ १२ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका।

व्यवायः स्त्रीसङ्गः नित्या रागत एव नित्यं प्राप्ताः जन्तोः प्राणि-मात्रस्य अतस्तत्र तासु चोदनाविधिर्नास्ति। ननु, ऋतावुपेयादि-त्यादिना विधिर्दर्शितः, सत्यम्। नायमपूर्वविधिः रागतः प्राप्त-त्वात्किन्तु नियमविधिरूपेण रागिणामनुज्ञामात्रं क्रियत इत्याह—व्यवस्थितिरिति। ननु व्यवायादिषु कैः विवाहयज्ञसुरा-ग्रहैः विवाहविषय एव व्यवायः कार्यः यज्ञ एवाऽऽमिषसेवा सौत्रामण्यां सुराग्रहान् गृह्णाति" इति श्रुतेस्तत्रैव मद्यसेवेति नियमः क्रियते। ननु, नियमपक्षेऽप्यावश्यकत्वान्न निवृत्तियुक्ताऽत आह—आसु निवृत्तिरिति। आसु व्यवायामिषमद्यसेवासु निवृत्ति-रेव अभिमता नायं नियमविधिरपि नित्यप्राप्तत्वात्ततो निवृत्तिः परिसङ्ख्यैव कथं तर्हि व्यवस्थितिरित्युक्तम्? उच्यते न तावत्प-रिसङ्ख्याविधिना श्रुत्या निवृत्तिरुच्यते तथा सति स्वार्थत्यागः परार्थकल्पना प्राप्तबाधश्चेति दोषत्रयं स्यात्। अतः क्वचित्प्राप्तस्तो ऽर्थस्य प्रापणमनर्थकमित्यपूर्वविधिद्वाराऽन्यनिवृत्तिः फलतो भवति यथा "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" अत्र रशनाविकृतौ गर्दभाश्वाभिधानीरशनाद्वये प्राप्तयो-रश्वस्यापूर्वविधिद्वारा परिसङ्ख्योच्यते यथोक्तं तन्त्रवार्तिके—

"अप्राप्तविधिरेवायमतो मन्त्रस्य निश्चितः।
परिसङ्ख्याफलत्वोक्ता न विशेषः पुनः श्रुतेः" ॥

इति क्वचित् रागतो नित्यप्राप्तस्याप्राप्तांशपूरणार्थत्वस्य निय-मफलत्वस्यापेक्षायामपि नियमविधिद्वारा फलतः परिसङ्ख्या भवति यथा "पञ्च पञ्चनखा भक्ष्याः" इति तथा रागतो नित्यप्राप्तस्य व्यवा-यादेर्विवाहादिनियमेनाऽप्यनुज्ञाद्वारा परिसङ्ख्यैवेति। ननु, यद्यप्यनु-ज्ञामात्रमेतद्भवेत्तर्हि—

"ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति।
घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः" ॥

इत्यादिदोषश्रवणं न स्यात्। नैष दोषः मनसि कामे सत्यपि तदवगमरूपा द्वेषादिना वा तामनुपगच्छतो दोषश्रवणोपपत्ते-रिति सर्वमनवद्यम् ॥ ११ ॥

तदेवं व्यवायादिमनोरथाकुलितत्वादमी परमात्मानं न स्मरन्ती-त्युक्तमिदानीं धनस्यापि धर्मद्वारा परमात्मप्रापकस्य दृष्टोप-भोगार्थं विनियोगादात्मज्ञानगन्धोऽपीत्याह—धनञ्चेति। धर्म एवैकं फलं यस्य तत् कुतः? यतो धर्मात् ज्ञानं सविज्ञानमपरोक्षानुभवस-हितं परोक्षज्ञानं भवति। कथंभूतम् अनुप्रशान्ति अनन्तरमेव प्रकृष्टा शान्तिर्निर्वाणसुखं यस्य तत् एवम्भूतं धनं गृहेषु देहार्थं युञ्जन्ति ॥ १२

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी।

श्रीविभूत्योरेकार्थत्वेन पौनरुक्त्यमाशङ्क्य जन्मादिसम्पदित्यादि-व्याचष्टातम् अभिजनेन सत्कुलेन विद्ययाऽध्ययनेन त्यागेन दानेन रूपेण सौन्दर्येण बलेन देहपाटवेन कर्मणा यागादिना ॥ ९ ॥

एवं कामुकत्वमानित्वादिप्रकारेण वर्त्तमानास्ते कर्मठाः वेदतत्त्वार्थं वेदस्य वास्तवार्थं श्रीहरिं स्फुटं प्रत्यक्षम् आत्मतया रश्मीनां सूर्यवन्मूलरूपत्वेन ईश्वरतया अन्तर्यामितया एवमपि त्रैविध्येनाविर्भवत्त्वेऽपि पुरुषार्थतां परमानन्दरूपतां वेदोपगीतं वेदान्तैकवेद्यं "नमो वेदान्तवेद्याय" इति "औपनिषदम्पुरुषं तं पृच्छामि" इति च श्रुतेः। तत् कुतः स्फुटत्वेऽप्यश्रवणे को हेतुरित्यर्थः। अभिमानसङ्कुलिताभाव मनोरथपदं तद्विषयदर्शनेन व्याचष्टे व्यवायेत्यादि ॥ १० ॥

व्यवायादीनामपि निन्द्यत्वेनाभिप्रेतानामपीत्यपेरर्थः "ऋतौ सदा मैथुनार्थं भार्यामुपगच्छेत् हुतान्मांसाद्भक्षमयाचितं मांसं भक्षयेत्" इत्यादिना विधिरूपेण वेदेन नादिना सौत्रामण्यामिति वक्ष्यमाणवाक्यमहः रागत एव इच्छात एव नित्यप्राप्ताः नित्य-वत् प्राप्ताः। अतो नित्यप्राप्तत्वात् तासु व्यवायामिषमद्यसेवासु विधिरुपदेशो नास्ति, "चोदनाचोपदेशश्च विधिश्चैकार्थवाचकाः" इत्यभियुक्तोक्तेः विधिर्दर्शितः। उपेयादिति विध्यर्थे लिङ्‌श्रवणात् सत्यमित्याशङ्कितार्थे अयम् ऋतुगमनविधानरूपोऽपूर्वविधिर्नेति अप्राप्तार्थविधायको ह्यपूर्वविधिर्यथा प्रोक्षति यथाच स्वर्गकामो यजेतेत्यादि अत्र यागार्थव्रीहिप्रोक्षणस्य स्वर्गार्थयागस्य च वाक्या-न्तरेण रागेण चात्यन्तमप्राप्तत्वादपूर्वविधित्वम् अत्र तु स्वेच्छयैव नित्यप्राप्तत्वान्नापूर्वविधित्वमित्यर्थः। ननु, तर्हि कथं लिङ्‌श्रवणं तत्राह-किन्त्विति। नियमविधिरूपेण नियमविधिसदृशेन विधिवाक्येन अनुज्ञामात्रं प्रमाणान्तरप्राप्तस्याभिमतस्य स्वातन्त्र्येण बोधनं क्रियते तदाह। नियमविधिसमानार्थत्वमाह। द्वन्द्वस्य परवल्लिङ्गत्वे सति सान्निध्यात् यक्षपक्षे तोऽर्व्वाति एकशेषत्वान्नपुंसकत्वं विवाहेत्युप-लक्षणं तत्रापि ऋतावित्यर्थः। सौत्रामण्यां तत्संज्ञकयागे सुरा-ग्रहान्मद्यपात्राणि गृह्णीयात् इति श्रुतिपदार्थः तत्रैव सौत्रामण्या-मेव नियमः सार्वत्रिकव्यवायादिप्रवृत्तेः सङ्कोचः। नन्विति आशङ्कते नियमपक्षेऽप्यावश्यकत्वादिति। यथा व्रीहीनवहन्यादिति नियमविधिप्राप्तोऽवघातो ह्यावश्यकत्वमित्यर्थः। अतः आशङ्कातः सिद्धान्तमाहेत्यर्थः। आसु निवृत्तिरित्यत्र आसु व्यवाया-मिषमद्यसेवासु निवृत्तिरिष्टेति पठनीयं ततोऽयं भाव इति युज्यते ऽयत्यावत्तु लक्षणप्रमाणेनैव पूर्वं प्रवृत्तावितिप्रथम सिद्धान्तं विधा-स्यति अथ भाव इति अयम् "ऋतौ भार्यामुपेयात्" इत्यादिर्नियम-विधिर्न भवति कुतः? नित्यप्राप्तत्वात् पक्षे प्राप्तस्याप्राप्तांशपूरको विधिर्नियमविधिः यथा व्रीहीनवहन्तीत्यादिः अत्र यथा तण्डुल-निष्पत्त्यर्थं नखविदलनादि लोकतः प्राप्तं तथावघातोऽपि तदर्थ-मेव लोकतः प्राप्तोऽपि नखविदलनादिव्यावृत्त्यर्थं विधीयते किन्तु यस्यां दशायामवघातं परित्यज्य नखविदलनादौ स्वेच्छया पुमान् प्रवर्त्तते तस्यां दशायामवघातस्याप्राप्तत्वात्तत्पूरकत्वेन नियमविधिर्नावाति दशाप्राप्तमन्यः, तदुक्तं भट्टैः। "अवघातेऽपि

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी।

नियमो देशादाविव तेन सः। प्रधानेन प्रयुक्तः स्यात् मध्वग्धः प्रक्रियोक्तिभिः" इति अतः नित्यप्राप्तत्वेनाप्राप्तांशपूरणलक्षणनियमविधेरसम्भवात् परिसङ्ख्यैवेति उभयस्य युगपत् प्राप्तौ इतरव्यावृत्तिपरो विधिः परिसङ्ख्याविधिः सैवेष्टेति कथ्यते उभय विधिसाङ्कर्यनियमविधिद्वारैवं परिसङ्ख्येति समाधीयते तत्प्रकारमाह—न तथेति। परिसङ्ख्याविधिना कर्तृभूतेन श्रुत्या वाक्यार्थेन करणेन तथा सति वाक्यार्थोऽसम्भवेन न विरोधिप्रसक्तिफललक्षणाया निवृत्तिपरिभाषया सति स्वार्थस्य श्रुतस्य वाक्यार्थस्य ऋतुगमनस्य त्यागः तथा परार्थस्य अश्रुतस्यानृतुगमनस्यानृतौ भार्यां नोपेयादित्येवं कल्पनेति दोषद्वयं शब्दव्यवहारेण प्रतीयत इति शब्दनिष्ठं तथा रागतः प्राप्तस्याऽनृतुगमनस्य बाध इत्येको दोषोऽर्थविचारात् फलित इत्यर्थनिष्ठ इत्येवं दोषत्रयं स्यात् यतो वाक्यार्थासम्भवाल्लक्षणातो निवृत्तिपरिभाषणे दोषत्रयम् अतस्तन्निबर्हणाय क्वचिदपूर्वविधिद्वारा तात्पर्यतः परिसंख्या क्वचित्तु नियमविधिद्वारा तत्र पूर्वमाह—क्वचिदिति क्वचिदश्वाभिधानीमादत्त इत्यादौ प्राप्स्यतः मन्त्रे श्रुतस्येति सामान्योक्त्या पक्षे प्राप्स्यतोऽश्वाभिधानीरसनाग्रहणलक्षणार्थस्याश्वाभिधानीमादत्त इति ग्रहणवाक्येन पुनः प्रापणानर्थकं व्यर्थम् अप्राप्ते शास्त्रमर्थवदिति न्यायात् इति हेतोः अपूर्वविधिद्वारा अपूर्वविधिसदृशतया सर्वांशेनाश्वाभिधानीग्रहणं मानान्तरेणाप्राप्तमित्यपूर्वविधित्वं पाक्षिकतया त्वंशेन प्राप्तमिति नापूर्वोविधिः सङ्कुच्छन इति तद्द्वारान्यस्य गर्दभरशनाग्रहणस्य निवृत्तिः फलतस्तात्पर्यतो भवति गर्दभाभिधानीं न गृह्णीयादिति तथा तदेव दर्शयति श्रुतस्य यजीयपशोरिमां रसनामगृभ्णान् गृह्णीयात् इति इति सामान्यतो रसनाविधायकमन्त्रं पठित्वा अश्वाभिधानीमश्वोऽभिधीयतेऽवश्यापद्यते यथा तां रसनामादत्ते गृह्णीयादित्यत्र रसनालिङ्गतः रसनाशब्दसामर्थ्यात् रसनाद्वये गर्दभाश्वरसनयोर्विषये प्रयोगकाले प्राप्स्यतो मन्त्रस्य सम्यग्ग्रा अयमश्वाभिधानीमेवाददीतेति मन्त्रार्थनिश्चायक इत्यर्थः। अयमश्वाभिधानीग्रहणविधिः परिसङ्ख्यात्वेनोच्यते पूर्वोक्तदोषत्रयनिवारणार्थं तत्र द्वारमाहापूर्वविधिद्वारेति तत्र तृतीयसंमतिमाह। यथोक्तमिति। अयमश्वाभिधानीविधिर्लिङ्गकारणत्वादर्थेनाऽप्राप्तत्वादपूर्वविधिरेव मन्त्रस्य पाक्षिकविधायकत्वेऽपि सर्वांशेनाप्राप्तत्वात् तस्मात् अनन्ताहरणविधेर्हेतोर्मन्त्रार्थोऽपि अश्वाभिधानीमेवाददीतेति निश्चितः स्यात् अतोऽपूर्वविधिद्वारा फलेन तात्पर्येण गर्दभाभिधानीं न गृह्णीयादिति परिसङ्ख्योक्ताविशेषो नियमविधावनन्ति कुतः पुनः श्रुतेः अंशेन प्राप्तस्यैवाश्वाभिधानीग्रहणस्य पुनः श्रुतत्वात् अप्राप्तांशपूरणाभावादित्यर्थः। नियमविधिद्वारा परिसङ्ख्यां दर्शयति। क्वचिदिति। क्वचित् पञ्चनखलक्षणवाक्ये रागतः स्वाभाविकेच्छातो नित्यप्राप्तस्य पञ्चनखभक्षणादेः स्वभावादेः सम्बन्धे अप्राप्तांशस्य पूरणमेव लक्षणं स्वरूपं यस्य तस्य नियमफलस्याप्यभावात् परिरक्षापूर्वविध्यभावं समुन्नीनोति नियमविधिद्वारा नियमविधिसदृशतया फलतस्तात्पर्यतः परिसङ्ख्या भवति पञ्चनखेतरा अभक्ष्या इति दार्ष्टान्तिकमाह। तथात्रेति। अत्र ऋतौ भार्यामुपेयादित्यादौ अन्यनुवादद्वारा प्रमाणान्तरप्रतिपन्नानित्यसाधनत्वेऽपि तदभावमात्रबोधको विधिरनुवाद तद्द्वारा परिसङ्ख्यैव नापूर्वविधिः नापि नियमविधिरित्यर्थः। अनृतौ भार्यां नोपेयात् यज्ञशेषं न भक्षयेत् सौत्रामण्यतिरिक्ते सुरां न गृह्णीयात् इत्येवं सर्वत्र परिसङ्ख्यैव तत्पूर्वनियमयोरिव शास्त्रप्राप्तत्वेनावश्यकत्वमिति निवृत्तावेव तात्पर्यमित्यर्थः। तत्त्रयलक्षणमाभिरुक्तं "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र सम्प्राप्तौ परिसङ्ख्येति गीयते" इति ग्रन्थनिरोहितार्थम् ॥ ११ ॥

तदेवं पूर्वोक्तप्रकारेण धर्मद्वारा भगवत्परितोषकतदर्पितकर्मद्वारा ज्ञानभक्तिलक्षणपरमार्थप्रापकस्य देहोपभोगार्थम् पैत्रिकपुत्रकलत्राद्युपभोगार्थे विनियोगात् व्ययकरणात् आत्म[...]गन्धोऽपि न कुतः पुनः भवणमित्यपरेऽर्थः अपरोक्षज्ञान[...]भवः परोक्षज्ञानं शास्त्रीयं कलेवरस्येति सम्बन्धसामान्ये षष्ठी चतुर्थ्यर्थे षष्ठी तथा चाजहत्स्वलक्षणया देहाद्यर्थमिति व्याख्यातम् ॥ १२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

निर्दोषत्वे दृष्टान्तः व्यवस्थितिः तेष्विति शास्त्रस्य अप्राप्तार्थगोचरत्वात् रागप्राप्ता व्यवायादयो न विधेयाः। किन्तु व्यवस्थामात्रं शास्त्रकृत्यमित्यर्थः। तदेव विवृणोति, विवाहेति निवृत्तिः परदारादिभ्यो निवृत्तिः ॥ ११ ॥

यतः धर्मात् सविज्ञानं प्रकारवैविध्यज्ञानसहितं प्रजया प्रयोजनतया हेतुत्वं विवक्षितं प्रजार्थः ॥ १२—१४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

मानितां प्रपञ्चयति। श्रियेति। श्रीर्धनादिसम्पद्विभूतिरैश्वर्यं ग्रामाधिपत्यादिः अभिजनः सत्कुलप्रसूतत्वं त्यागो दानं रूपं देहसौष्ठवं बलं देहबलं कर्म श्रौतं स्मार्तं च एभिर्जातो यः स्मयो गर्वस्तेनान्धाऽविवेका धीर्येषां ते सहेश्वरानीश्वरसहितान् हरेः प्रियान् भक्तानवमन्यन्ति यतः खलाः भूतहिंसापराः इत्यर्थः ॥ ९ ॥

अमीष्टं निरतिशयपुरुषार्थरूपं वेदोपगीतं वेदान्तवेद्यस्वरूपस्वभावम् ईश्वरं न च शृण्वते तद्वार्तां न शृण्वन्तीत्यर्थः। किन्तु मनोरथानां वार्तया प्रवदन्ति प्रवदन्तः कालं नयन्तीत्यर्थः। कुतः यतस्तेऽबुधा अज्ञाः वेदोपगीतं न शृण्वत इत्यनेन वेदार्थतत्त्वावगमोऽपि न तेषां विद्यते इति सूचितम् ॥ १० ॥

उपासितस्त्रियो गृहेषु मैथुन्यपरेष्विति व्यवायो निन्दितः वृत्त्यै परं घ्नन्ति पशूनतद्विद इति यागीयमांसभक्षणं तथा सुरायन्यायाद्यागीयसुरापानानिन्दाप्यभिप्रेता। श्रिया विभूत्येति वित्तनिन्दा च कृता। ननु, धर्मप्रजासम्पत्त्यर्थे "स्त्रियमुपेयात् ऋतावुपेयात् पशुमालभेत यजमानपञ्चमा इडां भक्षयन्ति हुतशेषमश्नीयात् सौत्रामण्यां सुराग्रहान् गृह्णाति प्रतिग्रहादिना धनमार्जयेत्" इत्यादिभिः शास्त्रैर्व्यवायादीनां नियमितत्वात्किमिति तन्निन्दा क्रियते इत्याशङ्क्याह—लोक इति। व्यवायः स्त्रीसङ्गः व्यवायादयो नित्यरागतो नित्यप्राप्ताः जन्तोः प्राणिमात्रस्यातस्तत्र तासु चोदना

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

शिविर्नास्ति, किन्तु तेषु व्यवायादिषु व्यवस्थितिः शास्त्रव्यापा-
रागोचरत्वात्प्राप्तानामसङ्कोचव्यवायादयो न विधेयाः । किन्तु व्यव-
स्थितिमात्रं शास्त्रकृत्यम् इत्यर्थः । तदेव विवृणोति । विवाहादि-
भिस्तत्क्रियाभिरिति सम्बन्धः । विवाहगृहीतायामेव व्यवायः
कार्यः यज्ञ एवामिषसेवा सौत्रामण्यामेव सुराग्रह इति नियमः
क्रियत इत्यर्थः । नियमफलभूतं चाह्योक्तमाह—आसु निवृत्ति-
रिष्टेति । आसु व्यवायामिषमद्यसेवासु निवृत्तिः परदारेऽयोऽ
कृतकर्माङ्गेऽयाऽश्रौतायामिषमद्यसेवाऽर्थाः च निवृत्तिरिष्टा मनु
व्यवहारादिभ्यः ॥ ११ ॥

यद्यप्येवं व्यवायादिषु नियमितः व्यवायादयो न निषिद्ध-
तान्नगाद्युपयोगविशेषमविज्ञाय केवलदेहसुखार्थतयोपयुज्यमाना
निन्द्या एवेत्यभिप्रायेणोत्तरमाह—धनञ्चेति । तावन्मनदर्थोपयोग-
विशेषं वदन्नर्थस्योपयुक्तत्वानर्थहेतुतामाह—धनञ्चेति । धर्मस्यार्थः
धनन्तु धर्मैकफलं धर्म एक एव फलं यस्य तद्धर्मैकसाधनं
प्रतिग्रहादिना स्वरूपार्जितेन धनेन भगवत्प्रीतिकरं धर्ममेव
सम्पादयेन्नतु विषयभोगमित्यर्थः । एवं धेनुत्सफलम् इति वक्तुं
धर्मं विशिनष्टि—यतो धर्मात्सविज्ञानं चिदचिदीश्वरतत्त्वत्रय-
प्रकारवैविध्यज्ञानपूर्वकं ज्ञानं भगवद्याथात्म्यज्ञानम् अनु ज्ञानादनु
पश्चात्प्रशान्तिरज्ञानाद्यूर्मिषट्कराहित्यं च भवति । तादृशधर्मैक-
फलं धनम् इत्यर्थः । एवं धर्मैकफलमविज्ञाय केचित्केवलं गृहेषु
युञ्जन्ति विषयभोगार्थतया विनियुञ्जते दुरन्तवीर्यं कलेवरस्य मृत्युं
न पश्यन्ति यातस्ते निन्द्या इति भावः । कलेवरस्येति तादर्थ्ये
चतुर्थ्यर्थविवक्षया षष्ठी वा कलेवरार्थतया नेहसुखार्थं युञ्जन्ती-
त्यर्थः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रिया शरीरकान्त्या विभूत्या अणिमाद्यैश्वर्येण श्रीविभूत्या-
दिना आत्मसंभवं पमूत्समवेन अवमन्यन्ते अवजानन्ति ॥ ९ ॥

हरिप्रियावज्ञानमेव ह्यवज्ञानं तथापीदमाधिकमिति भावेनाह ।
सर्वेष्विति । हरेः शशविषाणवदसिद्धक्यात्मज्ञाकणद्धाकारं सक्तृत्वा
इत्यतो वा तद्वज्ञानप्रकारमाह—सर्वेष्विति । तत्र हेतुमाह, अबुधा
इति । हर्यवज्ञानेऽपि श्रीसेवाया विष्णुसेवात्वात्तद्रतां कथमधः-
पातः इत्याशङ्क्य "येन विष्णुमवज्ञाय श्रियमेव ह्युपासते ।
अर्चितवा हरिं ते तु भूत्वा याऽवाः पतन्त्यधः" इत्यनेन परि-
हर्तव्या राजशीत्वभावे प्रकृतिवर्गप्रीत्या किं प्रयोजनममीष्टफला-
नुदयात् इत्यङ्गभजनप्रीत्यभावे परिवृढदवप्रीतिरपि नोदेति तस्सा-
धकाभावादेवं प्रकृतेऽपि विष्णुप्रीत्यभावे लक्ष्म्यादिप्रीतिरपि अभीष्ट-
फलदा न स्यात्लक्ष्म्यादिप्रीत्यभावे परं विष्णुप्रीतिरपि अभीष्ट-
दायिनी न स्यात् । अतो यथा योग्यं विष्णुप्रीतेरनुकूलाभ्यर्चि-
तिरिति शास्त्रगुरूपदेशेन तत्तद्विष्णुजनभक्तिः कर्तव्येत्यन इय-
मेव विधेया नान्या तथाप्योवज्ञामात्रेऽपि निम्नजलस्येवाधमवत्
स्वतः प्रवृत्ते ॥ १० ॥

एवं कुर्वाणा असुरप्रकृतयो न देवप्रकृतयः तेषां यज्ञायुता
युतकोटिनापि प्रवृत्तपदत्यागाकुर्वन्तिदर्शनसाम्याभावमाह-लोक इति ।
लोके जन्तोर्जन्मसूनिमतः प्राणिनो व्यवायादिसेवाः नित्याः
सदातनाः सन्ति । व्यवायो युवत्यवायपञ्चाप्रमूलकः तत्र सत्यादि-
मेवावा वामदेवादिष्वमातिहाय चोदनाविधिर्नहि तेषामपि
तदुक्तम्—

"व्यवायामिषमद्यानि हरेः पूजार्थमेव तु ।
वामदेवो नाम यज्ञो व्यवायो हरिपूजनम् ॥
पितृयज्ञे देवयज्ञे मांसेन हरिपूजनम् ।
व्यवायवद्मद्यं तु सौत्रामणिकतर्पणे ॥
क्षत्रियादेर्न विप्राणां विप्रो द्वाभ्यां विधीयते ।
अरागतः प्रवृत्तिः स्याद्रागो दोषस्य कारणम् ॥
ग्रामास्योऽन्यथा यज्ञे देवे सर्वस्य चेष्यते ।
पैतृमद्यस्य मात्स्यादिक्षत्रियस्य न दुष्यति ॥
देवे स्त्रीम च प्रीतिर्विष्णोः पुत्रार्थं मानुषे ।
नर्मार्थोक्तिमात्रेषु रागं मुक्त्वा यथाविधि ॥
समाश्रितो हरिं स्मृत्वा मर्त्यस्त्वाज्ञां हरेर्मयेत् ।

इति विधिर्नास्ति चेत्कर्मामि तत्राकर्यायत इति तत्राह, व्यव-
स्थितिरिति । यज्ञान् विहाय तेषु व्यवायादिषु स्थितिः सुरैव गृहं
ग्रहणं येषां ते तथा सुरग्रहमुखाः तैरिष्टा ततः किं तत्राह,
आसु इति । निषिद्धक्रियात्वात् असुरजनस्य वृत्तिर्जीविका *" न
सुरां पिबेत्" इति श्रुतेः ॥ ११ ॥

एतदेव विवृणोति, धनमिति । यतो धर्मार्जितस्य सविज्ञानं
ज्ञानमुत्पद्यते अनुज्ञानोत्पत्त्यनन्तरं प्रशान्तिः प्रकृष्टा मुक्तिसं-
पत्ति यो धर्मश्च धनाद्भवति तादृक् धर्मैकफलं धनं ये कलेवर-
स्यार्थे गृहेषु कलत्रादिषु युञ्जन्ति प्रयुञ्जत । कामस्यापि पुरुषार्थ-
त्वात्तदर्थमर्थप्रयोगो युक्त इति तत्राह, मृत्युमिति । अनेन काम-
लक्षणपुरुषार्थस्य श्रमानुकूलत्वमुक्तम् अतः ईदृशी प्रवृत्तिरासुरी-
त्यर्थः । धन पूर्विलत्रुणलोक्षादृतुरित्येवं विधधनव्याख्यानपरत्वं
कुर्वताम् आसुरीप्रवृत्तिरिति किम् वक्तव्यमितीममर्थं हिशब्देन
सूचयति ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तेषां मोहज प्रमादमाह-सर्वेष्विति । तत्र शश्वदिति बिशु-
वनुभवसिद्धत्वम् ऐश्वर्यस्य दर्शितम् ॥ १० ॥

लोक इति । तैः । तत्र नियमान्निरूपयति तत्सदृशेनेत्यर्थः ।
तदाहेति तत्समानार्थमाहेत्यर्थः । द्वन्द्वस्य परवल्लिङ्गत्वे सति
तास्विति वक्तव्ये तेष्वित्युपलक्षणत्वात्पुंस्त्वकत्वं विवाहेत्युप-
लक्षणं तत्रापि ऋतावेवेत्यर्थः । नियमपक्षेऽप्यानन्दकत्वादिति
यद्यायाभिधानीमादत्त इत्यत्रादानमात्रपरकं तदेत्यर्थः । निवृत्त्यर्थ-
माह—अत आहेति । नियमे आदानस्य विधिप्राप्तत्वात् सर्वतो
निवृत्तौ तात्पर्यं परिसङ्ख्यायां तु भक्षणस्य रागतः प्राप्तत्वात्स-
र्वत एव निवृत्तौ परमतात्पर्यमिति युक्तैव निवृत्तिरित्यर्थः । आसु
व्यवायेष्वयाविक्रमं भाव इत्यतः पूर्वमेव युज्यते तत्र तु क्षेमक-
सुरामादिति ज्ञेय व्यवयवियामिरिति तच्छब्देन करणभूतेन प्राप्यन्तः
पाक्षिकत्वमिति ज्ञेयं व्यवायेयामिरिति तच्छब्देन व्याख्यातो निवृत्ति
इत्यर्थः । नियमकारैरेवं परिसङ्ख्येति भिन्नार्थतामुमाह—इत्यत
इति । परिसङ्ख्याविधिना कर्तृभूतेन श्रुत्या प्रापयन करण-
भूतेन प्राप्यन्तः पाक्षिकत्वमिति ज्ञेय कस्मिंश्चिदिति रागतो

*एतन्मते आसुरीवृत्तिरिष्टा इति पाठभेदोऽस्ति ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नित्यप्राप्तस्येत्यस्य नियमेत्यादिनान्वयः । तत्र हेतुः प्राप्तांशेति यथा पाक्षिकतयांशेनाप्राप्ताश्वाभिधानी सर्वांशेन पूर्यते तादृशस्याभावादित्यर्थः । अत्रापि नियमविधिस्तत्सदृश एव ज्ञेयः गतसीति । विध्यभावेऽप्यनुज्ञाविषयाणां रागिणामप्यनुज्ञातिक्रमः स्यादेवेति भावः । अथवा लोकइति तथाहि—

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र सम्प्राप्तौ परिसङ्ख्या विधीयते" ॥

अत्र विधिर्यथा "अहरहः सन्ध्यामुपासीत" इति इदं खलु सर्वथैव न प्राप्नोति अयमेवापूर्वविधिरित्युच्यते नियमो यथा "इमामगृभ्णन् रशनामृतस्य" इति मन्त्रेण ऋतस्य याज्ञिकपशोः रशनां रज्जुमगृभ्णन् अगृह्णन्नित्यर्थेन गर्दभाश्वाभिधान्योरेकतरस्यां स्वाच्छन्देन प्राप्तायां ब्राह्मणेन नियम्यते अश्वाभिधानीमादत्त इति परिसङ्ख्या च "पञ्च पञ्चनखा भक्ष्याः" इति अत्र रागप्राप्तेषु प्रायः सर्वेष्वेव मांसवत्सु भक्ष्येषु पञ्चैव परिसङ्ख्यायन्ते तदनुरोधेन तावन्त एवाप्यनुज्ञायन्ते नान्ये न तु विधीयन्त इत्यर्थः । तत्र नियमे प्राप्त्यतोऽप्यर्थस्य प्रापणमनर्थकमिति ब्राह्मणेनापूर्वविधिनाऽन्यनिवृत्तिरेव तात्पर्यतो भवति । अतः परिसङ्ख्या चात्र पर्यवसिता तन्त्रवार्त्तिके यथोक्तं "अप्राप्तविधिरेषाऽमतो मन्त्रश्च निश्चितः । परिसङ्ख्या फलेनोक्ता न विधेयः पुनः श्रुतेः" इति अयमश्वाभिधानीविधिरप्राप्तविधिरेव लकारव्यत्ययात् तत्प्राप्तो विधिर्मन्त्रार्थश्च निश्चितः अश्वाभिधानीमित्यादत्तेति अतोऽत्र परिसङ्ख्यात्वमपि फलेन तात्पर्येण प्राप्तम् ननु, सामान्यतो मन्त्रप्राप्तस्य रशनाग्रहणस्याश्वाभिधानीमित्यनेन विशेष एवोक्तः अपरोऽपि श्राव्यत इति वाच्यं तत्राह—पुनः श्रुतेः पुनरुक्तत्वादनर्थकत्वादित्यर्थः । अथ परिसङ्ख्यायामिदं विविच्यते न तावत्परिसङ्ख्याविधिशब्देनान्यनिवृत्तिर्वाक्ये, तथा सति पञ्चनखभक्षणरूपस्य स्वार्थस्य त्यागः तथान्यनिवृत्तिरूपस्य परार्थस्य कल्पनं ततश्च प्राप्तस्य पञ्चनखीभक्षणरूपस्य बाधश्च स्यात् । तस्मात्तादृशौ नियमविधी पाक्षिकतयांशेनाप्राप्ताश्वाभिधानीसम्बन्धेन पूर्यते रागतो नित्यप्राप्तेषु नियमफलं तादृशत्वाभावाच्छ्रयमद्वारा तात्पर्यतः परिसङ्ख्या भवतीति तस्मादयमर्थः लोके व्यवायादयो जन्तोर्मनुष्यादेर्नित्याः राग एव नित्यप्राप्ताः । तत्र व्यवायः स्वभावत एव आमिषमद्यं तु मनुष्यस्य परम्पराप्राप्तत्वादिति ज्ञेयम् । अतस्तत्र चोदना अपूर्वविधिर्नास्ति किन्तु तेषु रागिषु विवाहयज्ञसुराग्रहैर्व्यवस्थितिः क्रियते नियमद्वारा परिसङ्ख्या क्रियते तद्यथा विवाहेनोपलक्षणां विवाह एव तत्रापि ऋतावेव व्यवायः कार्यः । यज्ञ एवामिषसेवा सुराग्रहे सौत्रामण्यामेव मद्यसेवेति । ननु, परिसङ्ख्यात्वे सति व्यवायादौ विधित्वमस्त्येव लिङादिसद्भावात् ततस्ताः कथं निन्दया त्याज्यन्ते तत्राह—आसु व्यवायादिषु निवृत्तिरेवेष्टेति रागप्राप्तत्वादप्यनुज्ञामात्रं क्रियते । न त्वपूर्वनियमयोरिव शास्त्रप्राप्तत्वादवश्यं कार्यत इति निवृत्तावेव तात्पर्यमित्यर्थः । ऋतुस्नाताया भार्यायाः परित्यागदोषश्रवणं तु विध्यतिक्रमात् निषेध्यत्वापत्तेः । न च वैराग्येणाप्यनुज्ञातातिक्रमात् तत्राप्यनुज्ञाया अभावात् किन्तु सत्यप्यनुज्ञातायामन्यस्यां रागतो तादृश्यां स्वभार्यायामरुच्यादिनैवाप्रवृत्तेस्तदतिक्रमात् ततो भ्रूणहत्यापर्यवसानाच्च एवमामिषमद्ययोरपि ज्ञातव्यमिति ॥ ११ ॥—॥ १८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

श्रिया । धनादिसम्पत्त्या विभूत्या ऐश्वर्येण सतः साधून् अवमन्यन्ते ॥ ९ ॥

दृढतरं प्रबोध्यमाना अपि ते नैव प्रबोध्यन्ते इत्याह—सर्वेष्विति । यथा अमाकार्यमित्यवश्यम् अभीष्टमित्याराध्यत्वम् ईश्वरमित्यनाराधने सति दण्डदातृत्वं वेदोपगीतं चेति सर्वथा विख्यातत्वं चोक्तं न शृण्वत इति केन प्रकारेणोच्यत आह—मनोरथानां व्यवायामिषादिविषयाणां वार्त्तयेति भगवत्कथायां सद्भिः प्रवर्त्तितानामपि तत्र विषयभोगवार्त्तां बलात् पातयन्तीत्यर्थः । प्रवदन्तीति तदा स्वयमेव प्रकर्षेण वक्तारो भवन्ति ॥ १० ॥

ननु, व्यवायादीनामपि "ऋतौ भार्यामुपेयात् हुतशेषं भक्षयेत्" इत्यादिना विहितत्वात् किमिति ते निन्द्यन्ते तत्राह—लोक इति । व्यवायः स्त्रीसङ्गः आमिषमद्ययोर्मांसमदिरयोः सेवा भक्षणानि नित्या रागत एव नित्यप्राप्ताः तत्र व्यवायः स्वभावत एव आमिषमद्यसेवा मानुषस्य कुलपरम्पराप्राप्तत्वादिति ज्ञेयम् । अतस्तत्र तासु चोदना शास्त्रविधिर्नास्ति अप्राप्तप्रापणस्यैव विधित्वात् ननु "ऋतौ भार्यामुपेयात्" इत्यादिर्विधिरेष एवेति तत्राह, व्यवस्थितिरिति तेषु व्यवायादिषु विवाहयज्ञसुराग्रहैर्व्यवस्थितिर्व्यवस्थैव दत्ता यदि स्त्रीमांसमद्यादिकं विना स्थातुं न शक्यते तदा विवाहविधय एव व्यवायः कार्यः । यज्ञ एवामिषसेवा सौत्रामण्यां सुराग्रहान् गृह्णातीति श्रुतेस्तत्रैव मद्यसेवा कार्येति तत्र तत्रैवाप्यनुज्ञा दत्ता । ननु, वस्तुतो विधिः अत आसु व्यवायादिसेवासु निवृत्तिरेवेष्टा निवृत्तावेव शास्त्रस्य तात्पर्यमिति तथाहि भार्यामेवोपेयात् न स्त्रीमात्रम् ऋतावेवोपेयात् नान्यत्र, तत्रापि पञ्चपर्वातिरिक्तसमय एव रात्रावेव पुत्रकामनयैवेति क्रमक्रमतो निवृत्तिरेवाभिप्रेता । अथ "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसङ्ख्या विधीयते" इत्यस्यार्थः प्रवृत्तिकर्मकनिष्ठानां मध्ये यथा अत्यन्तमप्राप्तौ विधिः यत्र रागतो निष्पन्नतो वा सर्वथैवाप्राप्तिर्नास्ति स विधिरुच्यते यथा "अहरहः सन्ध्यामुपासीत" इति माघस्नानं प्रकुर्वीतेति निशि न स्नायात् चन्द्रग्रहे स्नायादिति अत्यन्ताप्राप्तिरहिते स्थले तु विधिर्न भवति किन्तु नियमः परिसङ्ख्या वा तत्र कुत्र वा नियमः कुत्र वा परिसङ्ख्येत्यत आह—पाक्षिके असति नियमः पाक्षिके अंशे असति निन्दा प्राप्ताभिप्राये सति नियमः यथा "ऋतौ भार्यामुपेयात्" इति ऋतुसमये हि भार्यायां गमनं च रागप्राप्तं तत्रागमनांशे निन्दितो यथा—

"ऋतुस्नातान्तु यो भार्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः" ॥

इति स्मृतेः । अतोऽत्र नियम एव "ऋतौ भार्यामुपेयात्" एवेति ऋतौ भार्यागमनायोगो न कर्त्तव्य इति फलितार्थः । अथ तत्र च तन्मध्य इत्यर्थः । अन्यत्र च अन्यत्र तु अन्यस्मिन् भागे असति सति परिसङ्ख्या यथा "पञ्च पञ्चनखा भक्ष्याः" इति अत्र रागप्राप्ते पञ्चपञ्चनखभक्षणे च निन्दा न

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

श्रूयते । किन्तु तद्विनैव भक्षणम् एव अतः पञ्चैव पञ्चनखा भक्ष्या नान्ये इति परिसङ्ख्ययैव अभ्यनुज्ञादान मात्रमतो मांसमात्रस्याभक्षणे नास्ति दोष इत्यायातम् अथ नित्यकर्मैकनिष्ठानां मतेऽर्थो यथा अत्यन्तं सर्वथा अप्राप्तौ विधिः यथा "अहरहः सन्ध्यामुपासीत" इत्यादि पाक्षिके प्राप्तौ सति विधिर्न एव एकत्र कोटौ प्राप्तौ सत्यामन्यत्राप्राप्तौ च सत्यां नियम इत्यर्थः । यथा "इमामगृभ्णन् रशनामृतस्य" इति मन्त्रेण ऋतस्य यज्ञस्य पद्योरशनां रज्जुमगृभ्णन्नित्यामामित्येकवचनेन गर्दभाश्वाभिधान्यो रशनयोरेकतरस्याः प्राप्तिर्बोध्यते । तत्र किमश्वाभिधान्यामुत गर्दभाभिधान्यामिति संशये नियम्यते अश्वाभिधानीमादत्त इति अश्वाभिधानीमेवाददीत न गर्दभाभिधानीमिति नियमे निषेधो वाक्यार्थः तदेवमपूर्वविधिरिति नियमविधिरिति द्वावप्येतौ विधी एव का खलु परिसङ्ख्येत्यपेक्षायामाह, तत्र च तन्मध्ये चेत्यर्थः अन्यत्र विधिन इतरत्र रागतश्चले प्राप्तौ सत्यां परिसङ्ख्या विधीयते । यथा रागतः सर्वमांसभक्षणप्राप्तौ पञ्चपञ्चनखेतरमांसानि सर्वाण्येव भक्ष्याणि भोक्तुः प्रत्यवायजनकानीत्यर्थः मांसभक्षणे पञ्चपञ्चनखमांसान्येव परिसङ्ख्यातानि अभ्यनुज्ञातानीति तत्रैव न प्रत्यवायः परिसङ्ख्याया अभ्यनुज्ञादानमात्रार्थत्वात् सर्वमांसाभक्षणम् एव शास्त्रतात्पर्यं एवमेव भार्यामेवाभिगच्छेन्न परकीयाम् ऋतावेव गच्छेन्नान्यत्रेत्यभ्यनुज्ञामात्रदानात् स्त्रीमात्रानभिगमन एव शास्त्रतात्पर्यम् ऋतुस्नातायां भार्यायामगमनदोषभञ्जनं तु न निषेधातिक्रमात् विध्यनुपपत्तेरिति सन्दर्भः तस्यामसत्या ऋत्वादिना वा तदनभिगमन एव दोषभवत्यामिति स्वामिचरणाः ॥ ११ ॥

तथा धनस्यापि इष्टोपभोगार्थमेव विनियोगादबुधा एव एते इत्याह—धनं चेति । धर्म एव एकमुत्कृष्टं फलं यस्य तत् यतो धर्मात् सविज्ञानमपरोक्षज्ञानमाहिते परोक्षज्ञानं भवेत् । ननु अनन्तरमेव शान्तिर्मोक्षो यस्मात्तत् एवम्भूतं धनं गृहेषु देहाद्यर्थं युञ्जन्ति ॥ १२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मानित्वं विहरन्त्यच्युतप्रियानिति वाक्यार्थं च प्रपञ्चयति—श्रियेति श्रीः गृहकाञ्चनपाश्वादिरूपा विभूतिः साम्राज्यादिरूपा अभ्यादिना जातस्मयेन दर्पेण मदेन अन्धधियो मलिनबुद्धयः खलाः सहेश्वरान् हरिसहितान् हरेः प्रियान् हरिर्यो प्रियो येषां तान्, अतः साधून् निरपराधान् अवमन्यन्ति अवजानन्ति ॥ ९ ॥

किञ्च, कामुकत्वेन स्त्र्युपास्यत्वयादिविषयाणां मनोरथानां धार्ष्ट्योपवर्णिताः अबुधाः वेदार्थानभिज्ञाः अत एव वेदोपगीतं तदर्थभूतमीशं न प्रवदन्ति न च शृण्वते न शृणवन्ति इति मुख्यस्तेषां मोहः कथम्भूतं ? सर्वेषु चराचरेषु अवस्थितम् "तत्सृष्ट्वा तदेवानुप्राविशत् अन्तः प्रविष्टः शास्ता जनानाम्" इत्यादिश्रुतं प्रपठन्तोऽपि तं न जानन्ति, अहो तेषां मोहाभिभूततेति भावः । पुनः कथम्भूतम् आत्मानमिति अन्तर्यामिणमित्यर्थः । "एष त आत्मान्तर्यामि" इति श्रुतेः । असङ्गतामाह, यथा खमिति । अभीष्टं परमपुरुषार्थरूपम् ॥ १० ॥

ननु, कामुकाः उपासितास्त्रिय इत्येव पुनः पुनः स्त्रीसङ्गः निन्द्यत्वेनोद्भासितः स किमनुपादेय एवेत्यत्र न केवलं स्त्रीसङ्गमात्रं वर्ज्यमपि तु स्त्रीसङ्गामिषभक्षणमद्यपानानि वर्ज्यानि तत्र तु नियमविधिद्वारा परिसङ्ख्याविधिवाक्यैः रागिणामभ्यनुज्ञामात्रं क्रियते इत्याह—लोके इति । लोके संसारे जन्तोः प्राणिमात्रस्य व्यवायामिषमद्यसेवास्तु नित्याः रागत एव नित्यप्राप्ताः तत्र तासु स्त्रीसङ्गमांसमद्यसेवासु चोदनाविधिर्नास्ति, अतः स्त्रीसङ्गमांसभक्षणमद्यपानानि वर्ज्यानि । ननु, "ऋतौ भार्यामुपेयात् हुतशेषं भक्षयेत् सौत्रामण्यां सुराग्रहान् गृह्णाति" इति विधिवाक्यानि सन्तीत्यत्रोच्यते अप्राप्तस्य प्रापको विधिरपूर्वविधिः यथा व्रीहीन् प्रोक्षतीति एवमुक्तवाक्यैर्न स्त्रीसङ्गमांसभक्षणमद्यपानानि विधीयन्ते, स्त्रीसङ्गादीनां रागत एव प्राप्तत्वात् अत उक्तवाक्यानि अपूर्वविधिरूपाणि न किन्तु मन्दाधिकारिणां पशुवत् स्वाभाविकप्रवृत्तिनिवृत्तये अभ्यनुज्ञामात्रमेभिर्नियमविधिरूपैर्वाक्यैः क्रियते, एतदेवाह—व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरिति । तेषु स्त्रीसङ्गादिषु "ऋतौ भार्यामुपेयात्" इत्यादिवाक्यैर्विवाहादिभिः व्यवस्थितिर्नियमः क्रियते । तथाहि पक्षे प्राप्तस्य प्रापको विधिर्नियमविधिः यथा व्रीहीनवहन्तीति अनेनावघातस्य वैतुष्यार्थत्वं न प्रतिपाद्यते अन्वयव्यतिरेकसिद्धत्वात् किन्तु अवघातं विहायोपायान्तरेण यदा वैतुष्यं कर्तुमारभते तदा अवघातस्य तेनांशेनाऽप्राप्तत्वेऽनेनाप्राप्तांशपूरणमेव क्रियते तदोपायान्तरं परित्यज्यावघातेनैव वैतुष्यं कुर्यादिति नियमः । एवं विवाहविषये एव स्त्रीसङ्गः कर्तव्यः यज्ञ एवामिषसेवा सौत्रामण्यामेव मद्यसेवेति नियमः । ननु, नियमविधिनाप्यावश्यकत्वं व्यवायादीनां सिद्धमतो निन्दा न युक्तेति आह—आसु निवृत्तिरिष्टेति । व्यवायादीनां नित्यप्राप्ततयाऽप्राप्तांशाभावात् नियमविध्यसम्भव आसु व्यवायामिषमद्यसेवासु निवृत्तिः परिसङ्ख्यैवेष्टा उभयप्राप्तावितरव्यावृत्तिपरो विधिः परिसङ्ख्याविधिः यथा "पञ्च पञ्चनखा भक्ष्या" इति पञ्चनखाः "शशकः शल्लकी गोधा कूर्मः खड्गी च पञ्चमः" इति इदं हि वाक्यं न पञ्चनखभक्षणपरं तस्य रागतः प्राप्तत्वात् नियमपरमप्राप्तांशाभावात् अतो पञ्चनखभक्षणनिवृत्तिपरं तद्वदृतौ भार्यामुपेयादित्यादीन्यपीतरव्यावृत्तिपराणि । ननु, तर्हि व्यवस्थितिरित्युक्तिरसङ्गता स्यादत्रोच्यते परिसङ्ख्याविधिः श्रुततोऽन्यव्यावृत्तिं न करोति यतः सा दोषत्रयग्रस्ता दोषत्रयं च श्रुतहानिरश्रुतकल्पनाप्राप्तबाधश्चेति श्रुतस्य पञ्चनखभक्षणस्य त्यागात् अश्रुतापञ्चनखभक्षणनिवृत्तेस्तु कल्पनात् प्राप्तस्य पञ्चनखभक्षणस्य बाधात् तस्मात्क्वचित्प्राप्तस्यतोऽप्यर्थस्य ऽपगमनार्थमित्यपूर्वविधिद्वारा निवृत्तिः फलिता भवति । यथा "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्यत्र रशनालिङ्गतो गर्दभाश्वाभिधानीरशनाद्वये प्राप्तयोर्मन्त्रस्यापूर्वविधिद्वारा परिसङ्ख्योच्यते तदाह तन्त्रवार्त्तिककारः "अप्राप्तौ विधिरत्यन्तमतो मन्त्रस्य निश्चितः । परिसङ्ख्या फलेनोक्ता न विधिः पुनः श्रुतेरिति" पञ्च पञ्चनखा भक्ष्या इत्यादिस्तु नियमविधिद्वारा परिसङ्ख्याविधित्वं भवति तद्वदृतौ भार्यामित्यादीनामपि नियमद्वारा परिसङ्ख्याविधित्वात् रागिणामभ्यनुज्ञामात्रं तैः क्रियते । ननु, यद्युक्तवाक्यैः रागिणामभ्यनुज्ञामात्रं क्रियते तर्हि—

एत आत्महनोऽशान्ता अज्ञाने ज्ञानमानिनः ।
सीदन्त्यकृतकृत्या वै कालध्वस्तमनोरथाः ॥ १७ ॥
हित्वात्यायासरचिता गृहापत्यसुहृच्छ्रियः ।
तमो विशन्त्यनिच्छन्तो वासुदेवपराङ्मुखाः ॥ १८ ॥

राजोवाच ।

कस्मिन् काले स भगवान् किं वर्णः कीदृशो नृभिः ।
नाम्ना वा केन विधिना पूज्यते तदिहोच्यताम् ॥ १९ ॥

करभाजन उवाच ।

कृतं त्रेता द्वापरं च कलिरित्येषु केशवः ।
नानावर्णाभिधाकारो नानैव विधिनेज्यते ॥ २० ॥

---

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।**

त्रैवर्गिका धर्मार्थकामप्रधानाः मध्यमिकाः देहाद्यनित्यत्ववादिनः क्षणिकात्मविपरीताः देहादिष्वेवबुद्धयः आत्मानं नानाक्लेशैः घातयन्ति जीवन्मृता भवन्तीत्यर्थः—

"यश्च मूढतमो लोके यश्च बुद्धेः परं गतः ।
तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः" ॥

इति तृतीयस्कन्धस्थविदुरवचनाच्च ॥ १६ ॥

---

**भाषा टीका ।**

जैसे मदिरा का सूंघना मात्र भक्षण विहित है तैसे हि पशु का मंत्र से यज्ञ में वध ही विहित है न कि केवल हिंसा करना इसी प्रकार से मैथुन भी सन्तानों के वास्ते है न कि केवल मैथुन के वास्ते इस निर्मल धर्म को वे कर्म कापट्टी मीमांसक नहीं जानते हैं ॥ १३ ॥

जो कि इस प्रकार को नहीं जानने वाले असाधु हैं मनम्र हैं सत्पुरुषों का अभिमान करते हैं और लोभ के विश्वास से पशुओं को मारते हैं उन को वे ही पशु दूसरे जन्म में मार कर खाते हैं ॥ १४ ॥

पराये शरीर में वर्तमान अपने आत्मा ईश्वर हरि का द्वेष करने वाले पुरुष मारनेवाले कुटुम्ब सहित इस देह में स्नेह करने से नरकों में गिरते हैं ॥ १५ ॥

जो पुरुष मोक्ष के ज्ञान को नहीं प्राप्त भये हैं और जो मूर्ख भी नहीं हैं किन्तु धर्म अर्थ कामों में लगे हैं वे पुरुष अपने आत्मा का घात करते हैं ॥ १६ ॥

---

**श्रीधरस्वामिकृतभावार्थदीपिका ।**

तदाह—एत इति । आत्महनः आत्मापह्नवकर्तारः अज्ञाने कर्मणि तथा च श्रुतिः—

"असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः" ॥

इति ॥ १७ ॥

या गृहापत्यसुहृच्छ्रियस्ता हित्वा ॥ १८ ॥

तदेवं भगवद्भक्तिरेव कर्तव्येति स्थिते तत्र विशेषं पृच्छति, कस्मिन्काल इति । किंवर्णः कीदृग्वर्णवान् कीदृशः कीदृगाकारः केन वा नाम्ना केन वा विधिना ॥ १९ ॥

एषु कृतादिकालेषु नाना प्रकारा वर्णाभिधाकारा यस्य सः नानैव विधिना विविधेनैव मार्गेण ॥ २० ॥

---

**श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपनी टिप्पणी ।**

तदाह आत्मघातित्वमाह—तथा च श्रुतिः । काम्यकर्मिणामात्महन्तृत्वे प्रमाणं श्रुतिः । ईशावास्योपनिषदि अविद्याविन्दार्थोऽयं मन्त्रः ते लोका इति तच्छब्दो यच्छब्दार्थे परमात्मभावमपहाय देवादयोऽप्यसुरास्तेषां स्वभूता असुर्या नाम शब्दोऽनर्थको निपातः लोकाः लोक्यन्ते दृश्यन्ते भुज्यन्ते इति स्वरूपाणि कर्मफलानि अन्धेनादर्शनात्मकेनाज्ञानेन तमसा आवृता आच्छादिताः 'तान् स्थावरान्तान् लोकान् ते जनाः प्रेत्य इमं देहं त्यक्त्वा यथाकर्म यथाश्रुतं गच्छन्ति, ते के ? ये केचिदात्महनः आत्मानं घ्नन्तीति आत्महनोऽविद्वांसः ते हि आत्मानं नित्यं हिंसन्ति अविद्यादोषेण विद्यमानस्यात्मनस्तिरस्करणात् ॥ १७ ॥

अत्यायासेन अतिश्रमेण रचिताः सम्पादिता या गृहापत्यसुहृत्श्रियस्ता हित्वेति अत्रदोगित्वत्वमपास्यया श्रिय इति प्रथमान्तमन्वयेन स्यात् ॥ १८ ॥

तदेवमभक्तनिन्दया भक्तिमार्गबाहुल्यं प्रकाश्य तत्र भक्तौ यस्य भक्तिः कर्तव्या स भगवान् इह जगति पूज्यते तत्कालवर्णाकारादि भक्तैरिति वक्तव्यतानाम ॥ १९ ॥

तत्तत्कालीनयुगावतारवर्णपूजाविधानं सङ्क्षेपकथनं स्यात् करभाजनस्तु करावेव भाजनं यस्येति तथा "पाणिपात्रोदराः

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

मत्रो मासिकेन न सङ्ग्रही" इत्युक्तेस्तु करभाजनो न सङ्ग्रहात्तत्र तथा भूतत्वात् स एवोवाचेति ज्ञेयम् इति चत्वारि युगानि सन्ति एषु कृतादिषु ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च, एत आत्महनः अशान्ताः अशनापिपासादिपीडिताः अज्ञाने सत्यपि ज्ञानमानिनः ज्ञानसद्भावाभिमानवन्तः कालेन ध्वस्ता मनोरथा येषां ते अत एवाकृतकृत्याः सीदन्ति जीवद्दशायां क्लिश्यन्ति इत्यर्थः ॥ १७ ॥

अत्यायासेन रचिताः सम्पादिताः गृहापत्यसुहृत्स्त्रीः हित्वा अनिच्छन्तोऽपि तमो नरकं विशन्ति वासुदेवपराङ्मुखास्तमो विशन्तीत्यनेन वासुदेवभक्तास्तु तत्पदं विशन्तीति सूचितम् ॥ १८ ॥

तत्र विशेषं पृच्छति, कस्मिन्निति । किं वर्णः कीदृग्विधवर्णवान् कीदृशः कीदृगाकारः केन वा नाम्ना केन वा विधिना पूज्यते तदेतत्सर्वमिहाधुनोच्यताम् ॥ १९ ॥

कृतमिति एषु कृतादिकालेषु नानाप्रकारा वर्णाभिधाकारा यस्य सः नानैव विधिना विविधेनैव मार्गेण पूज्यते ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उभयेऽपि त्रैवर्गिकाः अधः पतन्तीत्युक्तं तत्र केषां कुत्र निपात इत्यतो अधोनिपातं निरूपयति । ये नश्यन्ति । तत्रोभयेषु त्रैवर्गिकेषु ये आत्महनः परमात्मानं द्विषन्तः ते तमो विशन्तीत्यन्वयः । सीदन्त्यवसीदन्ति दुःखैकभाजो भवन्ति अशान्ता इत्यस्य विवरणं वासुदेवपराङ्मुखा इति अत्यायासरचितगृहादीन् हित्वा कालात्मना भगवता ध्वस्तः ब्रह्मत्वं गमिष्याम इत्यादिमनोरथो येषां ते तथा मनुकल्पानं ध्वस्तमोक्षजसुखसुखरहितं तमः विशन्ति ॥ १७ ॥ १८ ॥

मुमुक्षुभिः अधोक्षज ईज्यताम् इति निर्णयेऽपि तत्र राजा पृच्छति, कस्मिन्निति । तत्सर्वम् ॥ १९ ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कस्मिन्निति । नृभिः साधारणैरित्यर्थः । असाधारणानामन्यावताराणां उपासनायाः सर्वदा श्रुतत्वात् ॥ १९ ॥—२० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

"असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः" ॥

इति श्रुतस्तेषामधोगतिरित्याह—हित्वेति । या गृहापत्यसुहृच्छ्रियः वस्ता हित्वा त्यक्त्वा ॥ १८ ॥

एतादृशानामुद्धारो भगवदवतारं विना न सम्भवेदिति मनसि कृत्वा पृच्छति, । कस्मिन्निति । कीदृगाकारः ॥ १९—२० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जीवतामेव सकारणं क्लेशं प्रपञ्चयति, । एत इति । आत्महनः अज्ञातात्मतत्त्वा आत्माज्ञानमेवात्महननं तच्चातिगर्हितदेहपातकत्वयोक्तमीशावास्योपनिषदि—

"असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः" ॥

इति अज्ञाने परमवेद्यपरमात्मज्ञानभिन्ने कर्मज्ञानमेव परमं ज्ञानमित्यभिमानवन्तः कालेन ध्वस्ता मनोरथाः येषां ते अकृतकृत्याः असम्पादितमुक्त्युपायाः अतः कारणात् सीदन्त्यवसीदन्ति ॥ १७ ॥

मृतानां तु संसारप्रवेशमाह—हित्वेति । अत्यायासेनातिश्रमेण रचिताः सुसम्पादिताः वा गृहादिरूपाः श्रियः सम्पदस्ताः अनिच्छन्तोऽपि हित्वा वासुदेवपराङ्मुखास्तमो विशन्ति, जन्ममरणलक्षणं संसारं प्राप्नुवन्ति वासुदेवभक्तास्तु संसाराद्विमुच्यन्ते इति फलितोऽर्थः ॥ १८ ॥

वासुदेवभजने विशेषं पृच्छति । कस्मिन् काले इति । इह लोके कस्मिन् काले कस्मिन् युगे किं वर्णः कीदृग्वर्णः कीदृशः किमाकारः केन नाम्ना वा केन विधिना वा स वासुदेवः भगवान् नृभिः पूज्यते तत्सर्वमुच्यताम् ॥ १९ ॥

प्रत्युत्तरमाह—कृतमिति । एषु कृतादिषु नाना अनेकप्रकाराः वर्णाभिधाकारा यस्य सः श्रीवासुदेवः नानैव विधिना अनेकप्रकारेण विधिना इज्यते ॥ २० ॥

---

भाषा टीका ।

यह लोक सब आत्मघाती हैं और अशान्त हैं अज्ञान से ज्ञानमानने वाले हैं तब उनके सब मनोरथ काल के वश से नष्ट हो जाते हैं तब वे कृत कृत्य न होनेसे दुःखी होते हैं ॥ १७ ॥

अति परिश्रम से अर्जन किये जो घर स्त्री पुत्र धन इन सबों को छोड़ कर नहीं भी छोड़ना चाहते हैं तोभी वासुदेव से विमुख होनेसे नरकों को चले ही जाते हैं ॥ १८ ॥

राजोवाच ।

हे श्रीनारायण भगवान् किस युग मे किसवर्ण को धारण करते हैं और कैसे स्वरूप के होते हैं किसनामको पाते हैं और किस विधिसे मनुष्यों से पूजित होते हैं सो आप मेरे से कहिये ॥ १९ ॥

करभाजन उवाच ।

सत्ययुग त्रेता द्वापर कलियुग इनचारों युगों में केशव भगवान नाना प्रकार के वर्णोंको तथा आकारोंको धारण करते हैं और नाना प्रकार की विधि से पूजित होते हैं ॥ २० ॥

---

तं तदा मनुजा देवं सर्वदेवमयं हरिम् ।
यजन्ति विद्यया त्रय्या धर्मिष्ठा ब्रह्मवादिनः ॥ २५ ॥
विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः ।
वृषाकपिर्जयन्तश्च उरुगाय इतीर्यते ॥ २६ ॥
द्वापरे भगवान् श्यामः पीतवासा निजायुधः ।
श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः ॥ २७ ॥
तं तदा पुरुषं मर्त्या महाराजोपलक्षणम् ।
यजन्ति वेदतन्त्राभ्यां परं जिज्ञासवो नृप ! ॥ २८ ॥
नमस्ते वासुदेवाय नमः सङ्कर्षणाय च ।
प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः ॥ २९ ॥
नारायणाय ऋषये पुरुषाय महात्मने ।
विश्वेश्वराय विश्वाय सर्वभूतात्मने नमः ॥ ३० ॥
इति द्वापर उर्वीश ! स्तुवन्ति जगदीश्वरम् ।
नानातन्त्रविधानेन कलावपि यथा शृणु ॥ ३१ ॥
कृष्णवर्णं त्विषाऽकृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ।
यज्ञैः सङ्कीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥ ३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कस्मिन्काले इति प्रश्नस्योत्तरं कृते इति किं वर्णं [illegible] शुक्ल इति कीदृश [illegible] चतुर्बाहुरित्यादिना ॥ २१ ॥

केन विधिनेत्यस्य तपसेत्याद्युत्तरम तपसा आलोचनात्मकेन ध्यानेन ॥ २२ ॥

[illegible] नामभिरित्यस्योत्तरं हंस इत्यादि पद्यमुत्तरश्लोके ॥ २३ ॥

त्रिगुणा त्रिगुणिता [illegible] मेखला यस्य [illegible]-मस्तकः [illegible]मूर्तिः हिरण्यकेशः "हिरण्यश्मश्रुः हिरण्यकेशः" इति श्रुतिप्रोक्तः प्रकाशकेशः ॥ २४ ॥

भाषा टीका ।

कृतयुग मे शुक्लवर्ण चारभुजा जटा वल्कल वस्त्र कृष्ण मृगचर्म यज्ञोपवीत तुलसी पद्माक्षादि माला दण्ड कमण्डलु धारण किये रूप से रहते हैं ॥ २१ ॥

उसकाल मे मनुष्य लोग बड़े शान्त होते हैं और वैर रहित सब मे सुहृद सम दृष्टि वाले होकर तपस्या से शम दमादि से उन परमेश्वर का पूजन करते हैं ॥ २२ ॥

हंस सुपर्ण वैकुण्ठ धर्म योगेश्वर मनु ईश्वर पुरुष अव्यक्त परमात्मा इन नामों से गाये जाते हैं ॥ २३ ॥

वेही भगवान् त्रेता मे रक्त वर्ण वाले होकर चार भुजा तीन कटिमेखला सुवर्ण के रङ्ग के सुवर्ण केश तीनों वेद स्वरूपको धारण करते हैं होम के लिये स्रुक् स्रुवादिकों को हस्त मे ग्रहण करते हैं ॥ २४ ॥

श्रीबलरामायिकृतभागवतदीपिका ।

त्रय्या विद्यया वेदत्रयोक्तकर्मभिः ॥ २५ ॥

पृश्निगर्भः पृश्निः सुतपसः प्रजापतेः पत्नी तस्याः पुत्र वृषाकपिः स्मृतः सन् वर्षति कामान् [illegible] क्लेशानिति तथ जयत्येव सर्वदा जयन्तः ॥ २६ ॥

श्यामोऽतसीपुष्पसङ्काशः निजानि चक्रादीन्यायुधानि यस्य सः श्रीवत्सो नाम वक्षसो दक्षिणभागे रोमप्रदक्षिणावर्तः स आदिर्येषां [illegible] तैरङ्कैर् [illegible] कौस्तुभादिभिः ॥ २७ ॥

महाराजोपलक्षणं छत्रचामरादियुक्तम वेदतन्त्राभ्यां वैदिकेनागमिकेन च मार्गेण यजन्ति पूजयन्ति परमीश्वरं [illegible] जिज्ञासवः ॥ २८ ॥

नामान्याह । नमस्त इति ॥ २९—३० ॥

नानातन्त्रविधानेनेति कलौ तन्त्रमार्गस्य प्राधान्यं दर्शयति ॥ ३१

ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।
भृत्यार्तिहं प्रणतपाल ! भवाब्धिपोतं वन्दे महापुरुष ! ते चरणारविन्दम् ॥ ३३ ॥
त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्मिष्ठ ! आर्यवचसा यदगादरण्यम् ।
मायामृगं दयितयेप्सितमन्वधावद्वन्दे महापुरुष ! ते चरणारविन्दम् ॥ ३४ ॥

एवं युगानुरूपाभ्यां भगवान् युगवर्तिभिः ।
मनुजैरिज्यते राजन् ! श्रेयसामीश्वरो हरिः ॥ ३५ ॥
कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः ।
यत्र सङ्कीर्तनेनैव सर्वः स्वार्थोऽभिलभ्यते ॥ ३६ ॥
न ह्यतः परमो लाभो देहिनां भ्राम्यतामिह ।
यतो विन्देत परमां शान्तिं नश्यति संसृतिः ॥ ३७ ॥
कृतादिषु प्रजा राजन् ! कलाविच्छन्ति सम्भवम् ।
कलौ खलु भविष्यन्ति नारायणपरायणाः ॥ ३८ ॥
क्वचित्क्वचिन् महाराज ! द्रविडेषु च भूरिशः ।
ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥ ३९ ॥
कावेरी च महापुण्या प्रतीची च महानदी ।
ये पिबन्ति जलं तासां मनुजा मनुजेश्वर ! ॥
प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इति वक्ष्यमाणप्रकारेण [illegible] सङ्कीर्तनप्रायैर्यज्ञैः सुमेधसः सुकृष्णं यजन्ति ॥ ३२ ॥

भाषा टीका ।

इस काल में धर्मात्मा ब्रह्मज्ञानी सब मनुष्य सर्व देव स्वरूप हरि भगवान् का वेदत्रयी विद्या के मंत्रों से पूजन करते हैं ॥ २५ ॥

उस समय में विष्णु यज्ञ पृश्निगर्भ सर्वदेव उरुक्रम वृषाकपि जयन्त उरुगाय इन नामों से गाये जाते हैं ॥ २६ ॥

द्वापर में भगवान् श्यामल मूर्ति होते हैं पीतवस्त्र धारण करते हैं शङ्खचक्रादि आयुध वक्षस्थल में श्रीवत्स का चिन्ह और भी निज चिन्हों से सहित रहते हैं ॥ २७ ॥

उस समय में परमात्मा कि जिज्ञासा करने वाले पुरुष पुरुष वेदों से तथा तंत्रों से भगवान् को महाराजाभिषेकादिक से पूजन करते हैं ॥ २८ ॥

और वासुदेव सङ्कर्षण प्रद्युम्न अनिरुद्ध रूप वाले भगवन् आप के अर्थ नमस्कार है ॥ २९ ॥

नारायण ऋषि आदिपुरुष महात्मा विश्वेश्वर विश्व सर्वात्मा आपके अर्थ नमस्कार है ॥ ३० ॥

हे राजन् ! इस प्रकार से द्वापर में जगदीश परमात्मा की स्तुति करते हैं अब नाना तंत्रों के विधान से जैसे कलियुग में पूजन करते हैं सो भी तुम सुनो ॥ ३१ ॥

कान्ति से नील वर्ण वाले अङ्ग उपाङ्ग अस्त्र पार्षदों सहित श्रीकृष्ण मूर्ति का नाम सङ्कीर्तनादि यज्ञों से सुन्दर बुद्धिमान् पुरुष भजन करते हैं ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्तुतिमाह । ध्येयमिति । हे प्रणतपाल ! महापुरुष ! ते चरणारविन्दं वन्दे कथम्भूतम् ध्येयं ध्यातुं योग्यं सदेति सर्वत्र सर्वदा ध्येयत्वे हेतुः इन्द्रियकुटुम्बादिभिः परिभवस्तिरस्कारस्तं हन्तीति तथा तम् [illegible] महाभयपूरकम् किञ्च तीर्थास्पदं गङ्गाद्याश्रयत्वेन परमपावनम् शिवविरिञ्चिभ्यां नुतं स्तुतं महत्तमम् । ननु तौ [illegible] किमर्थं ताभ्यां नुतम् [illegible] । शरण्यमाश्रयणीयं सुखार्थमकामस्यापि । तर्हि [illegible] स्तुतं प्राकृतस्य कथं गोचरः स्यात् न भृत्यार्ति[illegible] कस्यापि भृत्यमात्रस्यार्तिहन्तृ न केवलमागमिकार्थ[illegible] किन्तु भवाब्धिपोतं संसाराब्धितारकं च ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

येन जन्मशतैः पूर्वं वासुदेवः समर्चितः।
तन्मुखे हरिनामानि सदा तिष्ठन्ति भारत॥

इत्यस्मात्र सर्वापराधकृदपीत्यादिनामापराधभञ्जनस्तोत्रे च तस्मात्सर्वत्रैव युगे श्रीमत्कीर्तनस्य समानमेव सामर्थ्यं कलौ तु श्रीभगवता कृपया तद्ग्राह्यत इत्यपेक्ष्यैव तत्र तत्प्रशंसेति स्थितम् अत एव यद्यन्यापि भक्तिः कर्तव्या तदा तत्संयोगेनैवेत्युक्तम् यज्ञैः सङ्कीर्तनप्रायैरिति अत्र च स्वतन्त्रमेव नामकीर्तनमत्यन्तप्रशस्तं—

हरेर्नाम हरेर्नाम हरेर्नामैव केवलम्।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा॥

इत्यादौ तस्मात्साधूक्तं कलिं सभाजयन्त्यार्या इत्यादि-त्रयम् ॥ ३८ ॥ ३९ ॥

प्राय इति तेषु भक्तेष्वपराधिनो विनेत्यर्थः ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अथ कलियुगवर्तिनो जनान् प्रायः कृष्णरामयोर्भजनमार्गमुपदिशन्नपि तयोः स्तुतिमपि आह द्वाभ्याम्। ध्येयं ध्यातुमर्हं सदेति नात्र कालदेशानियम इति भावः। इन्द्रियकुटुम्बादिभिर्यः परिभवस्तिरस्कारस्तं हन्तीत्यनुसंहितं फलमभीष्टदोहमित्यनुसंहितं तीर्थास्पदमिति ध्यानमात्रेण गङ्गादिसर्वतीर्थस्नानसिद्धेः कलौ दुष्टदेशशक्तिभाविजनितं दुर्वारमपराधमपि नाशकमिति भावः। तत्र सदाचारमाह। शिवविरिञ्चीति सुखसेव्यत्वमाह शरण्यमिति। भक्तवात्सल्यमाह-भृत्यार्तिहमिति। न च भृत्यानां परिचर्यादिकमप्यपेक्षत इत्याह हे प्रणतपालेति। भृत्याभिमानमन्तं प्रणतिमात्रेणैव पालयतीति भावः। भवाब्धिपोतमिति 'त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं भवाब्धि'मिति ब्रह्मोक्तेः भवाब्धिः कदा निस्तीर्ण इत्यपि त्वद्भृत्यो न जानातीति भावः। अन्तरङ्गा तदवान्तरावतारस्य व्यञ्जनेनैव स्तुतिमती यथा हे महापुरुष हे परमहंस महामुनीन्द्र शिवविरिञ्चिनुतम् आचार्यहरिदासाङ्घ्रिं स्तुतमन्यत् समानम् ॥ ३३ ॥

अन्यैः सुदुस्त्यजा या सुरेप्सिता राज्यलक्ष्मीस्तां त्यक्त्वा यदिति य इत्यर्थः अरण्यमगात् किं राज्यश्रीफलदर्शनेन न धर्मिष्ठः आर्यस्य गुरोर्दशरथस्य वचसा ननु पितृवचनमुक्तं प्रेयसीप्रेमवशात्त्वं चाह दयितया सीतया ईप्सितं मायामृगं स्वर्णाकारं मृगं योऽन्वधावत् तस्य वन्दे अङ्घ्रिपद्मं महापुरुषः प्रागुक्तोऽपि दुस्त्यजा च सुरैरपि ईप्सितं राज्यं स्वकान्तेन विराजमानत्वं यस्याः साक्ष या लक्ष्मीस्तां त्यक्त्वा यत् यः अरण्यमगात् तत्र हेतुः आर्यस्य विप्रस्य वचसा तत्र सर्वमपि गार्हस्थ्यसुखं त्यक्त्वा प्रयातेति यज्ञोपवीतत्रोटनपूर्वकं यत् शापवचस्तेन धर्मिष्ठः धर्मेण मध्ये अतिशयेन श्रेष्ठः विप्रवाक्यं मान्यथा भवत्विति कृतशापस्वीकार इत्यर्थः। गत्वा किमकरोदित्यत आह। मायां कलत्रपुत्रमित्रादिरूपां मृगयति अन्वेषयतीति मायामृगः संसारासिपो जनस्तमन्वधावत् कीदृश्या दया अतिशयेनास्तीति दयी तस्य भावो दयिता तया हेतुना ईप्सितं स्वामीप्सितम् आलिङ्गनमिवेयत्यर्पणं इत्वा संसारान्धकूपपतितमपि तं प्रेमाब्धौ पातयितुमिति निरुपधिमहाकारुण्यं द्योतितम् ॥ ३४ ॥

युगानुरूपाभ्यां रूपनामभ्यां यदुक्तं भागवतामृते—

कथ्यते वर्णनामभ्यां शुक्लः सत्ययुगे हरिः।
रक्तः श्यामः क्रमात् कृष्णस्त्रेतायां द्वापरे कलौ॥

इति तत्र सत्यत्रेताद्वापरेषु हंससुपर्णेति विष्णुयज्ञेति वासुदेवसङ्कर्षणेत्यादि कीर्तनीया भगवन्नामावलीवर्णोक्ता तथा कलौ सा वर्तमानापि नोक्ता रहस्योद्घाटनाभावार्थमिति ज्ञेयम् ॥ ३५ ॥

चतुर्षु सत्यादिषु मध्ये कः श्रेष्ठ इत्यपेक्षायां कलिरेवेत्याह। कलिमिति। गुणज्ञाः कीर्तनप्रचाररूपं तद्गुणं जानन्तः तद्दोषाग्रहणात् सारभागिनः तस्य सारभाग एव भागो वर्तते येषां ते। ननु कलेरपारदोषवत्त्वात् कथं ते सारभागमेव गृह्णन्तीत्यत आह अपारगुणवत्त्वमपीत्याह। यत्रेति। सर्वः स्वार्थः प्राप्यः यदुक्तम्—

ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम्॥

इति ॥ ३६ ॥

सर्वधामसारमाह। न ह्यत इति। इह भवः प्राप्त्युपायेषु भ्राम्यतां श्रमं प्राप्नुवतां परमां शान्तिं भक्तिं परमामिति विशेषणोपन्यासात् ॥ ३७ ॥

साधुसङ्गजनिता केवला भक्तिः कलावेव प्रायेण भवतीत्याह। कृतादिष्विति। यत्र बहवो नारायणपरायणास्तत्सङ्गिमात्रार्थिनस्तत्राप्यस्य तेषां सङ्गतो भक्तिस्ततः प्रेमभक्तिश्च सम्भवेदित्याकाङ्क्षयेति भावः। चकाराद्गोदोद्भवाः ॥ ३८—४०

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

"ऋग्वेदे सयजुर्वेदे तथैवाथर्वसामसु।
पुराणे सोपनिषदे तथैव ज्योतिषेऽर्जुन—
सांख्ये च योगशास्त्रे च आयुर्वेदे तथैव च॥

बहूनि मम नामानी"ति मोक्षधर्मे श्रीकृष्णवचनात् सर्वाणि नामानि—

सर्वं कृष्णः स्थावरं जङ्गमं च।
विश्वात्मानं विश्वमेतं प्रणीहि॥
यत् प्रशस्तं च लोकेषु पुण्यं यच्च शुभाशुभम्
तत्सर्वं केशवोऽचिन्त्यो विपरीतमतः परम्॥

एतादृशः केशवोऽयं स्वयम्भूर्नारायणः परमश्चाव्ययश्च
मध्याद्यन्तो जगतस्तस्थुषश्च सर्वेषां यो भूतानां प्रभवश्चाव्ययश्चेति
राजधर्मे सर्वस्य देवमनस्य वचनात्सर्वाणि रूपाणि च—

पितामहादपि वरः शाश्वतः पुरुषो हरिः।
कृष्णो जाम्बूनदाभासो व्यभ्रे सूर्य इवोदितः॥
श्रीवत्साङ्को हृषीकेशः सर्वदैवतपूजितः।
ब्रह्मा तस्योदरभवस्तथाहं च ललाटजः॥
शिरोरुहेभ्यो ज्योतींषि रोमभ्यश्च सुरासुराः।
ऋषयो देहसम्भूतास्तथा लोकाश्च शाश्वताः॥

इति दानधर्मे शिववचनात् सर्वदेवपूजितत्वं सर्वकारणत्वं च—

देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन् ! ।
सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्तम् ॥ ४१ ॥
स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः ।
विकर्म यच्चोत्पतितं कथञ्चिद्धुनोति सर्वं हृदि सन्निविष्टः ॥ ४२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भक्तिद्रोहस्य हन्ता च तथा रावणनाशनः ।
विभीषणस्य भगवान् राज्यदो वालिनाशनः—
सुग्रीवराज्यदाता च बलिराज्यापहारकः ॥

इति हरिवंशे गरुडवचनात् रामादिमूर्तिधारित्वं च श्रीकृष्णस्य प्रसिद्धम् अतो महापुरुषादिनामभिः शिवादिपूज्यत्वेन च श्रीरामावतारगुणवर्णनेन च कलौ श्रीकृष्णस्तोतव्यो मुमुक्षुभिरित्याशयेन स्तुतिमाह । ध्येयमित्यादि श्लोकद्वयेन । हे महापुरुष ! पुरुषसूक्तादिवेदैकवेद्य हे प्रणतपाल ! नानावतारैः भक्तपालने दक्षकृत ते चरणारविन्दं वन्दे कथम्भूतं ध्येयं ध्यातुं योग्यम् सर्वेत्वस्य सर्वत्र सम्बन्धः ध्येयत्वे हेतवः बाह्याऽभ्यन्तरैः शत्रुभिर्यः परिभवोऽनादरस्तं हन्तीति तथा तत् किञ्चाभीष्टदोहं मनोवाञ्छितपूरकम् किञ्च तीर्थास्पदं गङ्गाद्याश्रयत्वेन परमकीर्त्याश्रयत्वेन च परमशुद्धिहेतुभूतम् किञ्च शिवविरिञ्चिभ्यां नुतं स्तुतम् ननु ताभ्यां समर्थाभ्यां किमर्थं नुतं तत्राह । शरण्यमाश्रययोग्यं तयोरपि रक्षकमित्यर्थः । ननु शिवादिनुतमस्माकं दृग्गोचरः कथं स्यात्तत्राह । भृत्यार्तिहं सर्वभृत्यार्तिहरम् किं बहुना भवाब्धिपोतं संसारसमुद्रतारकम् ॥ ३३ ॥

हे धर्मिष्ठ ! यावेववचसा पितृवाक्येन वनं यः अगमत् अविचलितत्वात् सन्धिः दयितया प्रियया श्रीसीतया ईप्सितं मायामृगं मारीचं यन्वधावत् तत्ते चरणारविन्दं वन्दे ॥ ३४ ॥

उपसंहरति । एवमिति । युगानुरूपाभ्यां युगानुसारेण प्रवृत्ताभ्यां श्रेयस्कराभ्यामकाराभ्याम् ॥ ३५ ॥

सारभागिनः सारग्राहिणः ॥ ३६ ॥

इह कलौ यतः सङ्कीर्तनात् यतः सङ्कीर्तनात्परमां शान्तिं मोक्षम् ॥ ३७ ॥

अत एव कृतादिषु संस्थिताः प्रजाः कलौ सम्भवं जन्मेच्छन्ति अत एव नारायणः "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते" इति श्रीमुखगीतः सर्वजगत्प्रवर्तको भगवान्वासुदेवः परायणं यासां ताः कलौ सम्भवं प्राप्य नामसङ्कीर्तनादिनाऽऽराधनभक्तिनिष्ठां चाऽऽचार्यानुग्रहात्प्राप्नुवन्तीत्यर्थः "यो वक्ष्यति स एव स" इति वचनात् ॥ ३८ ॥

तासां सम्भवस्थानान्याह क्वचित्क्वचिदिति सार्द्धाभ्याम् । क्वचित् क्वचित् श्रीमद्वृन्दावनपुरुषोत्तमक्षेत्रादिषु पुष्करप्रयागनैमिषारण्यादिषु क्षेत्रेषु च श्रीमथुरादिषु पुरीषु च सर्ववेदपुराणप्रसिद्धासु गङ्गायमुनासरस्वत्यादिनदीषु च भूरिशः बहुशः द्राविडेषु च वासुदेवे प्रायो भक्ताः भविष्यन्तीति सार्द्धयोरन्वयः ॥ ३९—४० ॥

भाषा टीका ।

हे शरणागतों के रक्षक आपका जो ध्यान करने को योग्य संसार का नाश करने वाला मनोरथ पूर्ण करने वाला तीर्थों के तुल्य पवित्र कारक महादेव ब्रह्मादिकों से नमस्कृत शरणागत रक्षक भक्तों का दुःख निवारक संसार सागर का जहाज ऐसा चरणारविन्द तिसको मैं वन्दना करता हूं ॥ ३३ ॥

श्रीरामावतार में जो परम धर्म कि निष्ठा करने से पिता के वचन पालने के वास्ते देवताओं के भी चाहना के योग्य राज्य लक्ष्मी को छोड़ कर जङ्गल को चला गया फिर जानकीजी के इच्छा करने से माया मृग के पीछे दौड़ा तिस चरणारविन्दको मैं वन्दन करता हूं ॥ ३४ ॥

इस प्रकार से युगों मे होनेवाले मनुष्य उन युगों के कर्म नाम रूपों से सम्पूर्ण कल्याणों के ईश्वर हरि भगवान् का पूजन करते हैं ॥ ३५ ॥

जो लोग गुणों के जानने वाले हैं और भजने वाले हैं श्रेष्ठ हैं वे लोग कलियुग की प्रसंसा करते हैं क्योंकि इस युग में हरिनाम सङ्कीर्तनही से सर्वार्थ सिद्ध होते हैं [illegible]

इस संसार में भ्रमने वाले देह धारियों को इस से ज्यादा कोई लाभ नहीं है जिस नाम सङ्कीर्तनसे परम शान्ति प्राप्त होती है और संसार छूट जाता है ॥ ३७ ॥

हे राजन् ! सत्ययुगादि कों में भी प्रजा सब कलियुग में जन्म लेना चाहते हैं क्योंकि कलियुग में नारायण के परम भक्त पुरुष उत्पन्न होंगे करके ॥ ३८ ॥

हे महाराज ! कहीं कहीं पृथिवी में थोड़े २ होंगे द्राविड़ देशमे बहुत होंगे जहां कि ताम्रपर्णी नदी है कृतमाला है पयस्विनी है बड़ी पवित्र कावेरी महा नदी है हे मनुजेश्वर उहां के जो मनुष्य उन नदियों के जलों को पान करते हैं वे निर्मल बुद्धि वाले होकर नारायण वासुदेव के भक्त होते हैं इसदेश में भये भक्त श्रीकुलशेखर स्वामी श्रीशठकोपस्वामी श्रीरामानुज स्वामी आदिक भये हैं ॥ ३९ ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भक्तस्य विधिनिषेधनिवृत्तेः कृतकृत्यतामाह । देवर्षीति । आप्ताः पोष्याः कुटुम्बिन इतरे देवादयः एतेषां यथाऽभक्तः ऋणी अत एव तेषां किङ्करस्तदर्थं नित्यं पञ्चयज्ञादिकर्ता तथा च स्मृतिः "हीनजाति परिक्षीणमृणार्थं कर्मकारयेदि"ति अयन्तु न तथा कोऽसौ यः सर्वभावेन श्रीमुकुन्दं शरणं गतः कर्तं कृत्यं परित्यज्य यद्वा कर्तं भेदं परिहृत्य कृती केन इत्यस्मात् वासुदेवः सर्वमिति बुद्ध्येत्यर्थः ॥ ४१ ॥

नारद उवाच ॥

धर्मान् भागवतानित्थं श्रुत्वाऽथ मिथिलेश्वरः ।
जायन्तेयान्मुनीन्प्रीतः सोपाध्यायो ह्यपूजयत् ॥ ४३ ॥
ततोऽन्तर्दधिरे सिद्धाः सर्वलोकस्य पश्यतः ।
राजा धर्मानुपातिष्ठन्नवाप परमां गतिम् ॥ ४४ ॥
त्वमप्येतान् महाभाग ! धर्मान् भागवतान् श्रुतान् ।
आस्थितः श्रद्धया युक्तो निःसङ्गो यास्यसे परम् ॥ ४५ ॥
युवयोः खलु दम्पत्योर्यशसा पूरितं जगत् ।
पुत्रतामगमद्यद्वां भगवानीश्वरो हरिः ॥ ४६ ॥
दर्शनालिङ्गनालापैः शयनासनभोजनैः ।
आत्मा वां पावितः कृष्णे पुत्रस्नेहं प्रकुर्वतोः ॥ ४७ ॥
वैरेण यं नृपतयः शिशुपालपौण्ड्रशाल्वादयो गतिविलासविलोकनाद्यैः ।
ध्यायन्त आकृतधियः शयनासनादौ तत्साम्यमापुरनुरक्तधियां पुनः किम् ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विहितकर्मनिवृत्तिमुक्त्वा निषेधनिमित्तप्रायश्चित्तनिवृत्तिमाह । स्वपादमूलमिति । त्यक्तोऽन्यस्मिन्देहादौ देवतान्तरे वा भावो येन अत एव तस्य विकर्मणि प्रवृत्तिर्न सम्भवति यच्च कथंचित्प्रमादादिना उत्पतितं भवेत्तदपि हरिर्धुनोति ननु यमस्तत्र मन्येत तत्राऽह परेशः ननु 'श्रुतिस्मृती ममैवाज्ञे' इति भगवद्वचनात्स्वाज्ञाभङ्गं कथं सहेत तत्राऽह प्रियस्य ननु नायं पापक्षयार्थं भजते तत्राऽह हृदि सन्निविष्टः नहि वस्तु शक्तिरर्थितामपेक्षत इत्यर्थः ॥ ४२ ॥

जायन्तेयान् जयन्त्याः पुत्रान् ॥ ४३ ॥

उपातिष्ठन्ननुतिष्ठन् ॥ ४४ ॥

निःसंगो भूत्वा ॥ ४५ ॥

प्रासङ्गिकमेवमुक्त्वा युवां तु संगत एव कृतार्थाविस्याह युवयोरिति । यां युवयोः ॥ ४६ ॥

यच्च सर्वकर्मार्पणादिभागवतधर्मैरन्येषामिव युवयोः सत्त्वशुद्धिद्वारापादनीया पुत्रोपलालनेनैव भागवतधर्मसर्वस्वनिष्पत्तेरित्याह । दर्शनेति । कृष्णे पुत्र इति स्नेहं प्रकुर्वतोर्वां तस्य दर्शनादिभिरात्मा पावितः शोधितः ॥ ४७ ॥

एतदेव कैमुत्यन्यायेन स्फुटयति । वैरेणेति । यं शयनासनादौ वैरेणापि ध्यायन्तस्तस्य गतिविलासाद्यैराकृता अभवन्तत्तदाकारा धीर्येषां ते तत्सारूप्यमापुः किं पुनर्वक्तव्यमनुरक्तधियां तत्साम्यं भवतीति ॥ ४८ ॥

——

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

इतरे पोष्यवर्गातिरिक्ताः पञ्च यज्ञाश्च "पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः । एते पञ्च महायज्ञाः देवयज्ञादिसंज्ञकाः" इत्युक्ताः अतएव ऋणित्वादेव तेषां देवादीनां तदर्थम् ऋणापकरणार्थं तथाच कर्मानुष्ठाने ऋणत्वे प्रमाणं स्मृतिः हीनजातिः हीना उत्तमर्णेभ्यः काङ्क्षिततया जातिर्यस्य तं परिक्षीणं दातुमसमर्थम् ऋणार्थम ऋणनिवृत्त्यर्थं कर्मैव कारयेदिति यथाकार्णे धून इतिवदयं शब्दोऽत्र निवृत्तिपरः अयं वक्ष्यमाणस्तु न तथा न ऋणी कर्तव्यस्येव छल्याबाधकत्वमप्रयुक्तमतो यस्तेति भेदं मुकुन्दादेवतादीनां स्वातन्त्र्यं परिहृत्य त्यक्त्वा इत्यमुक्तं गारुडे "अयं देवो मुनिर्वन्द्य एष ब्रह्मा बृहस्पतिः । इत्यादिना जायते तावद्यावन्नार्च्यते हरि"मिति अतएव वासुदेवः सर्वमिति बुद्ध्येत्यर्थं इत्युक्तं तथैवोक्तं श्रीमदर्जुनेन "सर्वं समाप्नोषि ततोऽसि सर्वः" इति तथाच सर्वस्य तद्व्याप्यत्वात्तदायत्तवृत्तिकत्वात्तदभेदनिर्देशः यथा प्राणायत्तवृत्तिकत्वेनेन्द्रियाणामपि प्राणत्वनिर्देशः तथाच छान्दोग्ये पठ्यते न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राणो ह्येवैतानि सर्वाणि भवन्तीति यत्तु कैश्चिद्वाचितसामानाधिकरण्यं स्वीकृतं तच्छरण्यं मत इति शक्तिप्रकरणानुपयोगित्वात् श्रीदासहन्ताश्च त्यक्तं विश्वस्य मिथ्यात्वे हि तत्सङ्गच्छते तदेव तु न सम्भवति "तदेतदक्षयं नित्यं जगन्मुनिवराखिलं ब्रह्म सत्यं तपः सत्यं सत्यं चैव प्रजापतिः सत्याद्भूतानि जातानि सत्यं भूतमयं जगदि"ति तत्सत्यमाचक्षत इति नित्यो नित्यानां चेतनश्चेतनानामिति सत्यस्य सत्य"मिति च विष्णुपुराणभारतादिस्मृतिश्रुतिभिः कण्ठोक्त्या तत्सत्यत्वप्रतिपादनात् कथञ्चित्तथा वर्णनं तु ज्ञानप्रकरणे युक्तमेव वैराग्यार्थमिति सुधीभिर्विभाव्यम ॥ ४१ ॥

अतएव अनन्यभावत्वादेव तस्यानन्यशरणस्य कथञ्चिदित्यस्याभिप्रायः विकर्मणीत्यादिः प्रमादोऽनवधानता आदिना

केतुस्त्रिविक्रमयुतस्त्रिपतत्पताको यस्ते भयाभयकरोऽसुरदेवचम्वोः ।
स्वर्गाय साधुषु खलेष्वितराय भूमन् ! पादः पुनातु भगवन् ! भजतामघं नः ॥ १३ ॥
नस्योतगाव इव यस्य वशे भवन्ति ब्रह्मादयस्तनुभृतो मिथुरर्द्यमानाः ।
कालस्य ते प्रकृतिपूरुषयोः परस्य शं नस्तनोतु चरणः पुरुषोत्तमस्य ॥ १४ ॥
अस्यासि हेतुरुदयस्थितिसंयमानामव्यक्तजीवमहतामपि कालमाहुः ।
सोऽयं त्रिणाभिरखिलापचये प्रवृत्तः कालो गभीररय उत्तमपूरुषस्त्वम् ॥ १५ ॥
त्वत्तः पुमान् समधिगम्य ययास्य वीर्यं धत्ते महान्तमिव गर्भममोघवीर्यः ।
सोऽयं तयाऽनुगत आत्मन आण्डकोशं हैमं ससर्ज बहिरावरणैरुपेतम् ॥ १६ ॥

## भाषा टीका ।

करने को अग्नि के तुल्य होवे कैसा चरणारविन्द है जिसको कि प्रेम युक्त हृदय से मुनि जन धारण करते हैं और जिस चरणारविन्द को आपके भक्तजन सायुज्य मुक्ति पाने के लिये आत्मज्ञानी हो कर स्वर्ग को उल्लंघन कर के वैकुण्ठ लोक को जाने के वास्ते चतुर्व्यूह रूप से पूजन करते हैं ॥ १० ॥

हे ईश ! जिस चरण को याज्ञिक लोग यज्ञ की अग्नि के समीप हवि को ग्रहण कर के हाथ जोड़ कर वेदत्रय की कही विधि के अनुसार चिन्तन करते हैं और जिस चरण को योगिजन आत्म माया के जानने कि इच्छा से योग समाधि में चिन्तन करते हैं और जिस चरण को सर्वोत्तम भागवत जन सर्वथा पूजते रहते हैं ॥ ११ ॥

हे विभो ! जिस आपकी वनमाला के हृदय में रहने से यह जूठी है ऐसा जानकर सौतिनसरीकी लक्ष्मी जी वैर करती हैं तो भी भक्तों कि दिई उस माला से आप सब के और हमारे पूजन को ग्रहण करते हो तिन आप का चरण हम लोगों के पाप नाश को अग्नि के तुल्य हो जावै ॥ १२ ॥

---

## श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वच्चरणस्य भक्तपक्षपातः प्रसिद्ध एवेति स्तुवन्तः प्रार्थयन्ते । केतुरिति । बलिबन्धने त्रिभिर्विक्रमैर्युतः तत्र द्वितीयविक्रमे सत्यलोकं गतस्तव पादः केतुरत्युच्छ्रितो विजयध्वज इव तत्सम्पादयन्ति त्रिपतत्पताकः त्रिधा पतन्ती त्रिषु लोकेषु वा पतन्ती गङ्गा पताका यस्य तथा सुरदेवचम्वोरसुरसेनयोरुभयोर्भयाभयकरः साधुषु सुरेषु स्वर्गाय खलेष्वसुरेष्वितरायेतरस्मै अधोगमनाय च एवं केतुरूपस्ते पादः स भजतां नोऽघं पुनातु शोधयतु अघानीति पाठे भजतां नः इति कर्मणि षष्ठी अघान्यस्मान्पुनातिरिति तथा च श्रुतिः " चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि । तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिं तरेम । लोकस्य द्वारमर्चिमत्पवित्रं ज्योतिष्मद्भ्राजमानं महस्वत् । अमृतस्य धारा बहुधा दोहमानम् चरणं नो लोके सुधितां दधातिवति" ॥ १३ ॥

ननु सुखे देवासुरादयः परस्परं जयन्ति जीयन्ते च किमहमत्रेत्यत आहुः । नस्योतेति । मिथुर्मिथोऽर्द्यमाना युद्धादिभिः पीड्यमाना ब्रह्मादयोऽपि यस्य तव वशे भवन्ति न तु जये पराजये वा स्वतन्त्राः के इव नसि नासिकामाविध्य यद्धा गावो बलीवर्दा इव कुतः कालस्य कलयितुः प्रवर्तकस्य तवैव कुतः प्रकृतिपुरुषयोरपि परस्य तस्य ते पुरुषोत्तमस्य पादो नः शं तनोतु ॥ १४ ॥

प्रकृतिपुरुषाभ्यां परत्वमुपपादयन्तः कालत्वेन पुरुषोत्तमत्वमाहुः । अस्येति । अस्य जगत उदयादीनां हेतुरसि कुतः अव्यक्तं प्रकृतिर्जीवः पुरुषो महान्महत्तत्त्वं तेषां काल नियन्तारं त्वामाहुः "महतः परमव्यक्तमव्यक्तात्पुरुषः परः पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति"रित्याद्याः श्रुतयः किञ्च अयं संवत्सरात्मको यः कालस्त्रिणाभिस्त्रीणि चातुर्मास्यानि नाभयो यस्य सोऽपि त्वमेव अतस्त्वमुत्तमपुरुष इति तथा च गीतासु " यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः " इति ॥ १५ ॥

त्वमेव प्रकृत्यादिद्वारा जगत्सृष्ट्यादिहेतुरित्युक्तं तत्केन प्रकारेण तदाहुः । त्वत्त इति । त्वत्तः पुरुषो वीर्यं शक्तिं समधिगम्य प्राप्य यया मायया सह महान्तं धत्ते कमिव अस्य विश्वस्य गर्भमिव सोऽयं महान् तयैव माययाऽनुगतः सन्नात्मनः सकाशादाण्डकोशं ससर्ज त्वयानुगत इति पाठेऽपि तया मायया त्वयाऽधिष्ठितः सन्निति ॥ १६ ॥

---

## श्रीराधारमणदासगोस्वामिभिर्विरचिता दीपिकादीपिनी टिप्पणी ।

तव ध्वजत्वं सम्पादयन्ति त्रिषु लोकेष्विति तत्र दिवि मन्दाकिनी पाताले भोगवती भुवि तु गङ्गेति ज्ञेयं चरणमिति पवित्रं शुद्धं विततं व्यापकं पुराणम् अनादि नित्यनूतनं वा येन पूतः पवित्रीकृतः तेन पवित्रेण पापपवित्रतासम्पादकेन शुद्धेन स्वयञ्च पवित्रेण अरातिं संसारलक्षणं लोकस्य वैकुण्ठस्य सोपानमथवा

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तपमरूपध येन रूपेणाभिनिष्पद्यते स तत्र पर्येति स उत्तमः पुरुष" इत्यादिकाः श्रुतयः "अंशावतारं पुरुषोत्तमस्य ह्यनादिमध्यान्तमजस्य विष्णो"रित्यादिकाः स्मृतयः अतेन "अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम" इत्यस्यार्थं उक्तः अत्र च भगवद्गीताभाष्ये वेदार्थावलोकनादवलोकयते इति लोक इति स्मृतिरिहोच्यत इति भाषितम् कालमाहुरित्यादिना गभीररयं इत्यन्तेन संवमहेतुत्वमुपपादितम् ॥ १५ ॥

अथ सृष्टिहेतुत्वमुपपादयन्ति । त्वत्त इति । पुमाननिरुद्धाख्यः सः जगद्व्यापारेऽधिकृतः अमोघवीर्यः अमोघमप्रतिहतं सङ्कल्पमात्रेण सृष्ट्यावहं वीर्यं सृष्ट्युपयुक्तविविधविचित्रशक्त्यात्मकं यस्य सः त्वत्तः सर्वव्यूहमूलभूतात्सम्भिकृत्य तावदाधिभूय सृजतीति तादर्थ्येन शेषत्वविवक्षया षष्ठी परिदृश्यमानजगत्सृष्ट्यर्थमित्यर्थः । यथा प्रकृत्या महान्तमहत्तत्त्वाख्यं वीर्यं धत्ते आधत्ते कमिव गर्भमिव पुरुषो योषिति गर्भमिव प्रकृतौ महत्तत्त्वमुत्पादयामासेत्यर्थः । प्रकृतावाहितायाः परिणामभ्यासरूपायाः शक्तेः कार्यरूपत्वान्महत्तत्त्वस्य वीर्यत्वव्यपदेशः सोऽयं महान् तया प्रकृत्याऽनुगतः कारणतयाऽनुगतः कारणभूतप्रकृतिवद्गुणत्रययुक्त इत्यर्थः । आत्मनः सकाशादण्डकोशं ससर्ज अहङ्कारतन्मात्रमहाभूतेन्द्रियद्वारा सृष्टवानित्यर्थः । कथम्भूतं हैमम् आवरणैः पृथिव्यादिभिः सप्तभिर्बहिरावृतम् । अत्र सोऽयमित्यनेन भगवदात्मको महान् विवक्षितः । अण्डकोशशब्दश्चैतदन्तर्वर्तिब्रह्मादिचतुर्दशलोकवस्तूनामप्युपलक्षणार्थो ज्ञेयः ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे भगवन् ! भूम्नः ते पादौ नोऽस्माकं जगतां चाद्यं पुनातु वस्त्रिविक्रमस्ततः त्रयो विक्रमा एव प्रशस्तकर्माणि यस्य तथा तस्य प्रशस्ते कर्मणि तयेत्यादि तस्य तव केतुध्वजरूपयो वेदा एव पतस्यद्वतलस्य: पताका यस्य स तथा बलासुरदेवयोः भयाभयकरः किञ्च यः साधुषु स्वर्गाय सुखाय असेवितराय दुःखाय भवतीति ॥ १३ ॥

सुखदुःखयोः कारणत्वेन हरेः पादस्य स्वानन्दयं प्रत्यक्षागमिभावेनाह । नस्योतगाव इति । सुखदुःखयोर्नियन्तार इन्द्रियाभिमानिनो देवाश्च यस्य पादस्य वशे वर्तन्ते नासि नासिकायाम् ओता गावः स्वामिन इव ; यश्च तनुभृतां शरीरिणां आयुषि शतवर्षलक्षणे रज्यमानः * संघट्ट्यमानः तावत्कालं स्थित्वा मत्तश्च दुःखहामिति अभिमानशून्यश्चेति तनुभृदायुषि रज्यमानस्य पुरुषोत्तमस्य ते चरणो नः शं तनोत्वित्यन्वयः ब्रह्मणा संपादितकता मृत इत्युच्यते नर इत्यनेन श्रीहरिसम्बन्धो देहिनां विज्ञायते तदभिमानशून्यत्वे हेतुमाह । प्रकृतीति । अत्रापि हेतुमाह । कालस्येति । कालप्रेरकस्य तस्य सकाशात् परस्य वा ॥ १४ ॥

व्यक्तादिगुणपूर्णत्वात्तस्य काल इत्याचक्षेणाह । अस्य जगतः उदयादीनां हेतुरसि "प्रधानादिदमुत्पन्न"मिति श्रुतेः प्रकृत्यादीनां जगद्धेतुत्वादिदं कथमत्राह । अव्यक्तादीनां हेतुरसि अतः कालः कालनियन्तृत्वात्तस्य काल इत्याह । कालमात्र इति "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधी"ति श्रुतेः हरेर्विधान्तरेण कालप्रवर्तकत्वमाह । त्रिणाभिरिति । त्रिरात्रत्वात्तुर्मास्यलक्षणा नाभयो यस्य स तथा गभीररयः अतर्कितापारवेगः सोऽयं कालस्त्वं स्वामीति क इति तत्राह । उत्तमेति । पुरुषोत्तमशब्दवाच्यः संहारकर्तृत्वं विशिनष्टि । अखिलेति । अधुना यादृशाद्यखिलजगत्संहारे प्रवृत्तः यद्वा पुरुषोत्तमत्वं विवृणोति । अव्ययेति । अनेन सर्वतद्विधृतगभूतिरवत उक्तमव्यक्तेति कालस्वरूपाज्ञाने अस्यापमुत्पत्तिसम्भवः इति निश्चयो न स्यादत्रोक्तं कालेति कालस्वरूपज्ञाता तदभिमानी वा कीदृशः कालः येन तद्विशेषज्ञानी स्यादत्राह । सोऽयमिति । हरिः यं कालं विशेषतो जानाति सोऽयं काल एवं विधिष इत्यन्वयः । कथमत्राह । त्रिणाभिरिति । अखिलस्य समस्तप्रपञ्चस्यापचये संहारे च प्रवृत्तः अनेन सृष्ट्यादिविशेषविशिष्टं कालं जानातीत्युक्तं भवति अतश्च किमवसितमत्राह । उत्तमेति । एवंविधात्कालादप्युत्तमस्त्वमित्यर्थः । अनेन प्रकृतिपुरुषकालमहत्तत्त्वेभ्य उत्तमत्वात्पुरुषोत्तम इत्युक्तं भवति । तदुक्तं "कालाज्जीवात्तथाऽव्यक्तान्महतश्चोत्तमो यतः । उत्तमः पुरुषस्तस्माद्भगवान्विष्णुरुच्यत" इति ॥ १५ ॥

अव्यक्तं सृजतस्तव त्वमसि हेतुरिति श्लोकद्वयेन कथितं सर्जनं त्वत्त इति विवृणोति । त्वत्त इति । त्वत्तो ब्रह्माण्डं जगदुत्पद्यत इति यदुक्तं तत्प्रधानमधिकृत्य प्रधानादिशब्दवाच्यान् रमादीनाधिकरणं कृत्वा वर्तते तथापि महाप्रलये लक्ष्म्या सह रममाणमारायास्यात्त्वत्तोऽवतीर्णः पुमान् पुरुषनामामोघवीर्यो भवान् प्रधानाभिमानित्वात्तत्संज्ञायां रमायां महान्तमिव स्थितं स्ववीर्यं गर्भं धत्ते पुरुषनामानं चतुर्मुखं प्रधानाख्यं गायत्रीं च सृष्टवानित्येकोऽर्थः स पुमांश्चतुर्मुखो महान्तमिव गर्भं महत्तत्त्वाभिधमात्मानं श्रद्धाभिधां गायत्रीं च प्रधाननाम्न्यां गायत्र्यां धत्ते सृष्टवानित्यपरः ताभ्यां महत्तत्त्वाख्यश्रद्धाख्याभ्यां शेषोऽहङ्कारापरनामा जातः इत्यन्योऽर्थः "नारायणाख्यः परमः शेत लक्ष्म्यान्वितो ह्यजे । स एव पुरुषाख्यं तु द्वितीयं रूपमात्मनः । कृत्वा रमायां पुरुषनामानं तु चतुर्मुखम् । प्रधानाख्यां च गायत्रीं ससर्ज पुरुषात्मकः । चतुर्मुखः स पुरुषो महत्तत्त्वाभिधं पुनः । प्रधाननाम्न्यां गायत्र्यां ससर्जात्मानमेव तु । श्रद्धाभिधां च गायत्रीं ताभ्यां शेषोऽभ्यजायत" इत्यादिवाक्यात् सकृदुक्तवाक्यस्यानेकभेदो युज्यते सोऽयं महत्तत्त्वाख्यो ब्रह्मा यो नारायणादभिव्यक्तः पुरुषनामा तेन त्वयानुगतः प्रविष्टः श्रद्धाख्यगायत्र्यां सृष्टाहङ्कारादितत्त्वैः सहात्मनः परमात्मनः प्रवेशादुत्पादनसमर्थैर्बहिर्नवभिरावरणैरुपेतं हैममाण्डकोशं ससर्जेत्यन्वयः । ब्रह्मणः आण्डकोशसृष्टिकाले व्यक्तं सृजतस्तस्य विरोधनिरासार्थं त्वयानुगत इत्युक्तम् ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

जीवात् पुरुषादुत्तमत्वेन पुरुषोत्तमत्वं व्यज्य प्रकृतिद्रष्टृतोऽप्युत्तमत्वेन व्यञ्जयति । त्वत्त इति । यथेति वक्ष्यां मायायामित्यर्थः । अन्यत्तैः ॥ १६ ॥

* रज्यमान स इति स्थिते अकः सवर्णे दीर्घे सोमपा इतिवत् रज्यमान इति अकारान्तपुल्लिङ्गशब्दोऽयम् अत्र विशेषस्तत्पदीपिकातोऽवगन्तव्यः ।

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स च तवाङ्घ्रिः प्रायः सर्वलोकानुभवप्रसिद्ध एवेत्याहुः । केतुस्त्रिविक्रमो विजयध्वज इव तव पादः पुनातु त्रिविक्रमेऽवतारे पुनः महाविभूतियुक्त इत्यर्थः । त्रिधा पतन्ती त्रिषु लोकेषु या पतन्ती गङ्गैव पताका यस्य सः असुरदेवचम्वोरनन्तसैन्ययोरुभयोर्भयाभयकरः साधुषु सुरेषु स्वर्गाय खलेष्वसुरेषु नरकाय भयो गमनाय एवंभूतस्ते पादः भजतां नोऽघं पुनातु शोधयतु अघादिति पाठे षष्ठी आर्षी अघाद्भजतोऽस्मान् पुनातु तथा च श्रुतिः "चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि" इति ॥१३॥

ननु यूयं ब्रह्मादय ईश्वरलोकैर्भजनीया भूत्वापि किमिति मां भजध्वे तत्राहुः । नसि नासिकायामोताः प्रविश्य बद्धा बलीवर्दा इव यस्य तव वशे भवन्ति । मिथुरर्दिताः मत्सरादिदोषैः पीड्यमाना इत्यनैश्वर्यमुक्तम् अतः कालस्य तेषां कलयितुर्नियन्तुः अत एव तव कोऽपि नियन्तेत्याहुः । प्रकृतिपुरुषयोरपि परस्य श्रेष्ठस्य ॥ १४ ॥

एकमेव पुरुषोत्तमत्वमुपपादयन्ति । अस्य जगत उद्भवादीनां हेतुरसि तथा अव्यक्तं मायाकारणोपाधिः जीव उपहितः महान् महत्तत्त्वादिः कार्योपाधिः तेषामपि कालं कलयितारं नियन्तारमाहुः । तथा अयं संवत्सरात्मको यः कालस्त्रिणाभिः त्रीणि चातुर्मास्यानि नाभयो यस्य स तव गभीररयः गम्भीरो वेगश्चेष्टा यस्य अतः कार्यकारणातीतत्वात् जीवादुत्तमत्वाच्च त्वमेवोत्तमः पुरुषः यदुक्तं गीतासु "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम" इति ॥ १५ ॥

जीवात् पुरुषादुत्तमत्वमुक्त्वा प्रकृतिद्रष्टुः पुरुषादप्युत्तमत्वमभिव्यञ्जयन्ति । त्वत्तः सकाशात् पुमान् आदिपुरुषः समधिगम्य शक्तिं प्राप्य यया मायया द्वारा वीर्यं वीर्यरूपं महान्तं भस्त्रामिव अस्य विश्वस्य गर्भमिव सोऽयं महान् तयैव मायया अनुगतः सन् आत्मनः सकाशादण्डकोशं ससर्ज ॥ १६ ॥

———

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तवाङ्घ्रेः सत्पक्षपातित्वं प्रसिद्धमेवेति स्तुवन्तः स नो मोक्षप्रतिबन्धकपापनिवृत्तये भवत्विति प्रार्थयन्ते । हे भगवन् स्वाभाविकषडैश्वर्यसम्पन्न! हे भूमन् अनन्तानन्दस्वरूप! ते पादः भजतां सेवकानां नोऽघं पुनातु शोधयतु कीदृशः यो वामनावतारे त्रिविक्रमयुतः त्रिभिर्विक्रमैः त्रिलोकसंग्राहकैः पादन्यासैर्युतः तत्र द्वितीये विक्रमे सत्यलोकं गतो यः केतुः महाध्वज इव त्रिपतत्पताकः त्रिषु लोकेषु पतन्ती विष्णुपदी पताका यस्य सः असुरदेवचम्वोः क्रमाद्भयाभयकरः साधुषु विहितकारिषु स्वर्गाय खलेषु निषिद्धकारिषु इतराय नरकाय च भवति एवम्भूतः अत्र श्रुतिरप्यनुसन्धेया "चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानीति तेन पवित्रेण शुद्धेन पूताः अतिपाप्मानमरातिं तरेम । लोकस्य द्वारमर्चिष्मत्पवित्रं ज्योतिष्मद्भ्राजमानं महस्वत् । अमृतस्य धारा बहुधा दोहमानं चरणं नो लोके सुधितां दधातु" इति ॥ १३ ॥

भगवदङ्घ्रेः मोक्षप्रतिबन्धकाघनिवर्त्तकत्वं प्रतिपाद्येदानीं सर्वब्रह्मादयस्त्वदधीनास्त्वं च सर्वप्रवर्त्तक इति स्तुवन्तस्तवाङ्घ्रिर्नो मुक्तिं ददात्विति प्रार्थयन्ते । नसीति । मिथुर्मिथः अर्द्यमानाः पीड्यमानाः ब्रह्मादयो वयं यस्य प्रकृतिपुरुषयोः प्रधानक्षेत्रज्ञयोः परस्योत्कृष्टस्य स्वामिनः "प्रधानक्षेत्रज्ञपति"रिति श्रुतेः अत एव पुरुषोत्तमस्य अचेतनाचेतनाभ्यां स्वरूपेण भिन्नस्य "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम" इति श्रीमुखोक्तेः अत एव कालस्य चेतनाचेतनयोः कलयितुः प्रवर्त्तकस्य "मत्तः सर्वं प्रवर्तते" इति स्मृतेश्च यस्य वशे भवन्ति तत्र दृष्टान्तमाहुः । नस्योतगाव इवेति । नसि नासिकायां कृतच्छिद्रायां प्रोताः नद्धा गावो बलीवर्दा इव तस्य ते चरणः नो मुक्तिलक्षणं च सुखं तनोतु विस्तारयतु ॥ १४ ॥

ननु मम सर्वप्रवर्तकत्वं भवतां ब्रह्मादीनां मम वशवर्त्तित्वं च कथं घटेतेत्यत्राहुः । त्वमस्येति । अस्य चिदचिदात्मकस्य जगतः उद्भवादीनां त्वं हेतुरसि निमित्तोपादानरूपं कारणमसि सर्वस्य चिदचिदात्मकस्य जगतः कार्यत्वाद्वशवर्त्तित्वं भवतस्तु निमित्तकारणत्वेनोपादानकारणत्वेन च सर्वप्रवर्तकत्वमित्यर्थः । तथापि उत्तमपुरुषश्चिदचिद्विलक्षणस्वरूपेण विकारादिदोषवर्जितः ननु "प्रधानादिदमुत्पन्न"मिति श्रुतेः प्रधानस्य "जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः । जीवे प्रलयमृच्छन्ति न जीवात्कारणं पर"मिति श्रुतेर्जीवस्य "हिरण्यगर्भः समवर्तताग्रे आदिकर्ता सम्भूताना"मित्यादिश्रुतेश्चतुर्मुखस्य काल तथात्म इति श्रुतेः "कालो भवाय भूतानामभवाय च पाण्डव ! कालमूलमिदं ज्ञात्वा भव स्थैर्यपरोऽर्जुन" इति विष्णुपुराणोक्तेश्च कालस्य च जगत्कारणत्वमस्ति कथं मम जगत्कारणत्वमत आहुः । अव्यक्तस्य "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर"मिति श्रुतेः शक्तिभूतप्रधानस्य जीवस्य एव परस्यांश इति श्रुतेः अंशभूतस्य क्षेत्रज्ञस्य महतः सूत्रविशेषस्य "यो वै वेदांश्च प्रहिणोति तस्मै" इत्यादिश्रुतेः भगवदनुग्रहेणैव प्राप्तैश्वर्यस्य यो गभीररयो दुरूहवेगः त्रिणाभिः तिस्रश्चातुर्मास्यलक्षणा नाभयो यस्य सोऽयं कालः अखिलस्य जगतः अपचये संहारे प्रवृत्तः तस्य चांशभूतस्य त्वां कालं कलयितारं प्रवर्त्तकं "सर्वस्य वशी सर्वस्येशानः प्रधानक्षेत्रज्ञपतिः यो ब्रह्माणं विदधाति पूर्वं यः कालकालो गुणी सर्वविद्यः" इत्यादिश्रुतय आहुः प्रधानादीनां भगवच्छक्तीनामुक्तानामंशांशिवत् पृथग्जगद्धेतुत्वाभावाद्भगवत्येव श्रुतीनां समन्वयः तथाहि प्रधानशक्तियुक्ताद्भगवतः महदादिद्वारा इदमुत्पन्नम् जीवयतीति जीवो भगवांस्तस्माद्भूतानि भवन्ति हिरण्यं गर्भे यस्य स तथा भगवान् कालशक्त्या कालयतीति कालः भगवान् कालमित्यादि श्रुतिस्मृत्योर्विषयः विस्तरस्तु प्राचां ग्रन्थेषु द्रष्टव्यः ॥ १५ ॥

जीवप्रधानादिचिदचिच्छक्तिमतः जगतः स्थित्युदयादिहेतुस्त्वमसीत्युक्तं तत्रोभयहेतुत्वमुपपादयन्ति । त्वत्त इति । त्वत्तः अमोघवीर्यः अप्रतिहतप्रभावः पुरुषः पुरुषावतारो वीर्यशक्तिं समधिगम्य प्राप्य अस्य जगतः सृष्ट्यर्थमिति शेषः । महान्तं महत्तत्त्वाभिधं गर्भमिव यया प्रकृत्या धत्ते तथा शक्तिमत्त्वेनानुगतः अनुसृतः सोऽयं पुरुषः बहिः सप्तभिरावरणैरुपेतं हैमं प्रकाशयुक्तमण्डकोशं विराडभिधमात्मनः शरीरमिति शेषः ससर्जेत्यन्वयः ॥ १६ ॥

तत्तस्थुषश्च जगतश्च भवानधीशो यन्माययोत्थगुणविक्रिययोपनीतान् ।
अर्थान् जुषन्नपि हृषीकपते ! न लिप्तो येऽन्ये स्वतः परिहृतादपि बिभ्यति स्म ॥ १७ ॥
स्मायावलोकलवदर्शितभावहारिभ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः ।
पत्न्यस्तु षोडशसहस्रमनङ्गबाणैर्यस्येन्द्रियं विमथितुं करणैर्न विभ्व्यः ॥ १८ ॥
विभ्व्यस्तवामृतकथोदवहास्त्रिलोक्याः पादावनेजसरितः शमलानि हन्तुम् ।
आनुश्रवं श्रुतिभिरङ्घ्रिजमङ्गसङ्गैस्तीर्थद्वयं शुचिषदस्त उपस्पृशन्ति ॥ १९ ॥

बादरायणिरुवाच ॥

इत्यभिष्टूय विबुधैः सेशः शतधृतिर्हरिम् ।
अभ्यभाषत गोविन्दं प्रणम्याम्बरमाश्रितः ॥ २० ॥

भाषा टीका ।

हे भूमन् ! हे भगवन् ! त्रिविक्रम वामन अवतार मे आपका जो पाद तीनों लोकों के उपर पता का के तुल्य होगया यों वह पाद असुर सेना के भय देने वाला है देवसेना के अभय देने वाला है साधु पुरुषों को स्वर्ग देने वाला दुष्टों को नरक देनेवालों है वह चरण भजन करने वाले हमलोगों को पवित्र करे ॥ १३ ॥

आप प्रकृति पुरुष दोनों से परे हो जिन आप के काल के वश होकर ब्रह्मादिक सब देह धारी जीव आपस मे दुःखित हो कर जैसे नाक मे पोया हुआ बैल होवे तैसे आपकी आज्ञा को करते हैं तिन आप पुरुषोत्तम का चरण हम लोगों के कल्याण को करै ॥ १४ ॥

इस जगत् की उत्पत्ति पालन नाश के आप हेतु हो प्रकृति जीव महत्तत्व इनके भी आप नियंता हो सो आप तीन चातुर्मास रूप काल होकर इस संसार के नाश करने मे प्रवृत्त हो ऐसे गंभीर वेग वाले काल रूप आपही उत्तम पुरुष हो ॥ १५ ॥

महत्तत्व रूपी आदि पुरुष ने आप से वीर्य को प्राप्त होकर आपकी उस माया के द्वारा जगत् रूप गर्भाधान किया उसी अमोघ वीर्य वाले पुरुष ने उसी माया के अनुगत होकर अपने स्वरूप से बाहिर सात आवरणों के सहित सुवर्ण मय ब्रह्मांड अण्डकोश को उत्पन्न किया है ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वेवं भूतश्चेदीश्वरत्वं मम कुतोऽवगतं भवद्भिस्तत्राहुः । तदिति । तत्तस्मात्तस्थुषः स्थावरस्य जगतो जङ्गमस्य च भवानधीशः यद्यस्मान्मायया योत्था उज्जृम्भिता या गुणविक्रिया इन्द्रियवृत्तिस्तयोपनीतानर्थान्विषयान् जुषन् सेवमानोऽपि हे हृषीकपते ! न लिप्तः स्वम् ये त्वन्ये जीवा योगिनो वा स्वतः परिहृतादप्यविद्यमानात्काङ्क्षा विषयजीवनाद्बिभ्यति तावतामात्रेण गृहस्थत्वम् इत्यर्थः ॥ १७ ॥

अलिप्तत्वमाहुः । स्मायेति । स्मायावलोकः मन्दस्मितविलासितोऽवलोकस्तस्य लवः कटाक्षस्तेन दर्शितो यो भावोऽभिप्रायस्तेन मनोहारि यद्भ्रूमण्डलं तेन प्रहिता ये सौरता मन्त्रास्तैः शौण्डैः प्रगल्भैरनङ्गबाणैः कामस्य बाणैः संमोहनैः करणैः कामकलाविभिः षोडशसहस्रं पत्न्यो यस्येन्द्रियं मनो विमथितुं क्षोभयितुं न विभ्व्यो न समर्थाः स भवान्न लिप्त इति पूर्वेणान्वयः ॥ १८ ॥

तवामृतरूपा या कथा सैव उदकं वहन्तीति तथा कीर्तिनद्यः तथा पादावनेजसरितो गङ्गाद्याश्च त्रिलोक्याः शमलानि हन्तुं विभ्व्यः केन प्रकारेण आनुश्रवं गुरोरुच्चारणमनुश्रूयत इत्यनुश्रवो वेदस्तत्र भवं कीर्तिरूपं तीर्थं श्रुतिभिः श्रवणेन्द्रियैरङ्घ्रिजं चाङ्गसङ्गैरेवं शुचिषदः स्वाश्रमधर्मे स्थितास्तव तीर्थद्वयमुपस्पृशन्ति सेवन्त इति ॥ १९ ॥

विबुधैः सह ॥ २० ॥ २१ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

एवं सृष्ट्यादिकर्तृत्वेन माययेति अत्र सर्वावतारावतारिशिरोमणेः श्रीकृष्णस्य स्तोतव्यत्वेन प्रकृतत्वात् स्वांशेन प्रकृतिप्रवर्त्तकपुरुषरूपेण यथांशमिदं ज्ञेयं "कर्मफलं प्रयोक्ष्यती"ति न्यायेन जुषमाणत्वेऽपि स्वरूपभूतचिच्छक्त्याऽलिप्तत्वं मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनी"ति श्रीमदर्जुनोक्तेः ॥ १७ ॥

साक्षाद्रूपेऽप्यलिप्तत्वमाहुः स्मायेति । अभिप्रायोऽत्र स्मयरूपः प्रहिताः प्रयुक्ताः सौरताः सम्भोगाद्यरूपा मन्त्रवत् सम्मोहका भावहावहेलादयस्ते च ते शौण्डाश्च प्रगल्भास्तैरनङ्गबाणकल्पैः करणैः क्रियते वशीक्रियते नायक एभिरिति करणानि तैस्तथा च कामकलाभिरिति व्याख्यातं कामस्य सम्भोगशृङ्गारस्य कला अलङ्काराः शब्दवाच्याः भावहावहेलालीलाविलासविच्छित्तिविब्बोककिलकिञ्चितादयो द्वाविंशतिः विशेषेण मथितुं स्वोत्तमप्रेमवतीत्वपरत्वेन क्षोभयितुं न शेकुः किन्तु यासां यादृशः प्रेमा तास्तादृशमेव शेकुरिति प्रेमवश्य एव त्वं न तु कामीत्यर्थः ॥ १८ ॥

ब्रह्मोवाच ॥

भूमेर्भारावताराय पुरा विज्ञापितः प्रभो ! ।
त्वमस्माभिरशेषात्मंस्तत्तथैवोपपादितम् ॥ २१ ॥
धर्मश्च स्थापितः सत्सु सत्यसन्धेषु वै त्वया ।
कीर्तिश्च दिक्षु विक्षिप्ता सर्वलोकमलापहा ॥ २२ ॥
अवतीर्य यदोर्वंशे बिभ्रद्रूपमनुत्तमम् ।
कर्माण्युद्दामवृत्तानि हिताय जगतोऽकृथाः ॥ २३ ॥
यानि ते चरितानीश ! मनुष्याः साधवः कलौ ।
शृण्वन्तः कीर्तयन्तश्च तरिष्यन्त्यञ्जसा तमः ॥ २४ ॥
यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्तम ! ।
शरच्छतं व्यतीयाय पञ्चविंशाधिकं प्रभो ! ॥ २५ ॥
नाधुना तेऽखिलाधार ! देवकार्यावशेषितम् ।
कुलं च विप्रशापेन नष्टप्रायमभूदिदम् ॥ २६ ॥
ततः स्वधाम परमं विशस्व यदि मन्यसे ।
सलोकाँल्लोकपालान्नः पाहि वैकुण्ठकिङ्करान् ॥ २७ ॥
* ( संस्तुतो भगवानित्थं विबुधैः पद्मजादिभिः ।
प्रतिनन्द्याह तान् राजन् ! मायामनुज ईश्वरः ॥ ० ॥ )

श्रीभगवानुवाच ॥

अवधारितमेतन्मे यदात्थ विबुधेश्वर ! ।
कृतं वः कार्यमखिलं भूमेर्भारोऽवतारितः ॥ २८ ॥

भाषा टीका ।

बाधा जो भूमंडल तिस मे प्रेरित जो मंत्री कीसी चतुराई इन चेष्टाओं से भी अपनी सब इंद्रियों से काम देव के बाणों को चला कर भी आप की इंद्रियों के क्षभित करने को समर्थ नहीं हो सकीं ॥ १८ ॥

आप की कथा रूपी अमृत जल प्रवाह की जो नदी हैं और आप के चरणारविंद के प्रक्षालन के जल की जो नदी गंगाजी हैं वे दोनों प्रकार की नदी सब जीवों के पापों को नाश करने में समर्थ हैं तिस मे कथा नदी तो श्रवण से पवित्र करती हैं और गंगाजी स्नानादि अंगसंग से पवित्र करती हैं जो पुरुष अपने धर्मों मे स्थित हैं वे लोग आप के इन दोनों तीर्थों का अवगाहन करते हैं ॥ १९ ॥

श्रीशुक उवाच ॥

महादेवजी के सहित ब्रह्माजी इस प्रकार से सब देवों के सहित श्रीकृष्णचंद्र की स्तुति करके प्रणाम करके आकाशही मे स्थित होकर यह वचन बोले ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विक्षिप्ता विस्तारिता ॥ २२ ॥
उद्दामानि वृत्तानि विक्रमा येषु तानि कर्माणि ॥ २३—२८ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

भूमेरिति युग्मकम् अशेषात्मन्निति सर्वान्तर्यामिरूपेण भूर्भा-

* इत्याधिकः पाठो वीरराघव विजयध्वजयोः ।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

दीर्णां दुःखं ज्ञात्वैनेत्यर्थः । तद्विज्ञापनं त्वया तथैवोपपादितं सत्यसन्धेषु सत्यप्रतिज्ञेषु ॥ २१ ॥ २२ ॥

विभ्रज्जगति दर्शयन् ॥ २३ ॥

यानीति । यत्कृष्टद्वयोत्तरवाक्यगतत्वेन तत्कृष्टदानपेक्षत्वं साधु चन्द्रमसि पुष्करैः कृतमितिवत् अञ्जसेति अनयाकीर्त्तनयोः स्वतः पुरुषार्थत्वं तयाश्रवानुषङ्गिकत्वं चोक्तम् ॥ २४ ॥

विज्ञाप्तिमाह । यदुवंश इति ॥ २५ ॥

नष्टप्रायमदर्शनप्राप्तप्रायम् ॥ २६ ॥

ततो हेतोः स्वधाम प्रापञ्चिकाप्रकटीभूतं द्वारकाया एवाप्रकटप्रकाशं स्वयं भगवत्कृष्णरूपेण प्रविश कलांशाविष्णुरूपेण तु सलोकांल्लोकपालान्नः पाहि नानावैकुण्ठनाथैः स्वविलासैश्च वैकुण्ठकिङ्करान् पाहीति सर्वांशमादायावतीर्णत्वात् ॥ २७ ॥

अवधारितं श्रुतं अखिलं दैत्यसंहारादि ॥ २८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह सप्तभिः । भूमेरिति । हे सर्वात्मन् ! समस्तचिदचिदन्तरात्मन् ! नदस्माभिर्विज्ञापितं तथैव यथाविज्ञापनम् उपपादितं साधितम् ॥ २१ ॥

सत्ये धर्मे इति सत्याभिसन्धिर्येषां तेषु सत्सु सर्वेषां लोकानां जनानां शृण्वतां वदतां च मलमपहन्तीति तथा सा कीर्तिर्दिक्षु विक्षिप्ता विस्तारिता ॥ २२ ॥

अवतीर्येति । न विद्यते उत्तमं यस्मात्तद्रूपं वपुर्बिभ्रद्बिभ्राणः जगतो हिताय श्रेयःसाधनाय उद्दामानि उदाराणि वृत्तानि वार्त्ताः येषु तानि त्वदीयकथाविषयगर्भाणीत्यर्थः । तानि कर्माणयकथाः कृतवानसीत्यर्थः ॥ २३ ॥

जगतो हितावाकृथा इत्येतदेवोपपादयन्ति । यानीति । हे ईश ! ते तवाञ्जसा सुखेन तमः प्रकृतिं तत्कार्यं संसारमित्यर्थः तरिष्यन्ति ॥ २४ ॥

यदुवंश इति । हे पुरुषोत्तम ! हे विभो ! पञ्चविंशाधिकं शरच्छतं वर्षशतं व्यतीताय व्यतिक्रान्तमभूत् ॥ २५ ॥

ततः किमत आह । नेति । हेऽखिलाधार ! तव देवकार्यावशेषितमवशेषितं देवकार्यमित्यर्थः । तत्कर्त्तव्यमधुना तव नास्तीदं कुलं यदुकुलं नष्टप्रायं नष्टवत् ॥ २६ ॥

ततोऽपि किमत आह । तत इति । ततः अवतारप्रयोजनस्य कृतत्वादधुना परमं सर्वोत्कृष्टं स्वधाम स्वस्थानं परमं पदं अधव्रज यदि मन्यसे न वयं विधातुं प्रभवा इति भावः । हे वैकुण्ठ ! लोकैः सहितान् किङ्करानस्मान् लोकपालान् पाहि वैकुण्ठस्य तव किङ्कराणां वा किङ्कराणामस्माकं पालनमनुवर्तनमेव तत्पालनमिति भावः ॥ २७ ॥

सन्नुत इति । पद्मजादिभिर्ब्रह्मादिभिर्विबुधैरित्थं संस्तुतः स्तुतिपूर्वकं विज्ञापितः भगवान्मायामनुजः स्वसङ्कल्पोपात्तमनुजावतारः प्रतिनन्द्य तद्विज्ञापनमभिनन्द्य हे राजंस्तान् विबुधानाह ॥ ० ॥

तदेवाह । अवधारितमिति । हे विबुधेश्वर ब्रह्मादेस्तन्मे मयाऽवधारितं विचार्यनिश्चितं किन्तत् । यत्समास्थ उक्तवानसि तदेव रूपद्यति । कृतमिति । वो युष्माकम् ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पञ्चविंशाधिकं पञ्चविंशत्यधिकं तदुक्तं "वत्सराणां शतञ्चैव ऋतूनां पञ्चविंशकम् । अवतीर्णस्य कृष्णस्य यदा प्रागात्तदाहरम् । स्वस्थानगमनापेक्षी ब्रह्मा तुष्टाव सामर इति ॥ २५ ॥

सर्वाशिष्टदेवकार्यापेक्षयापि न स्थेयमित्याह । नाधुनेति । यदुकुलमवशिष्टमपेक्षयापि न स्थेयमित्याह । कुलं चेति ॥ २६ ॥

यादवानां देवत्वात्तत्स्थानौ कलेःप्रवेशात्तस्य वावेशितत्वात्तत्कुलसंहारार्थं किञ्चित्कालविलम्बत्वपेक्षायां तत्कृत्वा झटिति स्वधाम प्रवेष्टव्यमित्याशयेनाह । ततः स्वधामेति । तदुक्तं च—

संवत्सरद्वयं चैव पञ्चादित्यधरा जनार्दनः ।
अभिषेदे परं स्थानं चतुर्मासाधिकं पुनरिति ॥ २७ ॥

अवधारितं निश्चितम् ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भूमेरिति युग्मकम् । उपपादितं त्वयेत्युत्तरेणान्वयः ॥ २१-२५ ॥

नष्टप्रायमदर्शनगततुल्यम् ॥ २६ ॥

स्वधाम प्रापञ्चिकाप्रकटीभूतं द्वारकाया एव प्रकाशं श्रीकृष्णरूपेण प्रविश श्रीविष्णुरूपेण तु सलोकांल्लोकपालान्नः पाहि नानावैकुण्ठनाथरूपैश्च वैकुण्ठकिङ्करान् पाहीति सर्वांशमादायावतीर्णत्वात् ॥ २७ ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु युष्माभिः क्षीरोदशाय्येव विज्ञापितः सत्यहं तत्राह । सर्वात्मन् हे सर्वावतारावतारिस्वरूप ! तस्यापि स्वरूपत्वादित्यर्थः ॥ २१ ॥

विक्षिप्ता विस्तारिता ॥ २२—२४ ॥

शरच्छतं वर्षशतम् ॥ २५ ॥

न देव कार्यावशेषितं देवकार्यस्यावशेषो नास्त्यद्येत्यर्थः । नष्टप्रायमन्तर्हितप्रायं संहरणमार्गत्वात् ॥ २६ ॥

स्वधाम प्रपञ्चागोचरीभूतं द्वारकायाः प्रकाशविशेषं कृष्णरूपेण प्रविश वैकुण्ठश्वेतद्वीपादिकं तु नारायणादिरूपेण सर्वांशमादायावतीर्णत्वात् ॥ २७ ॥ २८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विक्षिप्ता विस्तारिता ॥ २२ ॥

उद्दामानि अनुपमानि वृत्तानि विक्रमा येषु तानि २३—२७

अवधारितं निश्चितं स्वीकृतम् ॥ २८ ॥

---

तदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम् ।
लोकं जिघृक्षद्रुद्धं मे वेलयेव महार्णवः ॥ २९ ॥
यद्यसंहृत्य दृप्तानां यदूनां विपुलं कुलम् ।
गन्तास्म्यनेन लोकोऽयमुद्वेलेन विनङ्क्ष्यति ॥ ३० ॥
इदानीं नाश आरब्धः कुलस्य द्विजशापतः ।
यास्यामि भवनं ब्रह्मन्नेतदन्ते तवानघ ! ॥ ३१ ॥

श्रीशुक उवाच ।

इत्युक्तो लोकनाथेन स्वयम्भूः प्रणिपत्य तम् ।
सह देवगणैर्देवः स्वधाम समपद्यत ॥ ३२ ॥

भाषा टीका ।

ब्रह्मोवाच ।

हे सर्वात्मा पूर्व काल मे पृथिवी के भार उतारने के वास्ते हमने आपको प्रार्थना किया था सो सब आपने उसी प्रकार कर दिया ॥ २१ ॥

सत्यप्रतिज्ञा वाले सत्पुरुषों मे धर्म का स्थापन आपने कर दिया और सब लोगों के पापों के नाश करने वाली कीर्ति भी आपने सब दिशों मे फैला दी है ॥ २२ ॥

यदुवंश मे अवतार लेकर दिव्य मनोहर रूपको धारण करके जगत् के हितके लिये अति सुन्दर अद्भुत चरित कर्म भी आपने बहुत किये ॥ २३ ॥

हे ईश्वर! जो आप के चरित्र हैं तिनको कलियुग मे जो मनुष्य सत्पुरुष सुनेंगे वा कीर्तन करेंगे वे सब अनायास से अज्ञान कृत संसार को तर जावेंगे ॥ २४ ॥

हे प्रभो पुरुषोत्तम यदुवंश मे अवतार लेकर आप को एक सौ पंचीस वर्ष बीतगये हैं ॥ २५ ॥

हे अखिलाधार प्रभो ! अब आपको कोइ भी देवकार्य करना नहीं बाकी रहा है और यह आप का यदु कुल भी ब्राह्मणों के शाप से प्रायः नष्ट सरीका होगया है ॥ २६ ॥

हे वैकुंठ ! तिस कारण से यदि आप की इच्छा होवे तो अपने वैकुंठ धाम को आप पधारो सब लोकों के सहित हम लोकपालों की रक्षा करो ॥ २७ ॥

श्रीभगवानुवाच ।

हे देवेश्वर ! जो आपने कहा है सो बात मैने निश्चय करली है तुम लोगों के सब काम हमने कर दिये हैं और भूमी का भार सब उतार दिया है ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

वीर्यशौर्ययुक्तया श्रिया ॥ २९ ॥

उद्वेलेन लङ्घितमर्यादेन ॥ ३० ॥



वैकुण्ठं यास्यंस्तव भवनं यास्यामि ॥ ३१ ॥ ३४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

वीर्यस्यैवैकवद्भावे क्लीबत्वं स्यादतो वीर्यशौर्ययुक्तयेति व्याख्यातम् उद्धतमवध्यं लोकं जगदेव जिघृक्षत् अनन्तरमेव प्राप्तुमिच्छत् ॥ २९ ॥

लङ्घितमर्यादेनेति । मद्वियोगादुन्मत्तत्वेन कर्तव्याकर्तव्यविचारलोपात् ॥ ३० ॥

नाशोऽदर्शनम् अप्रकटद्वारकायां प्रवेशनमित्यर्थः । एतदेव प्रवेशनस्यान्ते विकुण्ठासुतरूपेण वैकुण्ठं यास्यन् ॥ ३१ ॥

लोकनाथेनेति । लोकरक्षार्थं प्राप्तयाज्ञयापलायनमनुचितमिति भावः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवमुना विज्ञापनमवधारयंस्तत आह । तदिदमिति । तत्तथापीदं यादवकुलं वीर्यादिभिरुद्धतमभिवार्य वीर्यं पराभिभवसामर्थ्यं शौर्यं युद्धे अपूर्व इव प्रवेशसामर्थ्यं श्रीर्धनादिसम्पत् ततः किमत आह । लोकं विमर्दयितुमुद्युक्तं मे मया वेलया महार्णव इव रुद्धं निवारितम् ॥ २९ ॥

ततो यदि कुलमसंहृत्य गन्तास्मि गमिष्यामि तर्हि अनेन कुलेनायं लोक उद्वेलेन लङ्घितमर्यादेन यदुकुलेन विनङ्क्ष्यति विनष्टो भविष्यति उद्वेलेनेति पाठे उद्वेलेन वेलामतिक्रान्तेन महार्णवेन यथा नङ्क्ष्यति तद्वदनेनेत्यर्थः ॥ ३० ॥

कदा तर्हि संहरिष्यसीत्यत्राह । इदानीमिति । द्विजशापान्नाश आरब्ध एव नष्टारब्धनाशं यदुकुलमिदानीं किञ्चित्कालेन निरवशेषं विनङ्क्ष्यतीति भावः । हेऽनघ ! एतदन्ते कुलनाशान्ते हे ब्रह्मन् ! तव भवनं यास्यामि श्रीवैकुण्ठं यास्यंस्तव भवनं यास्यामीत्यर्थः ॥ ३१ ॥

अथ तस्यां महोत्पातान् द्वारवत्यां समुत्थितान् ।
विलोक्य भगवानाह यदुवृद्धान् समागतान् ॥ ३३ ॥
श्रीभगवानुवाच ।
एते वै सुमहोत्पाता व्युत्तिष्ठन्तीह सर्वतः ।
शापश्च नः कुलस्याऽऽसीद्ब्राह्मणेभ्यो दुरत्ययः ॥ ३४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीति । लोकनाथेन श्रीकृष्णेनेत्थमुक्तः कृष्णं प्रणिपत्य प्रणम्य देवगणैः सह स्वधाम स्वस्थानं स्वर्लोकं समपद्यत समगात् ॥ ३२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तर्हि कालक्षेपे किं कारणं तत्राह । नाहमिति । मे ऊर्ध्वलोकं जिघृक्षन्ति प्राप्तुमिच्छन्ति ॥ २९ ॥

अनुपसंहारे को दोष इति तत्राह । अनेनेति । उद्गमेन वीर्यशौर्यादिगुणोत्कर्षेणानेन यादवकुलेन मत्तो यदुकुलस्याक्षयं युगधर्मादिविरुद्धमित्यभिप्रायेणोक्तमाचार्यैः "सतामपि कदाचित् प्राप्ते विकारो मनसो भवेत् । तस्माद्यदूंश्च संजह्रे नैते स्युः पापभागिनः । पुनर्लोकविरुद्धधर्मोत्तरेण विकारेष्वहरिः । आविश्य रक्षामकरोज्जगतः पुरुषोत्तमः । आत्मना स्वस्थानेन पुरुषार्थोऽधिको भवेत् । इत्यनुग्रहबुद्ध्या च संजह्रे स्वकुलं विभु"रिति ॥ ३० ॥

एतदन्ते एतस्य यदुकुलसंहारस्यान्ते तव प्रीत्यै भवनं यास्यामि ॥ ३१—३५ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

उत्तमपदं लोकं भगवद्वत् जिघृक्षत् अनन्तधाम प्राप्तुमिच्छत् ॥ २९ ॥

नन्वेतेषां ब्राह्मणानां यदूनां नित्यं युष्मदुपसेविनां स्वात्मना सर्वत्र भद्रमेव भवतु तत्राह । यदीति । उद्रेकेण माहात्म्यातिशयेन ॥ ३० ॥

नाशः अदर्शनं निगूढायां द्वारकायां प्रवेशनमित्यर्थः एतस्य प्रवेशनस्यान्ते तव भवनं विकुण्ठात्मकतया यास्यामि तदुपरितनं वैकुण्ठं यास्यामीत्यर्थः ॥ ३१ ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वीर्यं बलिष्ठत्वं शौर्यं युद्धोत्साहः तयोः श्रिया सम्पत्त्या उद्धतं इनात् हननात् दुर्दमं अवध्यमित्यर्थः । लोकं जिघृक्षत् अनन्तरमाक्रम्य प्राप्तुमिच्छत् यथा चिन्त्यशक्तिना द्वारकायामेव स्वधाम्नस्तथा सर्वभूलोकेऽपि मानुषपर्यन्तमिति ॥ २९ ॥

इमानां भामकत्वेन धृताहङ्काराणाम् उद्रेकेण अतिक्रान्तमर्यादसमुद्रोपमेनेत्यर्थः । लोको भूर्लोकः यद्यपि मत्पारिजातानामेषां परमधार्मिकाणां यदूनां भारं पृथ्वी भारं न मन्यते तदपि तस्याः स्वामिना मयाऽवरुद्धभारोऽवतारयितव्य एव सुकुमार्याः वनिताया अपि बहुतरभूषणभारो यथा तत्कान्तेनावतार्यते तथा यद्यपि स्वपृष्ठगतवस्तूनां भारः सुसह एव तदपेक्षितभारस्तु न सुसहः यथाऽकस्मात्प्राप्तोऽपि कनकराशिभारो पुष्कलेनापि वणिजा दुर्वह एव भूतस्य चरणोऽस्य भवाब्धावदुर्गुरिति स्वावयवानामुद्रेकोऽपि पृथिव्या दुःसह एव इष्ट इति ॥ ३० ॥

नाशोऽदर्शनं निगूढायां द्वारकायां प्रवेशनमित्यर्थः एतस्य प्रवेशनस्यान्ते तव भवनं विकुण्ठात्मकतया यास्यामि तदुपरितनं वैकुण्ठं यास्यामीति सन्दर्भः ॥ ३१—३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मे इदं यादवकुलं वीर्यशौर्ययुक्तया श्रिया उद्धतं लोकं जिघृक्षति परिभाव्य स्थातुमिच्छतीति कथितोऽर्थः ॥ २९ ॥

किञ्चायं लोकः अनेन कुलेनोद्रेकेण मनुष्यलोकगतामतिक्रम्य वर्तमानेन विनङ्क्ष्यति देवलोकतुल्यतां प्राप्य मनुष्यलोकभावात्प्रच्युतिर्भविष्यतीत्यर्थः । तदा देवलोकमनुष्यलोकयोर्विशेषाभावः स्यादिति भावः । एतदन्ते यदुकुलसंहारान्ते स्वधाम यास्यन् तव भवनं यास्यामि ॥ ३०—३५ ॥

भाषा टीका ।

यह जो यादव कुल है सो शूरता वीरता की संपत्ति से बड़ा अभिमानी होरहा है सो सब संसार को नष्ट करदेता परंतु जैसे समुद्रको किनारा रोकता है तैसे मैने इस को रोक रखा है ॥२९॥

यदि इन गर्वित यदुओं के विना समेटे मैं जाऊँगा तो तब निर्मर्यादा वाले इस कुल के उपद्रव से यह सब लोक नष्ट होजायगा ॥ ३० ॥

हे ब्रह्मन् ! इस वखत ब्राह्मणों के शाप के निमित्त से इस कुल का नाश का आरंभ कर दिया है इस के होने पर हे अनघ ! तुमारे लोक को आवंगे ॥ ३१ ॥

श्रीशुक उवाच ।

लोकनाथ श्रीकृष्ण के इतने कहने पर ब्रह्माजी भगवान् को प्रणाम करके देव गणों के सहित अपने धाम को चले गये ॥ ३२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कनिष्ठं तदुक्तं तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तपेत्यादि मुक्तेष्वपि तत्तारतम्यमिदं लिङ्गमिति चेन्न—

ब्रह्मा जीवास्तु कथ्यन्ते मुक्ता अप्यवरपदेशनात् ।
स इत्येवोच्यते नित्यं सर्वेषां बृहत्तो हरिरिति

वचनात्—

अनाद्यविद्ययान्धत्वं जीवस्य यदि योग्यता ।
प्रयत्नश्चानुकूलः स्यादन्तवद्भवति ध्रुवम् ॥
नित्यमेवान्धयान्धत्वमयोग्या मानुषादयः ।
बद्धत्वं सर्वजीवानां नियमान्नित्यमेव तु ॥
बद्धत्वं नित्यवधीनत्वमन्धत्वं तददर्शनम् ।
अतः कांश्चिदनित्यत्वमन्धतायां भविष्यति ॥
मुक्तस्यापि तु बद्धत्वमस्ति यत्स हरेर्वशः ।
मुक्तास्तु दुःखमोक्षात्स्युर्बद्धास्तु हर्यधीनतः ॥
नित्यबद्धा अपि ततो मुक्ता दुःखविमोक्षतः ।
नित्यमुक्तस्त्वेक एव हरिर्नारायणः प्रभुः ॥

इत्यनेन सोपपत्तिकेन यो विद्ययान्धः स तु नित्यमुक्त इत्येतद्विवृतम्—

शतं सहस्राणि चतुर्दशेह परागतिर्जीवगणस्य दैत्य ।
आरोहणं तत्कृतमेव विद्धि स्थानं तथा निःसरणं च तेषाम् ॥

इति जीवगुणस्य गतिबाहुल्यप्रवेशनिर्गमनप्रतीतेर्नित्यमुक्तत्वं हरेर्लिङ्गं न हरेरन्यत्र गमनमतः स एव नित्यमुक्तः ननु मुक्तेः क्षेत्रत्वं युक्तमुक्तं तत्कथमिति चेन्न कृष्णो मुक्तैरिज्यते वीतमोहैः मुक्तानां परमा गतिरिति वचनात् तर्ह्येषां कदा तु मुक्तत्वमिति चेन्न सर्वात्मना पञ्चदशकलानां त्यागानन्तरं तदाख्या तदुक्तम्—

कलाः पञ्चदश त्यक्त्वा श्वेतद्वीपनिवासिनाम् ॥

मुक्तास्वेति पश्चादपि स्वतन्त्रा इत्यतो नित्यवशीना इति यत्प्रसादात्फलो मोक्षः तदधीनत्वमस्तु नान्याधीनतास्त्यतः स्वाधिकानां वशे स्थिता इति । अन्याधीनत्वादधिकं दुःखं नास्तीत्यत उक्तं नचास्मादधिकं किञ्चित्सुखमस्ति हरेर्भिनोति । अतो नित्यमुक्तत्वं च स्वातन्त्र्यं नान्यनिष्ठमित्युपसंहरति ।
नित्यमुक्तः स एवैकः स्वतन्त्रः संयतः सदेति ॥ ६—७ ॥

ननु उभयोर्देहस्थत्वाविशेषादेकस्य मुक्तत्वेन दुःखानदनमितरस्य बद्धत्वेन दुःखादनं कुतमित्याशङ्क्य विद्वत्ताविद्वत्त्वे कारणमिति भावेनाह । देहस्थोऽपीति । विद्वान्नित्यनिर्दुःखानन्दानुभवः सर्वज्ञः श्रीहरिर्देहस्थोऽपि देहाभिमानाभावान्न देहस्थोऽपि तत एव दुःखं चं नाश्नीति कथं स्वप्नादुत्थितः पुरुषस्तत्कृतदुःखादिकं नास्ति तथेति कुमतिरविद्वान् जीवो देहाभिमानित्वादेहादन्योऽपि देहदेहस्थो यथा स्वप्नदृक् तद्दुःखादिकं भुङ्क्ते तथेति ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तादृशभेदं वैलक्षण्येनैव दर्शयति । सुपर्णाविति द्वाभ्याम् । अत्र सदृशाविति तदेवमेवाभेदनिर्देशः क्वचिदिति भावः । श्रुतौ सयुजाविति समानं रूपं चिद्रूपत्वं युङ्क्ते भजत इति समानोऽर्थः ॥ ६ ॥

विद्यामय इत्यत्र विद्या स्वरूपशक्तिवृत्तिरेव । व्याख्यातं चाक्रूरस्तुतौ ॥ ७—१६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यदुक्तं कैर्वा भावैः बद्धमुक्तयोरिति तत्राह । अथेति । अयं जीवो बद्धः अयं जीवो मुक्त इति यथोच्यते तथा जीवात्मा बद्धः परमात्मा मुक्त इत्यपि अयमात्मा अपहतपाप्मेति यदुच्यत एवेत्यतः प्रथमं जीवात्मपरमात्मनोर्वैलक्षण्यमाकर्णयेत्याह । सार्धद्वयेन । विरुद्धधर्मिणोः शोकानन्दधर्मवतोः एकस्मिन् धर्मिणि शरीरे नियम्यनियन्तृत्वेन स्थितयोः ॥ ५ ॥

सुपर्णौ वृक्षात् पक्षिणाविव देहात् पृथग्भूतौ सदृशौ चिद्रूपत्वात् सखायौ सह योगात् । यदृच्छयेति वृक्षे तयोरासक्त्यनासक्तिपूर्वकनीडकरणे तदीयपिप्पलाशभोजित्वाभोजित्वे च हेतुभाव उक्तः मायया वृश्च्यत इति वृक्षो देहः ऊर्ध्वमूलमवाक्शाखं वृक्षं यो वेद सम्प्रतीति श्रुतेः ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययमिति स्मृतेश्च तस्मिन् वृक्षे आसक्त्यनासक्तिपूर्वकं कृतं निकेतनं हृदयरूपं याभ्यां तौ तयोर्मध्ये एको जीवः पिप्पलान्नं पिप्पलोऽश्वत्थो देहस्तस्मिन्नदनीयं कर्मफलमित्यर्थः । खादति भुङ्क्ते अन्यः परमात्मा निरन्नः अभोक्तापि निजानन्दतृप्तो बलेन ज्ञानादिशक्त्या भूयानधिकः श्रुतिश्च—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीतीति ॥ ६ ॥

स परमात्मा आत्मानं स्वम् अन्यं जीवं च वेद न पिप्पलं कर्मफलमत्तीति सः पिप्पलादो जीवस्तु न तु स्वमन्यं च वेद युक् युक्तः स नित्यबद्धो जीवः विद्यामय इति विद्याशब्देनात्रान्तरङ्गा चिच्छक्तिरुच्यते न तु बहिरङ्गमायाशक्तिवृत्तिः तथा च गोपालतापनीश्रुतिः । द्वौ सुपर्णौ भवतो ब्रह्मणोऽंशभूतस्तथेतरो भोक्ता भवति अन्यो हि साक्षी भवतीति भोक्ताभोक्तारौ वृक्षधर्मे तिष्ठतः यत्र विद्याविद्ये न विदामो विद्याविद्याभ्यां भिन्नो विद्यामयो हि यः स कथं विषयी भवतीति स्मृतिश्च छायातपौ यत्र न गृध्रपक्षाविति छायातपौ अविद्याविद्ये इति व्याख्या ॥ ७ ॥

अथ बद्धमुक्तयोर्जीवयोर्मिथो वैलक्षण्यमाह । देहस्थोऽपीति दशभिः । तत्र त्रिभिः कथं वर्त्तेतेत्यस्योत्तरमाह । विद्वान् मुक्तः संस्कारवशेन देहस्थोऽपि देहस्थो न भवति यथा स्वप्नादुत्थितः बाधितानुवृत्तिन्यायेन स्मर्यमाणे स्वप्नदेहे स्थितोऽपि तत्रस्थो न भवति तद्गतसुखदुःखयोः स्वनिष्ठत्वेनाप्रतीतेः तथा वस्तुतो न देहस्थोऽपि कुमतिरविद्वान् देहस्थः तन्निमित्तसुखदुःखभाक् यथा स्वप्नदृक् स्वप्नान् पश्यन् स्वप्नदेहगतः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कथं वर्त्तेतेत्यादिप्रश्नोत्तरं वदन् जीवेश्वरयोः परस्परं बद्धमुक्तादीनां जीवानां च वैलक्षण्यं दर्शयति । अथेत्यादिना । विरुद्धधर्मिणोः अल्पज्ञत्वसर्वज्ञत्वादिधर्मवतोः एकधर्मिणि समानस्थाने नियम्यनियन्तृत्वादिना स्थितयोः ॥ ५ ॥

एतौ प्रेर्यप्रेरकत्वादिना विद्वदनुभवप्रसिद्धौ एकस्य कर्मफलभोगार्थमपरस्य तत्फलदानार्थमेवं भूतं स्वस्वानुरूपतव

इन्द्रियैरिन्द्रियार्थेषु गुणैरपि गुणेषु च ।
गृह्यमाणेष्वहं कुर्यान्न विद्वान् यस्त्वविक्रियः ॥ ९ ॥
दैवाधीने शरीरेऽस्मिन् गुणभाव्येन कर्मणा ।
वर्तमानोऽबुधस्तत्र कर्ताऽस्मीति निबध्यते ॥ १० ॥
एवं विरक्तः शयन आसनाटनमज्जने ।
दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु ॥ ११ ॥
न तथा बद्ध्यते विद्वांस्तत्र तत्रादयन् गुणान् ।
प्रकृतिस्थोऽप्यसंसक्तो यथा खं सविताऽनिलः ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शोभनं पर्णं पतनं ययोस्तादृशौ ज्ञानस्वरूपत्वज्ञातृत्वाद्यधर्मत्वेन सादृश्यात् सखायौ प्रवर्त्यप्रवर्त्तकत्वात् ऊर्ध्वमूलोऽवाक् शाख एषोऽश्वत्थः सनातनः। ऊर्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययमिति श्रुतिस्मृतिप्रसिद्धे वृक्षे यदृच्छया कृतं कुलायरूपं नीडं याभ्यां तौ तयोर्मध्ये एकः जीवाख्यः सुपर्णः पिप्पलः समष्टिव्यष्टिरूपो देहः ब्रह्मादिपिपीलिकान्तानां स्थानं तत्रायतने स्वयं कर्मफलं खादति भक्षयति अन्य ईश्वराख्यः सुपर्णस्तु निरन्नः पिप्पलान्नं न खादति परमानन्दरूपत्वात् बलेन सर्वेश्वरत्वसर्वात्मत्वादिना भूयान् अत्र "द्वा सुपर्णा सयुजा सखाया समानं वृक्षम्परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति इति श्रुतिरनुसन्धेया॥६॥

ईश्वरस्य सर्वज्ञत्वं जीवस्याज्ञत्वं चाह। आत्मानमित्यर्धेन ज्ञानाज्ञानाभ्यां नित्यमुक्तनित्यबद्धयोर्वैलक्षण्यमुक्तमिदानीं नित्यं कर्मफलापेक्षुर्नित्यबद्धः नित्यं विद्याप्रधानः स नित्यमुक्त इत्याहार्धेन। य इति। अविद्यया कर्मरूपया युक्त युक्तः—

अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते।
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप ! सर्वगा ॥
संसारतापानखिलानवाप्नोत्यतिसन्ततान् ।
तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ॥
सर्वभूतेषु भूपाल ! तारतम्येन वर्त्ततेइति ।

स्मृतेः विद्यामयो विद्याप्रधानः ॥ ७ ॥

अथ सामान्यतो बुभुक्षुं मुमुक्षुं च परस्परविलक्षणतया प्रतिपादयति। देहस्थ इत्यादिना। विद्वान् कालानवच्छिन्नस्वस्वरूपस्थितिवित् प्रारब्धकर्मवशाद्देहस्थोऽपि न देहस्थः देहसमकालस्थितिमान्न भवति नित्यो नित्यानामिति श्रुतिप्रोक्तनित्यस्थितिमानहं देहपरिच्छेद्यसत्ताको नास्मीति जानातीत्यर्थः। स्वप्नादुत्थितः प्रबुद्धः यथा स्वाप्नदेहं परिच्छेद्यमात्मनः स्थितिं नैव मन्यते तद्वत् कुमतिः कुत्सिते देहादावहमित्याद्यभिमतिर्यस्य सः अदेहस्थोऽपि देहसमकालस्थितिशून्योऽपि देहस्थ एव देहाभिन्नस्वस्वरूपंमन्य एव यथा स्वप्नदृक् स्वप्नद्रष्टा ॥ ८ ॥

———

भाषा टीका ।

हे तात उद्धवजी! अब मैं बद्ध तथा मुक्त दोनों की विलक्षणता को तुम से कहता हूं वे दोनों एक धर्म वाले भौतिक शरीर मे रहते हैं और स्वयं बुद्धि से विलक्षण धर्मवाले हैं ५

इस शरीर रूपी वृक्ष मे जीवात्मा परमात्मा दोनो पक्षी सरीखे हैं दैवयोग से इन ने इस वृक्ष मे खोंतर बनाया है दोनो बरोबर रहते हैं तिनमे से एक जीव तो कर्म फल को भोगता है और ईश्वर तो कुछ नहीं खाकर भी अधिक सदा प्रकाश करता है ॥ ६ ॥

सर्वज्ञ वह परमात्मा तो अपने को तथा जीवको दोनों को जानता है और कर्मफल को नहीं भोगता है और विद्या नित्य ज्ञान मय है वह नित्यही मुक्त है जो अज्ञानी जीव है वह तो कर्मफल को भोगता है सो अविद्या से युक्त है वह देह संबन्ध रहने तक नित्यही बद्ध है ॥ ७ ॥

इस प्रकार से इस देह में रहकर भी जो ज्ञानी है वह तो अपने को देह में नहीं रहा सरीखा ही समुझता है जैसे स्वप्न में से उठा पुरुष उस देह से मोह नहीं करता है और जो अज्ञानी है वह तो प्रलयादिक में देह में नहीं रहने पर भी अपने को देहस्थ समुझता है जैसे स्वप्न में देखता हुआ पुरुष उसी बुद्धिमें रहता है ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

अत्र हेतुत्वेन वैलक्षण्यान्तरमाह द्वाभ्यामिन्द्रियैरिन्द्रियार्थेषु गृह्यमाणेष्वपि यस्तु विद्वान् स नाहंकुर्यादहं गृह्णामीति मतिं न कुर्यादित्यर्थः। कुतः गुणा गुणेषु गृह्यमाणेषु अत एवाविक्रियो रागादिशून्यः तदुक्तम् गीतासु—

तत्त्ववित्तु महाबाहो ! गुणकर्मविभागयोः ।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जत इति ॥ ९ ॥

अबुधस्तु पूर्वकर्माधीनेऽस्मिन् शरीरे वर्तमानो गुणैरिन्द्रियैर्भोग्येन कर्मणा तत्र देहादौ निबध्यते कुतः कर्ताऽस्मीत्यहंकारेण तदुक्तम् तत्रैव

वैशारद्येक्षयाऽसङ्गशितया छिन्नसंशयः ।
प्रतिबुद्ध इव स्वप्नान्नानात्वाद्विनिवर्तते ॥ १३ ॥
यस्य स्युर्वीतसंकल्पाः प्राणेन्द्रियमनोधियाम् ।
वृत्तयः स विनिर्मुक्तो देहस्थोऽपि हि तद्गुणैः ॥ १४ ॥
यस्यात्मा हिंस्यते हिंस्रैर्येन किंचिद्यदृच्छया ।
अर्च्यते वा क्वचित्तत्र न व्यतिक्रियते बुधः ॥ १५ ॥
न स्तुवीत न निन्देत कुर्वतः साध्वसाधु वा ।
वदतो गुणदोषाभ्यां वर्जितः समदृङ्मुनिः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते इति ॥

एभिस्त्रिभिः श्लोकैः कथं वर्तेतेत्यस्य प्रश्नस्य सुखदुःखशून्यो निरभिमानश्च देहे वर्तेत इत्युत्तरमुक्तं भवति ॥ १० ॥

वैलक्षण्यान्तरं यदङ्क्ष्व भुञ्जीतेत्यादिप्रश्नोत्तरमाह । एवमिति त्रिभिः । अन्यगतमेव कर्म मां बध्नातीत्येवं विरक्तो विद्वान् तथा अविद्वानिव शयनासनादिषु न बध्यते कुतः तत्र तत्र विषयेषु गुणानिन्द्रियाण्यगाद्यन् भोजयंस्तत्साक्षित्वेन वर्तमानो न तु स्वयमदन् एतदेव कुतस्तत्राऽऽह । प्रकृतिस्थोऽपीति । सार्धेन । यथा खं सर्वत्र स्थितमपि न सज्जते यथा सविता जले प्रतिबिम्बितोऽपि यथाऽनिलः सर्वत्र संचरन्नपि तद्वत् ॥ ११-१२॥

असङ्गेन वैराग्येण शितया तीक्ष्णया छिन्नाः संशया असत्संभावनादयो यस्य सः नानात्वाद्देहादिप्रपञ्चात् ॥ १३ ॥

कथं विहरेदित्यस्योत्तरत्वेन वैलक्षण्यान्तरमाह । यस्य स्युरिति । तद्गुणैर्देहगुणैः संकल्पशून्याभिः प्राणादिवृत्तिभिर्विहरन् मुक्त इत्यर्थः ॥ १४ ॥

एवं तावद्बद्धमुक्तयोः स्वसंवेद्यमेव वैलक्षण्यमुक्तमिदानीं केषां ज्ञायेत लक्षणैरित्यस्योत्तरतया परैरपि सुज्ञेयं वैलक्षण्यमाह यस्यात्मेति त्रिभिः । हिंस्रैर्दुर्जनैरन्यैर्वा प्राणिभिर्यस्यात्मा देहः पीड्यते यदृच्छया येन केनापि क्वचित्किंचिदर्च्यते वा स बुधस्तत्र न व्यतिक्रियते नाति विक्रियत इत्यर्थः । तदुक्तम् याज्ञवल्क्येन—

"यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति ।
अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य चेति ॥ १५ ॥

किंच साध्वसाधु वा कुर्वतो वदतो वा जनान् स्तुवीत नच निन्देत यो लौकिकव्यवहारे विमुखः स मुक्त इत्यर्थः ॥ १६

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी ।

अत्र मुक्तस्य देहस्थत्वेऽपि तद्गतसुखदुःखाद्यभाक्त्वे बद्धस्य देहस्थत्वेऽपि तदभिमतसुखदुःखादिभाक्त्वे च निरहङ्कारत्वादेव देहस्थत्वेऽपि सुखाद्यभाक्त्वमिति निरहङ्कारत्वस्य तत्र हेतुत्वम् एवं यो निरहङ्कारः स मुक्त इति बद्धाद्वैलक्षण्यञ्चेत्यर्थः ॥ ९ ॥

साध्येन सूत्रेण तत् अहङ्कारेण बद्धत्वं तत्र गीतायामुक्तं साहङ्कारत्वादेव बद्धस्तु देहस्थत्वेऽपि तद्गतसुखदुःखादिभाक्त्वमिति साहङ्कारत्वस्य तत्र हेतुत्वम् एवं यः साहङ्कारः स बद्ध इति मुक्ताद्वैलक्षण्यं चेत्यर्थः ॥ १० ॥

एवमिति सार्धकं तयोरस्य व्याख्यानम् अविद्वानिवेति तत्साक्षित्वेन इन्द्रियसाक्षित्वेन ॥ ११ ॥ १२ ॥

एतदेव साक्षित्वेन वर्तमानत्वमेव प्रकृतिस्थोऽपीति सार्धकम असंसक्तेन नानात्वाद्विवृत्तेः साक्षित्वमित्यर्थः ॥ १३ ॥

वैलक्षण्यान्तरं बद्धान्मुक्तस्यान्यद्वैशिष्ट्यं यस्य प्राणेन्द्रियमनोधियां वृत्तयः क्षुत्पिपासादर्शनश्रवणादिमननिश्चयरूपा पुरुषकर्तृकसदसत्सङ्कल्पशून्या भवन्ति स देहस्थोऽपि देहगुणैर्जन्मनाशादिभिर्मुक्तः तथाच सङ्कल्पशून्याभिरित्यादि व्याख्यानम् ॥ १४ ॥

स्वसंवेद्यं बद्धमुक्तयोरेव सुज्ञेयम् अन्यैः पश्वादिभिर्वा नातिविक्रियते हर्षशोकादिपरवशो न स्यात् तत् परवेद्यलक्षणं तस्य तोदकस्य तस्य लिम्पकस्योपरि यथासङ्ख्यमक्रुद्धोऽपरितुष्टश्च किन्तु तयोरपि समः स मुक्तः परैरपि सुज्ञेय इत्यर्थः ॥ १५ ॥

किंच अन्यदपि परवेद्यं लक्षणमाहेत्यर्थः । लौकिकव्यवहारे विमुखत्वमेव यथा कथंचित् परवेद्यं लक्षणमित्यर्थः ॥ १६ ॥

---

सुदर्शनसूरिकृतशुकपक्षीयम् ।

अदेहस्थत्वमेव विवृणोति । इन्द्रियैरिति । गुणैः गुणभूतैरिन्द्रियैः इन्द्रियार्थेषु गुणेषु गृह्यमाणेषु अविक्रियः हर्षविषादादिरहितो भोक्ता अभिमानं न करोतीत्यर्थः ॥ ९ ॥

प्रकृतेर्देहस्थितिं विवृणोति । दैवाधीन इति । गुणैर्न भाव्यते सम्भाव्यत इति गुणभाव्यं तेन प्रभुः प्रभुः ॥ १० ॥ ११ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रकृतिस्थः अविकृतः संसर्गे सत्यपि अविकृतत्वे दृष्टान्तद्वयं यथाखमित्यादि ॥ १२ ॥

वैशारद्या विशारदया नानात्वात् देहत्वादिभेदात् विनिवर्तिते देहोऽहमित्याद्यभिमानं न करोति ॥ १३ ॥

वीतसङ्कल्पाः इदं संपाद्यमिदं द्रष्टव्यमिदं परिहर्तव्यमित्यभिसन्धानरहिताः ॥१४—१६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अदेहस्थत्वमेव विवृणोति । इन्द्रियैरिति । यस्तु विद्वान् गुणैः प्रकृतिपरिणामात्मकैरिन्द्रियैर्गुणेषु इन्द्रियार्थेषु शब्दादिष्वनुकूलप्रतिकूलेषु गृह्यमाणेषु स्वात्माविक्रियः हर्षविषादादिरहितः नाहं कुर्यादात्मनि कर्तृत्वभोक्तृत्वाभिमानं न कुर्यादित्यर्थः ॥ ९ ॥

कुमतेर्देहस्थितिं विवृणोति । दैवाधीन इति । गुणैः प्राकृतैः तत्कार्यभूतैरिन्द्रियैर्वा आरब्धे सम्पादिते इति तथा तेन कर्मणा हेतुना वर्तमानोऽपि अबुधः देहस्य दैवाधीनतां प्राचीनकर्मनिमित्ततां तत्र स्थितिं न तथा देहविलक्षणमात्मानं च अजानन् देहमात्मानं मन्वान इत्यर्थः । अत एव कर्ताऽस्मीति निबध्यते देहात्माभिमानकर्तृत्वभोक्तृत्वाभिमानैर्बद्धो भवतीत्यर्थः ॥ १० ॥

कथं विहरेदित्यादीनां विशेषप्रश्नानामुत्तरमाह । एवमिति । इत्थं कुमतेर्दुर्दशामनुचिन्तनेन विरक्तो देहतदनुबन्धिष्वासक्तिरहित इत्यर्थः । अशनं [illegible] इत्यनुशासनात् शयनादिषु कर्मसु यथोचितं वर्तमान एवेति शेषः—

> युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
> युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥

इत्यत्र भगवतैवोक्तत्वात् ॥ ११ ॥

तत्र तत्र शब्दादिविषयेषु गुणान् गुणपरिणामात्मकानीन्द्रियाण्याददत् अक्षवदनुभावयन्नीश्वरायत्तसत्ताकस्थितिप्रवृत्तिमतीन्द्रियेष्वेव कर्तृत्वभोक्तृत्वादिकमनुचिन्तयन्नित्यर्थः । तदेवाह । न तथेति । विद्वान्—

> तत्त्ववित्तु महाबाहो ! गुणकर्मविभागयोः ।
> गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥

इत्युक्तविधमतिमान् तथा न बध्यते इत्यर्थः । गुणानाददन्नित्यनेनौदासीन्यमात्मनि कर्तृत्वभोक्तृत्वादिकं तु शरीरेऽनुसन्धेयमिति फलितम् ईश्वरस्याकर्तृत्वमनुसन्धेयमिति वक्ष्यते मयि सर्वाणि कर्माणि निरपेक्षः समाचरेदिति ननु कर्माणि [illegible]तत्फलभूतानि सुखदुःखादीन्यनुभवतो देहे वर्तमानस्य कथमौदासीन्यरूपमविक्रियत्वं सम्भवेदत आह । प्रकृतिस्थोऽपीति । प्रकृतिस्तत्परिणामात्मको देहस्तत्स्थोऽप्यसंसक्तः तदभिनिवेशरहितः तत्प्रयुक्तसुखदुःखादिष्वविक्रिय इति यावत् तत्स्थत्वेऽपि तत्प्रयुक्तैरविकृतत्वे दृष्टान्तद्वयं यथाखं सवितानिल इति । यथा खमाकाशः सर्वत्रावस्थितोऽपि व्याप्यगतदोषैर्न विक्रियते यथा सविता स्वप्रभया व्याप्नुवन्नपि तत्तत्प्रकृतिस्थोऽपि प्रकृत्यनभिनिवेशेनातत्स्थतुल्यो भवतीत्यर्थः ॥ १२ ॥

किञ्चायमसङ्गेन देहाद्यनभिनिवेशेन निशितया वैशारद्या विशारदया ईक्षया बुद्ध्या छिन्नाः संशया यस्य सः स्वप्नात्प्रतिबुद्ध इव नानात्वाद्देहत्वादिभेदाद्विनिवर्तते देहोऽहमित्याद्यभिमानं न करोतीत्यर्थः । देहादहं विलक्षणो न वा किमहं स्वतन्त्र उतेश्वरपरतन्त्रः किंवाहमीश्वर एवोत तस्माद्भिन्न इत्यादयः संशयाः ॥ १३ ॥

अथ कैर्वा ज्ञायेत लक्षणैरित्यस्योत्तरमाह । यस्येति । यस्य प्राणादीनां वृत्तयो व्यापाराः वीतसंकल्पाः इदमदनीयमिदं द्रष्टव्यमिदं सम्पाद्यमिदं परिहर्तव्यमित्याद्यभिसन्धिरहिताः स्युरित्यर्थः । स एव देहस्थोऽपि तद्गुणैर्विनिर्मुक्तो ज्ञेयः ॥ १४ ॥

यस्यात्मा देहः हिंस्रैर्दुर्जनैर्हिंस्यते पीड्यते अथवा येन केन चिद्यदृच्छया किञ्चिदर्च्यते सत्क्रियते तथापि तत्र हननार्चनादौ न व्यतिक्रियते नातीव विक्रियते स एव बुधः विद्वानिति ज्ञेयः ॥ १५ ॥

किञ्च यः साध्वसाधु वा कुर्वतो वदतो वा जनान्न स्तुवीत न निन्देत गुणदोषाभ्यां रहितः मानापमानयोस्तुल्यदृष्टिः स [illegible] ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतदेव विवृणोति । इन्द्रियैरिति । गुणैर्हेतुप्रधानैर्जीवैः श्रोत्रादीन्द्रियैः गुणेष्वप्रधानेष्वर्थेषु विषयेषु गृह्यमाणेषु स्वस्तु यत्स्वाविक्रियः कर्ताऽहं कृशोऽहमित्यादिविकाररहितो विद्वान् परमात्मा स नाहङ्कुर्यादित्यन्वयः—

> शरीरस्थोऽपि विज्ञत्वान्न विष्णुर्बध्यते क्वचित् ।
> अविज्ञत्वात्तु तत्रैव देहे जीवस्तु बध्यते ॥
> स्वप्नदृग्यादृशो जीवो हरिः स्वप्नोत्थितो यथा ।
> सदा तमोविहीनोऽपि ज्ञापनार्थमुदीर्यते ॥

स्मनेन —

> आत्मनो वधगैर्जीवैरात्मनो मरणेषु च ।
> दुःखेषु गृह्यमाणेषु मनआदिभिरिन्द्रियैः ॥
> अहं दुःखीति नैवासौ ह्यहङ्कुर्यात्परः पुमान् ।
> जीवगत्वेन तद्दुःखं विष्णुः पश्यति सर्वदा ।
> अतो न दुःखभाग्विष्णुः स्वानन्दत्वात्पुरुषोत्तमः ॥
> पारतन्त्र्याद्दुःखीत्येव जीवः प्रपश्यति ।
> तस्मात्स दुःखभाग्युक्तो यावदीशः प्रसीदतीति ॥

अनेन चानयोः श्लोकयोरर्थो विवृत इति जीवगतत्वेन तद्दुःखं विष्णुः पश्यति सर्वेशत्वेनेत्यभिचाकशीतीत्यस्यार्थः सूचित इति ॥ ९ ॥

जीवस्याहमस्मीत्यभिमान एवानर्थप्रवाहहेतुरित्याह । दैवेति । दैवाधीनेऽस्मिन् शरीरे वर्तमानोऽबुधोऽसौ जीवः अस्मिन्कर्मण्यहं गुणभूतोऽस्वतन्त्र ईशाधीनः इति साध्येन साधनीयेन कर्मणा अहमेव कर्ताऽस्मीति मन्यमानस्तत्र शरीरे नितरां बध्यत इति—

> अस्वतन्त्रः स्वतन्त्रोऽस्मीत्येवं जीवः प्रमाणयन् ॥
> बध्यते हीशकोपेन राजभावेन भृत्यवदिति ।

न कुर्यान्न वदेत्किंचिन्न ध्यायेत्साध्वसाधु वा ।
आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः ॥ १७ ॥
शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि ।
श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः ॥ १८ ॥
गां दुग्धदोहामसतीं च भार्यां देहं पराधीनमसत्प्रजां च ।
वित्तं त्वतीर्थीकृतमङ्ग ! वाचं हीनां मया रक्षति दुःख दुःखी ॥ १९ ॥
यस्यां न मे पावनमङ्गकर्म स्थित्युद्भवप्राणनिरोधमस्य ।
लीलावतारेप्सितजन्म वा स्याद्वन्ध्यां गिरं तां बिभृयान्न धीरः ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निष्कर्षमपरत्वाविना वादितुल्यः तत्र तत्र पदार्थलाभे गुणान् भोगान् यत्करोषि यदश्नासि तत्कुरुष्व मदर्पणमित्येवं वादिनं मां भोजयन् समर्पितं संस्कारं वासमक्तः यतः प्रकृतिस्थः । समावस्थः सर्वं भगवदायत्तं सर्वं भगवदात्मकमित्येवं वित् ॥ १२ ॥

नानात्वात् अब्रह्मात्मकतया वादिभिः प्रवर्तितो यो नानाभावः ब्रह्मनिरपेक्षपृथक्पृथगात्मसत्ता तस्मात् वैशारद्यया ऐनदात्म्यमिदं सर्वमित्येवं ज्ञानेन समक्षीशितया वैराग्यनिर्धौतया विनिवर्तते ॥ १३ ॥

कैर्वा साधन लक्षणैरित्याद्योत्तरमाह । यस्येति चतुर्भिः । देहस्थोऽपि तद्गुणैर्विनिर्मुक्तो ज्ञेयः ॥ १४ ॥

यस्य आत्मा देहः हिंस्रैर्दुःखदलक्षणैः कश्चित्किञ्चित् हिंस्यते पीड्यते अथवा येन केनचित् क्वचित् किञ्चित् यदृच्छया अर्च्यते तत्र तिरस्कारे सत्कारे वा न व्यतिक्रियते नातिविक्रियते स बुधो ज्ञेयः ॥ १५ ॥

यः साध्वसाधु वा न्याय्यमन्याय्यं वा कुर्वतो वदतो वा न स्तुवीत नच निन्देत् यतः साध्वसाधुकर्तृवक्तृनिष्ठाभ्यां गुणदोषाभ्यां वर्जितः समानभूतः स मुनिः सम्यक् ज्ञेयः ॥ १६ ॥

———

भाषा टीका ।

जो कि विकार को नहीं प्राप्त होने वाला विद्वान् है सो तो इन्द्रियों से इन्द्रियों के विषयों को ग्रहण कर तो भी सत्त्वादिगुणों से गुणों में वर्तमान् होवे तौ भी सब विषयों को ग्रहण करने पर अहङ्कार नहीं करता है ॥ ९ ॥

प्रारब्ध के आधीन इस शरीर में गुणों से होने वाले कर्म से वर्तमान् अज्ञानी पुरुष मै कर्ता हूं कर के अभिमान करने से बँध जाता है ॥ १० ॥

विरक्त पुरुष तो शयन आसन चलना न्हाना देखना छूना सूंघना सुनना खाना इत्यादिक में ॥ ११ ॥

विद्वान् होने से तहां तहां विषयों को भोगता हुआ भी शरीर में स्थित होकर भी आसक्ती न रखने से उन गुणों में नहीं बंधता है जैसे कि आकाश सूर्य पवन ये सर्वत्र रहते पर भी नहीं बंधते हैं ॥ १२ ॥

वैराग्य से तीक्ष्ण करी हुई जो निपुण दृष्टि तिस से जिस के सब संशय छूट गये हैं वह पुरुष जैसे स्वप्न से जगा हुआ पुरुष भ्रम से छूट जाता है तैसे नाना भ्रम से छूट जाता है ॥ १३ ॥

जिस पुरुष के प्राण इंद्रिय मन बुद्धि इनकी वृत्ति संकल्पों से रहित होंगी वह पुरुष देह मे रहने से भी उन गुणों से छूटाही रहैगा ॥ १४ ॥

ज्ञानी पुरुष तो कोई चाहे उसके शरीर मे ताड़न करे चाहे कोई सत्पुरुष कहीं पूजन भी करे तो भी शोक वा हर्ष विकार को नहीं प्राप्त होता है ॥ १५ ॥

अपने को कोई भला करे या बुरा करे तो उन दोनों से न किसी की प्रसंसा करै ना निंदा करै कोई अपने गुण कहै वा दोष कहै वह मुनि सम दृष्टि होकर दोनों से वर्जित ही रहै ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपि च न कुर्यादिति यो दैहिकेऽपि कर्मण्युदासीनः स मुक्तः इतरो बद्ध इत्यर्थः । एतान्येव सर्वाणि मुमुक्षोः साधनानि ज्ञातव्यानि ॥ १७ ॥

यस्तु केवलं शब्दब्रह्मणयभिज्ञः परिनिष्ठ्यमात्रदर्शी न तु स्वैः साधनैस्तदर्थनिष्ठो भवेत्तं निन्दति । शब्दब्रह्मणि निष्णातोऽध्ययनः पारं गतोऽपि परे ब्रह्मणि न निष्णायात्तत्र नाभियोगं न कुर्यात्तस्य शास्त्रश्रमः श्रमैकफलो न तु पुरुषार्थपर्यवसायी अधेनुं चिरप्रसूताम् ॥ १८ ॥

एतदेवान्यार्थनिदर्शनैः प्रपञ्चयति । गामिति । दुह्यत इति दोहः पयो दुग्धो दोहः यस्यास्तां यत्रापि दोहोऽपि यस्यास्तामर्थशून्यामसतीं भार्यां कामशून्यां देहं पराधीनं प्रतिक्षणदुःखहेतुमसत्प्रजां इष्टाइष्टसाधनशून्यं पुत्रम् अतीर्थीकृतमागते पात्रेऽदत्तं वित्तं दुष्कीर्तिदुरितापादकं अङ्ग हे उद्धव ! दुःखानन्तरं दुःखमेव यस्य स रक्षति ॥ १९ ॥

मया हीनां वाचं गिरमुक्तम विघृणोति । यस्यां वाचि मे जगतः

### श्रीधरस्वामिकृतभावार्थदीपिका ।

श्लोकं चरित्रं न स्यात् किं तत् अस्य विश्वस्य स्थित्यादिरूपम् तदवतारार्थः लीलावतारैरभीप्सितं जगतः प्रेमास्पदं श्रीरामकृष्णादिजन्म वा न स्यात् तां निष्फलां गिरं धीरो धीमान् न धारयेत् ॥ २० ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपनी टिप्पणी ।

देहार्थं साध्वसाधु कर्म यो न कुर्यान्न वदेन्न ध्यायेदपि तथापि यो दैहिकेऽपि कर्मण्युदासीन इति व्याख्यातम् एतानि निरहङ्कारत्वविरक्तत्वादीन्येव सिद्धस्यासाधारणलक्षणान्यपि साधकस्य मुमुक्षोः साधनानि मुक्त्यर्थमनुष्ठेयानीति ज्ञातव्यानीत्यर्थः ॥ १७ ॥

उक्तैः साधनैः निरहङ्कारत्वविरक्तत्वादिभिस्तदर्थनिष्ठस्य वेदस्य प्रतिपाद्योऽर्थो यः परमात्मा तन्निष्ठो न भवेत् ध्यानाद्यभियोगं ध्यानाद्यभिनिवेशम् भाविना नामसङ्कीर्त्तनादिभक्त्यङ्गपरिग्रहः पुरुषार्थपर्यवसायी मुक्तिसाधकः ॥ १८ ॥

एतदेव ध्यानाद्यभावे शास्त्राभ्यासस्य श्रमैकफलत्वमेव अन्यानेकनिदर्शनैरन्यपदार्थदृष्टान्तैः असतीं व्यभिचारिणीत्वात् कामशून्यां दृष्टादृष्टफलशून्यं दृष्टमैहिकं फलं धनार्ज्जनादि अदृष्टं श्राद्धादिजन्यं तच्छून्यं मया हीनां मदीयलीलादिशून्यां वैदिकीमपि वाचम् ॥ १९ ॥

स्थित्यादिरूपं तत्रावतारचरित्राणां प्रस्तुतत्वात् तेषां साक्षात् स्थित्यादिरूपत्वासम्भवाल्लक्षणया तदवतारेति व्याख्यातमत एवेत्यर्थं इत्युक्तं स्थितावपि धारयां प्रेमास्पदं प्रेमविषयं निष्फलां गिरं वेदलक्षणामपि तदुक्तं श्रीनारदेन इदं हि पुंसस्तपसः श्रुतस्य वेत्यादि अतएव गीतं कलियुगपावनावतारेण श्रीभगवता—

श्रुतमप्यौपनिषदं दूरे हरिकथामृतात् ।
यन्न सन्ति द्रवच्चित्तकम्पाश्रुपुलकादयः इति ॥ २० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

न कुर्यादिति स्वस्मिन् साध्वसाधु कारिषु स्वयमनोवाक्कायैर्न साध्वसाधुकारीति न विकल्पत इत्यर्थः ॥ १७ ॥

गुणेषु वर्त्तमानस्य गुणोत्तीर्णत्वं नाम न शयनासनभोजनादिविरहः किन्तु अहङ्काररागद्वेषराहित्यमुपकारापकारादिषु तुल्यचित्तत्वं दर्शनस्पर्शनादिषु तृष्णालोभदर्शनादिषु स्वस्यानुसन्धिविरहश्चेति प्रतिवचनमुक्तं भवति एवं विधस्य पुरुषस्य शास्त्रजन्ययोगजन्यज्ञानद्वयमप्युपादेयमित्याह । शब्दब्रह्मणीति । परे ब्रह्मणि समाधिपर्यन्तज्ञाना ॥ १८ ॥

अतीर्थीकृतमात्मानुगुणपरिहृतं मया हीनां मत्प्रतिपादनहीनां वाचं तु रक्षुश्री रक्षति ॥ १९ ॥

मया हीनां वाचमित्येतद्विवृणोति । यस्यामिति ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्चात्मारामः स्वयमपि किञ्चिल्लौकिकं कर्म साध्वसाधु वा न कुर्यान्न वदेन्न ध्यायेच्च किन्तु मुनिर्मननशीलोऽनया देहस्थोऽपि न देहस्थ इत्यादिनोक्तविधया वृत्त्या जडवद्विचरेत् ॥ १७ ॥

तदेव गुणेषु वर्त्तमानस्य गुणोत्तीर्णत्वं नाम न शयनासनभोजनादिविरहः किन्त्वहङ्काररागद्वेषराहित्यमुपकारापकारादिषु तुल्यचित्तत्वं दर्शनस्पर्शनादिषु कर्तृत्वाभिमानशून्यत्वं सुखदुःखाद्यर्थिताद्वयानिष्टबुद्धिविरहश्चेति प्रतिवचनमुक्तं भवति अथैव विधस्य पुरुषस्य शास्त्रजन्यमुपासनात्मकं चेति ज्ञानद्वयमुपादेयमित्याह । शब्दब्रह्मणीति । निष्णातः पारं गतोऽपि यदि परे ब्रह्मणि परब्रह्मविषयकसमाधिपर्यन्तज्ञाने न निष्णायात्परिनिष्ठितो न भवेत्तर्हि तस्य श्रमोऽध्ययनाध्यापनादिश्रमः श्रमफलः श्रम एव फलं यस्य सः निरर्थकः श्रम इत्यर्थः । तत्र दृष्टान्तः अधेनुं चिरप्रसूतां निःक्षीरां गामित्यर्थः । तां रक्षतो यथा रक्षा श्रमैकफला तद्वत् ॥ १८ ॥

एतदेव दृष्टान्तान्तरैश्च प्रपञ्चयति । गामिति । दुग्धेति दोहः पयः दुग्धः दोहो नोपरत्र दोहोऽस्ति यस्यास्तां गामसतीं कामशून्यां दुष्टां भार्यां च पराधीनं प्रतिक्षणं दुःखहेतुं देहमसत्प्रजां दृष्टादृष्टशून्यं दुरात्मानं पुत्रं च अतीर्थीकृतमागमे पात्रेऽदत्तं वित्तं दुष्कीर्तिदुरितापादकम् अङ्ग हे उद्धव ! मया हीनां मत्प्रतिपादनरहितां वाचं च यो रक्षति स दुःखदुःखी दुःखानन्तरमेव दुःखमवाप्नोतीति तथा ॥ १९ ॥

मया हीनां वाचमित्येतदेव विवृणोति । यस्यामिति । अङ्ग हे उद्धव ! अस्य जगतः स्थित्युत्पत्तिसंहारात्मकं पावनं स्वभक्तानां तद्भक्तानां पावनकरं मे मम कर्म चरित्रं यस्यां वाचि प्रतिपाद्यं न स्यात् लीलया येऽवताराः तैः तथा लीलापदेनास्याधराणां कर्मनिमित्तत्वव्युदासः तेषु ईप्सितं जगतः प्रेमास्पदं रामकृष्णादिजन्म वा न स्यात्तां वन्ध्यां निष्फलां गिरं धीमान्न धारयेत् पावनमित्यनेन स्वजन्मकर्मप्रतिपादनरहितायाः प्रत्युतापवित्रताया हेतुत्वं च सूचितम् अथवा लीलावतारेप्सितजन्मेति समाहारद्वन्द्वः तत्रेप्सिताः प्रियतमाः भक्ता इत्यर्थः । जन्मग्रहणं कर्मणोऽप्युपलक्षणं भगवद्भागवतजन्मकर्मादिकमित्यर्थः ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्समं कथयाह । न कुर्यादिति । आत्मारामो मुनिः साधु कुर्यान्नवदेन्न ध्यायेन्न असाधु न कुर्यान्न वदेन्न ध्यायेच्च शुभजीवानुद्दिश्यति चेत् । अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षम इत्यादेः साधु न कुर्यादित्यर्थो नोपपद्यते इति आत्माराम इत्यत्राऽऽत्मशब्देन परमात्मा एवोच्यते न जीवात्मेत्यर्थः ॥ १७ ॥

तदेकनिष्ठत्वभक्त्याद्यभावविशब्दराशिः फलदानाय क्वाह-न्यथा निष्फल एवेत्याह । शब्देति । परे ब्रह्मणि न निष्णायान्निष्ठितो नियतो न स्याद्यदि तर्हि तस्य पुंसः श्रमः वेदाध्ययनाभ्यासो अतसज्ञानं नमामि पारम्पर्यं वा फलमस्तीति श्रमफलः स्यात् अधेनुमदोग्ध्रीं गां रक्षत इव यथा तथास्य तदाज्ञान-

एवं जिज्ञासयाऽपोह्य नानात्वभ्रममात्मनि ।
उपारमेत विरजं मनो मय्यर्प्य सर्वगे ॥ २१ ॥
यद्यनीशो धारयितुं मनो ब्रह्मणि निश्चलम् ।
मयि सर्वाणि कर्माणि निरपेक्षः समाचर ॥ २२ ॥
श्रद्धालुर्मे कथाः शृण्वन् सुभद्रा लोकपावनीः ।
गायन्ननुस्मरन् कर्म जन्म चाभिनयन्मुहुः ॥ २३ ॥
मदर्थे धर्मकामार्थानाचरन्मदपाश्रयः ।
लभते निश्चलां भक्तिं मय्युद्धव ! सनातने ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं परब्रह्मणि निष्ठापर्यन्तं मुमुक्षुकोटिमुद्धवप्रति भगवतोपदिष्टमिदानीं तदभावे वेदधारणाश्रमो निरर्थक एवेत्याह । शब्दब्रह्मणीति । परे परब्रह्मणि न निष्णातत् तद्ध्यानं न कुर्यात् तस्य शब्दब्रह्मधारणाश्रमः श्रमफलः श्रम एव केवलं फलं यस्य सः भवेत्तु यथानर्ह रक्षतः रक्षा यथा श्रमैकफला तद्वत् ॥ १८ ॥

दुह्यते इति दोहः पयः दुग्धो दोहो यस्यास्तां स्वीकरणानन्तरं पयो नष्टामतिवृद्धाम् असतीमङ्गीकृतमपात्रे दत्तं पात्रे च न दत्तं तदुक्तं महाभारते—

न्यायागतस्य वित्तस्य बोद्धव्यौ द्वौ व्यतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् इति ॥

मया वेदार्थभूतेन हीनाम् अन्यार्थपरत्वेन गृहीतामित्यर्थः । हे अङ्ग ! दुःखदुःखी एव रक्षति दुःखानामपि दुःखं दुःखदुःखं तदस्यास्तीति स तथा ॥ १९ ॥

यस्यां गिरि अस्य विश्वस्य स्थितिलयादिरूपं पावनं सर्वपवित्रीकरणं मे कर्म लीलावतारेषु मद्धत्केप्सितं जन्म च न स्यात्तां धीरः मुमुक्षुर्न बिभृयात् ॥ २० ॥

—————

भाषा टीका ।

ज्ञानी पुरुष न कुछ विशेष कार्य करै न कुछ कहे न कोई लौकिक भली बुरी बात की चिन्ता करै इस वृत्ति से रह कर आत्माराम मुनि होकर जडकी नाईं विचरा करै ॥ १७ ॥

केवल वेदादिक शब्द में निपुण होकर भी परब्रह्म के आराधन में यदि कुशल न होवे तो उसका पठन पाठनादिक सब श्रम ही मात्र है जैसे दूध की आशा से बांझ गऊ का सेवा करना है तैसे ॥ १८ ॥

जिस के फिर दूध नहीं होनेवाला है ऐसी गऊ दुष्ट भार्या पर के आधीन शरीर और कुपात्र पुत्र धर्मादि उपयोग रहित धन है उद्धव जी ! मेरे संबंध विना वाणी इतनी वातों का संग्रह करने वाला भारी बड़ा दुःख पाता है ॥ १९ ॥

हे उद्धव जी ! जो धीर पुरुष है सो ऐसी बांझ वाणी को धारण न करे जिस वाणीमें इस जगत् की उत्पत्तिस्थिति प्रलयरूपी पावन लीला न होवे और हमारे जन्म चरित्र तथा लीलावतारादि चरित्र न होवें वही वाणी केवल बांझ है ॥ २० ॥

—————

श्रीधरस्वामिकृतभावार्थदीपिका ।

सङ्कलय्य ज्ञानमार्गमुपसंहरति । एवम् निश्चित्य विचारेणाऽऽत्मनि नानात्वभ्रमं देहाद्यध्यासं निरस्य निर्मलं मनो मयि सर्वगे परिपूर्णे समर्प्य संधार्य उपारमेत न व्याकुर्वीतेति भावेत्यर्थः ॥ २१ ॥

यद्यनीशो ऽशक्तस्तर्हीस्तामिदं मद्भक्त्यैव कृतार्थो भविष्यसीत्याह । यद्यीति ॥ २२ ॥

मदर्पणेन कर्मणा विशुद्धसत्त्वस्यान्तरङ्गां भक्तिमाह। श्रद्धालुरिति त्र्यध्याय । अभिनयन्ननुकुर्वन् ॥ २३ ॥

आचरन् सेवमानः ॥ २४ ॥

—————

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

ज्ञानमार्गं भक्तिसहितं नामस्तरा तदनिष्पत्तेः विचारेण वक्ष्ये मुक्त इति अध्याये गुणानां मे न वस्तुत इत्यादिपूर्वोक्तप्रकारेण देहाद्यध्यासं ब्रह्मणोऽहमित्यत्र धर्माध्यासः अयं पुत्र एवाहमिति वाह्यधर्माध्यासः भक्तिना गृह्यते तमध्यासं निरस्य ज्ञानस्य सम्पार्य मल्लीलाविश्रवणेन धारयित्वा उपारमेत साधनप्रयासाद्विरमत् मत्तु भक्तापरायण्यत्वमात्रेणात्मश्लाघी भवेदित्यर्थः ॥ २१ ॥

इदं ज्ञानाभिमस्त्यानुष्ठानमास्तां मद्भक्त्यैवेत्येवकारेण ज्ञानसाङ्कर्यव्युदासः कृतार्थ इति ज्ञानव्यानुषङ्गिकत्वादित्यर्थः ॥२२॥

अन्तरङ्गां ज्ञानकर्माद्यनावृतां शुद्धामित्यर्थः । श्रद्धालुरिति युग्मकं स्वयमनुकुर्वन्निति जन्मकर्मलीलयोर्मध्ये ये होता निजानुगमनीयमार्गास्तत्सकलानाक्षतान् स्वयमनुकुर्वन् भगवद्भक्तांस्तु अन्यद्वारानुकुर्वन्नित्यर्थः । धर्मो गोदानादिस्तदर्थकस्तमपि मदर्थे मदीयजन्मादिमहोत्सवाङ्गत्वेनाचरन् कामो महाप्रमादसेवननिवासादि

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

लब्धमहत्त्वमपि मदीयसेवार्थमन्मन्दिरवासादिलक्षणत्वेनैव यश्चार्थो धनसङ्ग्रहस्तमपि मदर्थं मत्सेवोपयोगित्वेनैवाचरन् सेवमानः तामेव कथाश्रवणादिलक्षणां निश्चलां सर्वदाव्यभिचारिणीं लभते तत्सुखेन कैवल्यादेरप्यनादरात् तथा भजनीयस्य चा-तथा तस्याश्रयता प्रभुणा यतः सनातने ॥ २३ ॥ २४ ॥

---

श्रीशुकदेवसूरिकृतशुकपक्षीयम् ।

एवमिति । नानात्वभ्रमं देहाद्यात्मानं विविच्य परमात्मनि च भक्तिं कृत्वा लौकिके कर्मणयुपरमेदित्यर्थः मदर्थं इति काम शब्दः शास्त्राविरुद्धकामपरः ॥ २४—२७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रश्नस्योत्तरमुपसंहरन् विवेकं विदधाति । एवमिति । एवमित्थं जिज्ञासया विचारेण जीवात्मनि नानात्वभ्रमं देवमनुष्यादिनानात्वभ्रममपोह्य देहाज्जीवात्मानं विविच्येत्यर्थः । कृत्स्नचिदचिदात्मनि मयि विरजं विगतरजोगुणमाहारादिभिः सात्त्विकैः सत्त्वैकप्रवणं मनोऽर्प्यं निधाय मयि भक्तिं कुर्वित्यर्थः । लौकिककर्मणः उपरमेदित्यर्थः ॥ २१ ॥

यद्येवमेव मनसः सम्पादयितुं दुःशकं कुतस्तर्हि भक्तिः कर्तव्येत्यभिप्रायवतः भक्तियोगोत्पादकानुपायानुपदिशति यदीति । मयि ब्रह्मणि निश्चलं यथा तथा मनो धारयितुं यद्यशक्तः असमर्थस्तर्हि सर्वाणि वर्णाश्रमोचितानि कर्माणि निरपेक्षः सर्वान्तरात्मप्रयोजककर्तृभूतपरमात्मप्रवर्तितदेहेन्द्रियककर्तृकाणि नतु मत्कर्तृकाणीत्यध्यवसायेन तत्फलापेक्षारहितः समाचर कुरु ॥ २२ ॥

किञ्च श्रद्धालुरिति । सुभद्राः जगन्मङ्गलावहाः शृण्वतो वदतश्च लोकस्य पावनकरीर्मम कथाः शृण्वन् गायंश्च जन्म श्रीरामकृष्णादिजन्मानुस्मरन् कर्म चेष्टितमभिनयन् स्वयमनुकुर्वन् ॥ २३ ॥
मदर्थे धर्मकामार्थानाचरन् मदाश्रयः धर्मस्य चेश्वराराधनार्थता नाम मत्प्रीणनद्वारा अपवर्गार्थता कामानां मदर्थत्वं नाम तदुपभुक्तस्रग्गन्धवासोऽलङ्कारचर्वितोच्छिष्टभोजनत्वादिरूपमर्थानां मदीयाराधनोपयोगित्वं मदुपाश्रयः मामाश्रित इत्याश्रयः मामाश्रितेऽनेनेत्याश्रय इति च अहमेवोपाश्रयः यस्य सः ईश्वर एव प्राप्यः प्रापकश्चेत्यध्यवसायवानित्यर्थः । एवं भूतश्चेत्सनातने सर्वकारणे मयि हे उद्धव । निश्चलां भक्तिं लभते ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपसंहरति । एवमिति । वस्तुयथार्थज्ञानं नानात्वभ्रममेवं तत्त्वजिज्ञासयापोह्य निरस्य उपारमेत प्रवृत्तिमार्गादिति शेषः नानात्वभ्रमो भेदभ्रम इति मतम्—

> जीवस्येशत्वविज्ञानं जीवानामेकता तथा ।
> ईशस्य बहुताज्ञानमीशस्यानीशता तथा ॥
> जगतोऽसत्यताज्ञानं नानात्वभ्रम उच्यते ।
> इत्येतेन विरुद्धत्वात्त्याज्यं च मुमुक्षुभिः ॥

इति ॥ २१ ॥

नन्वस्तु जीवन्मुक्तस्य समर्थस्य हरौ निरन्तरं मनो निधानोपाधिरहितस्य मुमुक्षोरुपासनोपायः कथमिति तत्राह । यदीति । कर्माणि मयि समर्प्य कुर्वाणानि मद्विषयत्वेन समाचर ॥ २२ ॥

निष्कामत्वेन मामुद्दिश्य कर्म कुर्वाणस्येत्थं भावमाह । श्रद्धालुरिति ॥ २३ ॥

मत्कथाश्रवणादिना किं फलं स्यादित्यत उक्तं लभत इति । निरन्तरस्मृतिफलां भक्तिं लभते ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं भक्त्यैव ज्ञानं सिद्ध्यतीत्युक्तं तं च ज्ञानमार्गमुपसंहरति । एवमिति । जिज्ञासया बद्धो मुक्त इति व्याख्यया गुणतो मे न वस्तुत इत्यादिपूर्वोक्तप्रकारकविचारेण आत्मनि शुद्धजीवे नानात्वं देवत्वमनुष्यत्वादिभेदमपोह्य एवं मल्लीलादिश्रवणेन मनो मयि ब्रह्माकारे सर्वगे अर्प्य धारयित्वा उपारमेत् ॥ २१ ॥

तदेवं ज्ञानिनां भक्तिमुपदिश्य तदनादरेणानुपाकृतासिद्धज्ञानगुणानां शुद्धामेव भक्तिमुपदिशति चतुर्भिः । यदीति । निश्चये टीकायां अन्तं पदं स्वसमाधिना अति विघ्नमुदूर्ध्नीत्यादिवत् अत्र खलु ज्ञानेच्छुरेव प्राकृतः श्रीमदुद्धवं प्रति च तादृशत्वमारोप्यैवेदमुच्यते ततश्च श्रेयःसृतिं भक्तिमुदस्य ते इत्यादिप्रमाणेन भक्तिं विना केवलज्ञानमार्गेण ब्रह्मणि मनो धारयितुं निश्चितमेधानीशो यद्यसि तत्रापि ज्ञानादिसर्वगुणसंमितं भक्तिमार्गमेवाश्रयेति तत्सोपानमुपदिशति । यदीत्यादिना अथवा प्राक्तनभक्तिफलाभावात् ब्रह्मज्ञानेच्छुर्यदि तत्र मनो धारयितुमनीशः स्यात् तदाधुनाप्येवं कुर्वीत योऽयं समाचर अथ निरीहः काङ्क्षान्तररहितः किंवा तदेवमपि यस्य लीलाकथायां श्रद्धा न स्यात् तस्य ब्रह्मधारणायामप्यशक्तिः स्यात् किमुत भगवद्धारणायामिति अवश्यं शुद्धभक्तावेव पर्यवसाययितुमाह । यद्यनीश इति ॥ २२ ॥

श्रद्धालुत्वे च सति शुद्धां भक्तिमाह । श्रद्धालुरिति सुभद्रकेन अभिनयन् जन्मकर्मलीलानामभिनयेऽशक्तो निजाभिप्रायव्यक्तगतांस्तान् स्वयमनुकुर्वन् भगवज्जनान् भक्तान्तरगतांश्च तानन्यद्वारानुकुर्वन्नित्यर्थः ॥ २३ ॥

किञ्च यो धर्मो गोदानादिस्तमपि मदर्थं मदीयजन्मादिमहोत्सवाङ्गत्वेनैव यश्च कामो महाप्रासादवासादिलक्षणस्तमपि मदर्थं मदीयसेवार्थमन्मन्दिरवासादिलक्षणत्वेनैव यश्चार्थो धनसङ्ग्रहस्तमपि मदर्थं मत्सेवामात्रोपयोगित्वेनैवाचरन् सेवमानः मदुपाश्रयः आश्रयान्तरशून्यचेताश्च सन् तामेव कथाश्रवणादिलक्षणां भक्तिं मयि निश्चलां सर्व-

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किंवा योगेन सांख्येन न्यासस्वाध्याययोरपि ।
किम्वा श्रेयोभिरन्यैश्च न यत्रात्मप्रदो हरिः ॥
इति नारदोक्तेरपि सम्यक् प्रायशः सम्यक् प्रकृष्टमाश्रयः ॥ ४८ ॥

ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युतेति स्मृते-स्तुभ्यमहमनन्यप्रकाश्यमपि वस्तु वच्मीत्याह । अथैतादिति । सांख्ययोगादीनि साधनान्तरमप्यपेक्षाणि सव्यभिचारीणि च सत्सङ्गस्तु स्वतन्त्र एव समर्थः फलाव्यभिचारी चेति स्वामि-चरणाः ॥ ४९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे सङ्गतोऽयमेकादशः सङ्गतः सताम् ॥ ११ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्थण्डिले भुवि मन्त्रहृदयैः षडङ्गमन्त्रन्यासैः तत्प्रकारः गोपालतापन्यादिव्याख्यानादौ द्रष्टव्यः ॥ ४५ ॥

एतेषु सूर्यादिषु चतुर्भुजमित्युपलक्षणम्—
द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमीश्वरम् ।
दिव्यालङ्करणोपेतं रत्नपङ्कजमाश्रितम् ॥
गोपगोपीगवावीतं सुरद्रुमतलाश्रितम् ।
चिन्तयंश्चेतसा कृष्णं मुक्तो भवति संसृतेरिति ॥
श्रुत्युक्तस्य द्विभुजस्यापि ॥ ४६ ॥

इष्टापूर्तेन कर्मणा यो मामेव यजेत् तस्य साधुसेवया मत्स्मृतिमत्प्रियफलं ज्ञानं ततः स मयि भक्तिं लभते इत्यन्वयः ॥४७॥

हे उद्धव ! प्रायः सत्सङ्गेन लभ्यो यो भक्तियोगस्तेन विनो-पायः मत्प्राप्त्युपायो न विद्यते यतः सतां प्रायणं प्रकृष्टमयन-माश्रयोऽहमेव सत्सङ्गादपि कस्यचित् मद्भक्तिर्न भवतीति भक्ते-र्दौर्लभ्यसूचनाय प्रायोक्तिः ॥ ४८ ॥

एतद्रहस्यमाश्रयं सत्सङ्गप्रभावं परमं गुह्यं वक्ष्यामि त्वं मे सुहृत्सखापि सन् भृत्यः अतः शृणु ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकादशाध्यायार्थप्रकाशः ॥ ११ ॥

भाषा टीका ।

पृथिवी की वेदी पर मन्त्रोंके न्यासों से उत्तम सात्विक प्रिय भोगादि कों से आत्मा में सम्पूर्ण भूतों में क्षेत्रज्ञ रूप परमेश्वर जान कर सम दृष्टि से मेरा यजन करै ॥ ४५ ॥

इन सब स्थानों में शंख चक्र गदा पद्म धारण किये हुये चार भुजा वाले शांत मेरे स्वरूप को ध्यान करके साव धान होकर अर्चन करै ॥ ४६ ॥

इस प्रकार से यज्ञादिकों से वा मंदिर प्रतिष्ठादिक स जो सावधान चित्त होकर मेरा यजन करता है वह मेरे विषै उत्तम भक्ति को प्राप्त होता है और यदि इसी प्रकार साधु सेवा भी करै तो उसको सदा काल मेरा स्मरण बना रहता है ॥ ४७ ॥

हे उद्धव ! प्राय करके भक्ति योग के विना सत्पुरुषों के संग बिना मुक्ति का उत्तम सहज उपाय दूसरा नहीं है क्योंकि सत्पुरुषों का तो केवल मैं ही आश्रय हूं ॥ ४८ ॥

हे यदुनंदन ! तुम श्रद्धा से सुनते हो तिस से अब मैं एक परम गुप्त बात भी कहता हूं क्योंकि तुम हमारे भृत्य भी हो सुहृत भी हो सखा भी हो ऐसा न होता तो नहीं कहते ॥ ४९ ॥

इति श्रीमद्भागवत एकादशस्कन्ध में एकादशाध्याय
भाषा टीका समाप्ता ॥ ११ ॥

———

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे एकादशोऽध्यायः ॥ ११ ॥

——:*:——

# अथ द्वादशोऽध्यायः।

---

श्रीभगवानुवाच।

न रोधयति मां योगो न साङ्ख्यं धर्म एव च।
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा॥ १॥
व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः।
यथाऽवरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम्॥ २॥
सत्सङ्गेन हि दैतेया यातुधाना मृगाः खगाः।
गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः॥ ३॥
विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः।
रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन् युगेऽनघ!॥ ४॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

द्वादशे साधुसङ्गस्य महिमा वर्णितः पुरा।
कर्मानुष्ठानसंत्यागव्यवस्था च ततः परम्॥

न रोधयति न वशीकरोति योग आसनप्राणायामादिः साङ्ख्यं तत्त्वानां विवेकः धर्मः सामान्यतोऽहिंसादिः स्वाध्यायो वेदजपः तपः कृच्छ्रादि त्यागः संन्यासः इष्टापूर्तमिष्टं च पूर्तं च तत्रेष्टमग्निहोत्रादि पूर्तं कूपारामादिनिर्माणम् दक्षिणाशब्देन सामान्यतो दानं लक्ष्यते॥ १॥

व्रतानि एकादश्युपवासादीनि यज्ञो देवपूजा छन्दांसि रहस्यमन्त्राः अवरुन्धे वशीकरोति॥२॥

यातुधाना राक्षसाः॥ ३—४॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी।

ततः परं साधुसङ्गमहिमावर्णनानन्तरम्॥ ०॥

न रोधयतीति युग्मकं यथा सत्सङ्गो मां वशीकरोति तथा योगादयो नेत्युक्त्या तेऽपि किञ्चिद्वशीकुर्वन्तीत्यायातं तथाच भक्तिमिश्रा एव ते ज्ञेयाः न साधारणाः अतएव व्रतान्येकादश्यादीनीति टीकाकृद्भिर्व्याख्यातं नचैतावता नित्यव्रतानामकर्त्तव्यत्वप्रसङ्ग इति वाच्यम् एकस्य फलाभिसन्धिप्रशंसयान्यस्य नित्यत्वनिराकरणायोगात् कर्माधिकारिणः त्रिप्रमुखकुलप्रसंशयाग्निहोत्राऽपरित्यागवत् भक्त्यधिकारिणश्च भक्तपूजाद्यधिकत्वश्रवणात् हृदयंगमाऽपरित्यागवच्च तत्त्यागायोगाच्च अन्यथा वैष्णवो यदि भुञ्जीत एकादश्यां प्रमादतः। विष्णवर्चनं वृथा तस्य नरकं घोरमाप्नुयादिति गौतमीयादिवचनव्याकोपः स्यात्॥ १॥ २॥

सत्सङ्गेनेति सार्धयुग्मकम्॥ ३॥ ४॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

न रोधयति हृदिस्थं न करोति न वशीकरोतीति यावत्॥१-४॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

इत्थं षडङ्गके बहुव्ययकालादिसाध्ये दुष्करे भक्तियोगे उपदिष्टे तदभ्यसितुमशक्तस्यामात्विद्यमानसमुच्चमावस्य सुकरोपायमात्मनिःक्षेपापरपर्यायं न्यासयोगात्मकं यवीयांसं विवक्षुस्तावत्सर्वानितरोपायसाध्यभावत्सर्वोपायनाय कैमुत्यन्यायेन तदुपायनिष्टसत्सङ्गेनेतरेषामितरसाध्यत्वमाह। नेति। मां न रोधयति न हृदिस्थं करोति न वशीकरोतीति यावत्। योगः वर्णाश्रमोचितकर्मयोगः प्राणायामयोगो वा सांख्यं प्रकृतिविविक्तात्मोपासनं धर्मः अहिंसादिरूपः स्वाध्यायो वेदाध्ययनं तपोऽनशनादि इष्टं यागादि वैदिकं कर्म पूर्तं स्मार्तं तयोः समाहारः त्यागः सामान्यतो दानं दक्षिणा ऋत्विगादिगुर्वर्थं दानम्॥ १॥

व्रतान्येकादश्युपवासादीनि यज्ञाः पञ्च महायज्ञाः छन्दांसि रहस्यमन्त्राः तीर्थानि गङ्गादीनि नियमाः शौचाचमनादयः। यमाः बाह्याभ्यन्तरेन्द्रियनियमनोपायाः यथा सत्सङ्गो मामवरुन्धे

बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः ।
वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः ॥ ५ ॥
सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः ।
व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथापरे ॥ ६ ॥
तेनाधीतश्रुतिगणा नोपासितमहत्तमाः ।
अव्रतातप्ततपसः मत्सङ्गान्मामुपागताः ॥ ७ ॥
केवलेन हि भावेन गोप्यो गावो नगा मृगाः ।
येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

न मद्वशीकारप्रयोजका इति नैरहमष्टाङ्गयोगिप्रभृतिभिर्न वशीकृतो न प्राप्तः स्यामिति फलितोऽर्थः । न साधयति मां योगो न सांख्यं धर्म उद्धव ! न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता । भक्त्याहमेकया ग्राह्य इत्यग्रिमवाक्यैकार्थ्यात् योगादयो न मत्प्राप्त्युपाया इत्यतो नोपायो विद्यत इति पूर्वोक्तिरेव दृढीकृता सत्संगो यथाऽवरुन्धे वशीकरोतीत्यनन्तप्रयोगेण भक्त्युत्पत्तेः पूर्वमपि स एव स्वयं मां वशीकुर्यात् किं पुनर्भक्तिजननिरस्ये यथो ज्ञप्यते । अत्र यथाशब्दस्तत्र च यथा शब्दो यथावदित्यर्थ एव प्रयुक्तः । भक्त्याहमेकया ग्राह्य इत्यग्रिमवाक्ये एकयेति पदप्रयोगादित्यंके योगादीनामपि भक्तिमिश्रत्वात् किञ्चिद्वशीकारत्वमस्त्येवेत्यतो यथाशब्दः साधक इत्यपरे प्राहुः सर्वसङ्गापहः सार्वत्रिकासक्तिनिरासक इति वशीकारे हेतुः ॥ ॥ २ ॥

वशीकरणमत्रगौणं मुख्यं च यथा स्यात् तथा भागादौ श्रीगोप्यादौ च दर्शयति । सत्संगेनेति चतुर्भिः । सन्तः प्रधानीभूतभक्तिमन्तः केवलभक्तिमन्तश्च तत्र पूर्वेषां भक्तिमिश्रगवशीकारो गौणः उत्तरेषां तु मुख्य इति ज्ञेयं यातुधाना राक्षसाः ॥ ३ ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

द्वादशे साधुसङ्गस्य महिमा तदनन्तरं शरणागतिः शरणस्य सर्वात्मत्वं च वर्ण्यते । प्रतिज्ञातमाह । नेत्यादिना । न रोधयति न हृदि स्थापयति स्वाध्यायादयः सिद्धान्तापयोगिन एव । यथा सत्सङ्गो मां रोधयति तथा न मां रोधयन्ति यदा तदा सिद्धान्तविरुद्धं योगादिशास्त्रत्रयं च सुतरां नैव रोधयन्तीति तयोरत्वयः । तत्र योगः पतञ्जलिनामकेन केनापि ऋषिणा प्रतिपादितः चित्तवृत्तिनिरोधलक्षणः सांख्यं भगवद्व्यतिरिक्तकपिलकृतं तत्त्वसंख्यानम् धर्मो जैमिन्युक्तः स्वाध्यायो निर्विचारोपनयनपूर्वको वेदाभ्यासः तपः आलोचनात्मकं ज्ञानं त्यागो वैराग्यम् इष्टापूर्तम् इष्टं च पूर्तं च तत्रेष्टं श्रौतं पूर्तं स्मार्तं कर्म दक्षिणा दानम् ॥ १ ॥

व्रतानि हरिनामरोपवासादीनि यज्ञः पूजा छन्दांसि रहस्यमन्त्राः यथा स्वाध्यायादिन्यासमन्त्राः यथा स्वाध्यायादितादर्थ्यार्थावधारणहेतुतया सत्सङ्गः मां सर्वेषां स्वाध्यायादीनां फलभूतमवरुन्धेत् आत्मसात्करोति यतः सर्वपूर्वोक्तेषु स्वाध्यायादिसाधनेषु यः सङ्गः मनोऽभासङ्गः तात्पर्यग्रहकस्वरूपो दोषस्तदपहः ॥ २ ॥

यातुधानाः राक्षसाः ॥ ३—४ ॥

---

भाषा टीका ।

श्रीभगवान् उवाच ।

सब संसारी संगों का दूर करने वाला सत्संग जैसे मेरे को वश करता है तैसे योग तथा सांख्य धर्म वेदाध्ययन तप त्याग यज्ञयागादिक मंदिर निर्माणादिक दक्षिणा व्रत यज्ञ वेद मन्त्र जप तीर्थ यम नियम ये सब मेरे को वश नहीं कर सकते हैं ॥ १—२ ॥

हे अनघ उद्धवजी ! सत्संगही से दैत्य राक्षस मृग पक्षी गंधर्व अप्सरा नाग सिद्ध चारण गुह्यक विद्याधर मनुष्यों में वैश्य शूद्र स्त्री अन्त्यज रजोगुण तमोगुण स्वभाव वाले तिस तिस युग में मेरे पदको प्राप्त भये हैं ॥ ३—४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वाष्ट्रो वृत्रः कायाधवः प्रह्लादः ॥ ५ ॥

ऋक्षो जाम्बवान् गृध्रो जटायुः वणिक्पथस्तुलाधारः व्याधो धर्मव्याधः यज्ञपत्न्यो दीक्षितभार्याः ॥ ६ ॥

तेषां सत्सङ्गव्यतिरिक्तसाधनान्तराभावमाह । न इति । न अधीताः श्रुतिगणा यैः तदर्थं च नोपासिता महत्तमा यैस्तैः तथा किञ्च अव्रतातप्ततपसः न व्रतानि येषां न तप्तानि तपांसि यैस्ते च ते च तथा मत्सङ्गादिति साधुः सङ्गो नाम मयैव सङ्ग इत्याभिप्रेत्योक्तम् यद्वा साधुसङ्गस्यापि मत्सङ्गत्वं विवक्ष्यते स्वस्यापि सत्त्वात् यद्वा मदीयसङ्गादित्यर्थः ॥ ७ ॥

तत्र वृत्रादीनां भवतु नाम कथञ्चित्साधनान्तरं गोपीप्रभृतीनां तु नान्यदस्तीत्याह । केवलेनेति । सत्सङ्गलब्धेन केवलेन भावेन प्रीत्या नगा यमलार्जुनादयः नागाः कालियादयः यद्वा तदानीं-

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नतानां सर्वतरुगुल्मादीनामपि भगवति भावोऽस्तीति मन्यते तदुक्तं भगवतैव—

अहो अमी देववरामरार्चितं पादाम्बुजं ते सुमनःफलार्हणाम् ।
नमन्त्युपादाय शिखाभिरात्मनस्तमोऽपहत्यै तरुजन्म यत्कृतमि-

त्यादि सिद्धाः कृतार्थाः सन्त ईयुः प्रापुः ॥ ८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

कयाधोर्दानवस्या अपत्यं कायाधवः प्रह्लादः तत्र वृत्रस्य सत्सङ्गः प्रागूजन्मनि श्रीनारदाङ्गिरसोः सङ्गः प्रह्लादस्य तु गर्भे श्रीनारदसङ्गः आदिशब्दगृहीतान् कतिचिद्गणयति वृषपर्वा दानवः अस्य जातमात्रस्य मातृपरित्यक्तत्वान्मुनिपालितत्वेन मुनिसङ्गः पुराणान्तरप्रसिद्धो ज्ञेयः बलेः श्रीप्रह्लादसङ्गः बाणस्यापि बलिशम्भुसङ्गः मयस्यापि सभानिर्माणादौ पाण्डवसङ्गः विभीषणस्य हनुमत्सङ्गः ॥ ५ ॥

सुग्रीवस्य हनुमत्सङ्गः हनुमतस्तु श्रीमंगवद्रूपसत्सङ्गः गजेन्द्रस्य पूर्वजन्मनि सत्सङ्ग उत्तरजन्मान्ते भगवत्सङ्गः गृध्रस्य गरुडदशरथादिसङ्गः वणिक्पथस्य महाभारते जाजलिमुनिगर्वप्रसङ्गे प्रोक्तमाहात्म्यः श्रीनारदादिसङ्गोऽन्वेषणीयः धर्मव्याधस्य हि आदिवाराहे इयं कथा वसुनामा कश्चिद्वैष्णवो राजासीत् तेन च मृगभ्रान्त्या हतः कश्चिद्ब्राह्मणो ब्रह्मराक्षसः सन् राज्ञः प्रापञ्चिकविष्णुलोकध्यानसमये शरीराविष्टो बभूव तद्रोगान्ते राजतां प्राप्तस्य तस्य ब्रह्मपराख्यस्तवपाठेनासौ वहिर्देहान्निर्गतस्तदा तत्कृतधर्मव्याधसंज्ञः सन् जगन्नाथं दृष्ट्वा स्तुत्वा तत्सायुज्यमापेति कुब्जायाः पूर्वजन्मनि नारदसङ्गः श्रीहरिवंशप्रसिद्ध एव गोपीनां च साधनसिद्धानां नित्यसिद्धगोपीसङ्ग एव यज्ञपत्नीनां च श्रीकृष्णगुणकथकलोकसङ्गः अपरे दैत्यादयः ॥ ६ ॥

नन्वेषां श्रुतिगणाध्ययनार्थं पूर्वार्धे सत्सङ्गे स्वसङ्गत्वमारोपितं तदागमाभावो दुर्वचनो यद्वेति तथाच स्वस्यापि सत्त्वात् स्वसङ्गोऽपि सत्सङ्ग इति विवक्षितं किन्तु प्रसिद्धिविच्युतिस्तु तद्वदस्यैव सच्छब्देन वैष्णवानामेव प्रसिद्धत्वादतः पुनर्वक्ति अत्र मत् च सन्तश्चेति तेषां सङ्गादिति मध्यपदलोपी समासः अत एव मदीयसङ्गादित्यर्थ इत्युक्तम् ॥ ७ ॥

तत्र तेषु सत्सु मध्ये सत्सङ्गलब्धेनेति प्रकरणानुसारादध्याहृत पूर्वार्धे नगनागशब्दाभ्यां प्रधानानामेव कृतार्थताऽभिप्रेता न सर्वेषामतो यद्वेति ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

त्वाष्ट्रः त्वष्टुः पुत्रः नाग्नो मयश्च प्रसिद्धौ वाणमयाभ्यामन्ये विभीषणादयो मोक्षयन्त एवेति भगवत्सङ्गलस्य दृढत्वात्मामुपागता इत्युक्तिः ॥ ५ ॥

गृध्रो जटायुः अत्र तस्य मुमुक्षुत्वं श्रीमति रामायणे अपरावर्तिनामिति पदस्य मुक्तिविषयत्वे सति घटते ननु युक्तात् पराभूतिपरत्वे वणिक्पथः तुलाधारः व्याधः धर्मव्याधः भगवदीयस्वपीडाणवेष्वनुक्तानापहृतहृदयतया तमेव ध्यायतां प्रकृतिविशेषमोक्षः सम्भवतीत्यनेनैव वचनबलेनाभ्युपगन्तव्यम् ॥ ६—७ ॥

नगा इति मृगविशेषणं वंशस्तनाकृष्टतया निश्चलाः यद्वा अपि वृक्षाः परिम्लाना इति न्यायेन अन्तः संज्ञा वृक्षाणामां तत्सन्निकर्षविप्रकर्षज्ञानितया भगवदनुकम्पात्वसम्भवः ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्वाष्ट्रो वृत्रासुरः कायाधवः प्रह्लादः तावादी येषां ते बहवो मत्पदं प्राप्ता इति सम्बन्धः यद्वा दैतेयादिषु कांश्चित्साधून्निर्दिशति त्वाष्ट्रकायाधवादय इत्यादिना वाणो मयश्च प्रसिद्धौ ॥ ५ ॥

अथ मृगेषु साधूनाह । सुग्रीवो हनुमानिति ऋक्षो जाम्बवान् पशुष्वाह । गज इति गजो गजेन्द्रः अथ पक्षिष्वाह । गृध्र इति गृध्रो जटायुः तस्य तु मुमुक्षुत्वं श्रीमति रामायणे—

या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः ।
अपरावर्तिनां या च या च भूमिप्रदायिनाम् ॥
मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमानिति ।

प्रसिद्धम् अपरावर्तिनां या गतिरनुत्तमान् लोकान् गच्छेति मुक्तिविषयत्व एव घटते ननु पुण्यं अपरावर्तिगतिपरत्वे तत्प्राप्यलोकानामनुत्तमत्वाभावात् अथ वैश्यस्वाहादिवणिक्पथ इति । वणिक्पथः तुलाधाराख्यः अन्त्यजेष्वाह व्याध इति व्याधो धर्मव्याधः स्त्रीष्वाह कुब्जा व्रजे गोप्यो यज्ञपत्न्य इति । यज्ञपत्न्यो ब्राह्मण्यः कुब्जादीनां केनापि भावेन भगवत्सम्बन्धसद्भावात् भागवतत्वमस्त्येव तथा पर इत्यनेनानुक्तसंग्राहकं ज्ञेयम् ॥ ६ ॥

ते त्वाष्ट्रकायाधवादिसम्बन्धिनः न अधीताः श्रुतिगणा यैस्ते न उपासिता महत्तमाः साधवो यैस्ते न सन्ति व्रतानि येषां ते न तप्तं तपो यैस्ते अत्र सन्धिरार्षः किन्तु सतां त्वाष्ट्रादीनां सङ्गान्मामुपागताः प्राप्ताः स्वसङ्गलस्य दृढत्वस्य यापनाय मामुपागता इत्युक्तं मोक्षयन्त एवेत इत्यर्थः । नाधीतश्रुतिगणा इत्यादिविशेषणैरुपायान्तरशून्यत्वमेव व्याप्यते ॥ ७ ॥

ननु युक्तमेतद्भगवद्व्यापारत्वाभिज्ञानां त्वाष्ट्रादीनां तत्सम्बन्धिनामन्येषां च मुक्तिरिति । इदं त्वयुक्तं यत्केवलं कामनादिभावेन त्वामनुवृत्तवतीनां गोप्यादीनामिति अतो न तासां मुक्तिः कुतस्तत्सम्बन्धिनामित्यत आह । केवलेनेति । भावोऽत्र कामभयद्वेषादिरूपाभिप्रायविशेषपरः साधनापरपर्यायदर्शनस्पर्शनादिरूपव्यापारपरश्च तस्य कैवल्यं नाम परत्वमुत्कृष्टत्वमिति यावत् तद्यथायोग्यं योज्यं तत्र गोप्यः केवलेन तीव्रेण भावेन कामात्मकेन गावो नगा मृगाश्च तस्य सादरं मदीयगुणरूपदर्शनादिरूपेण भावेन ये चान्ये मूढधियः तमोगुणावृतधियः केवलतमोगुणप्रधाना इत्यर्थः केवलेन भावेन भगवद्द्वेषात्मकेन नगा यमलार्जुनादयः नागाः कालीयादयः तेऽपि सिद्धा मुक्त्यर्हाः मदीयगुणरूपदर्शनादिभिर्निरस्ताखिलमुक्तिप्रतिबन्धकाः सन्तोऽञ्जसाऽनायासेन मामीयुः प्रापुः नगा इति मृगविशेषणं वा तत्र नगाः निश्चलाः वंशस्तनाकृष्टचित्त-

यं न योगेन साङ्ख्येन दानव्रततपोऽध्वरैः ।
व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि ॥ ९ ॥
रामेण सार्धं मथुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः ।
विगाढभावेन न मे वियोगतीव्राधयोऽन्यं ददृशुः सुखाय ॥ १० ॥
तास्ताः क्षपाः प्रेष्ठतमेन नीता मयैव वृन्दावनगोचरेण ।
क्षणार्धवत्ताः पुनरङ्ग ! तासां हीना मया कल्पसमा बभूवुः ॥ ११ ॥
ता नाविदन्मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथेदम् ।
यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तेषां साधुसङ्गोत्थया यथा प्रकृतिप्रधानीभूता केवला च भक्तिरेव नतु साधनान्तरमित्याह । ते इति । न अधीताः श्रुतिगणा यैस्तदर्थं च न उपासिता महत्तमाः श्रुत्यर्थग्राहयितारो मुनयो यैस्ते न व्रतानि येषां न तप्तानि तपांसि यैस्ते च तेच तथा किन्तु सत्सङ्गेनैव हेतुना भक्त्या सत्सङ्गात् मत्संग प्राप्य मामुपागताः प्राप्ताः सद्भिः सङ्गो नाम ममैव सङ्ग इत्यर्थः ॥७॥

तत्रापि गोपीप्रभृतीनां सर्वतोऽप्यतिवैशिष्ट्यमाह । केवलेन ज्ञानकर्माद्यमिश्रेण निष्कामेण भावेन शृङ्गारवात्सल्यसख्यदास्यमाधुर्यादिना भक्तियोगेन । गोप्यः शृङ्गाररसेन गावो वात्सल्यरसेन नगा गोवर्द्धनादिपर्वताः सख्यरसेन मृगा अपि मूढधियो वृन्दावनीलताकुञ्जमाद्या नागाः कालियाद्या दास्यरसेन मामीयुः अत्र गोप्यादयः सिद्धा एव पूर्वं गमनानन्तरं मामीयुरिति केवलेन भावेन तेषां मत्प्राप्तिमत्त्वमनादिता नित्यसिद्धमेवेत्यर्थो ऽवसीयते अन्यथा सिद्धा इति पदस्य वैयर्थ्यं स्यात् ॥८॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कायाधवः कयाधुपुत्रः प्रह्लादः ॥ ५ ॥
धार्मिकव्याधः तुलाधारः व्याधः धर्मव्याधः ॥ ६ ॥

न अधीताः श्रुतिगणाः यैस्ते तथा तदध्ययनार्थं नोपासिता महत्तमा यैस्ते तथा न सन्ति व्रतानि येषां न तप्तानि तपांसि यैः ते च ते च तथा मत्प्रापकः सङ्गः सत्सङ्गः शाकपार्थिवादित्वात्समासः ॥ ७ ॥

केवलेन हि सत्सङ्गेन लब्धो यो भावः भक्तिस्तेन ॥ ८ ॥

भाषा टीका ।

वृत्रासुर प्रह्लादजी आदिक वृषपर्वा बली बाणासुर मय दानव विभीषणजी सुग्रीवजी हनुमानजी जाम्बवान् गजराज जटायु तुलाधार धर्मव्याध कुब्जा ब्रज में गोपिका यज्ञ पत्नी ऐसे और भी मुक्त होगये ॥ ५—६ ॥

इन्होंने न वेद पढे थे न किसी महत्पुरुष का उपासना किया न व्रत किये न तप किया केवल सत्संग से मेरे को प्राप्त होगये ॥ ७ ॥

एक केवल प्रेम भाव से गोपिका गउ वृक्ष मृग और भी जो मूर्ख बुद्धि वाले नाग आदिक सिद्ध होकर अनायास से मेरे को प्राप्त होगये ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सत्प्राप्तेर्दुर्लभतामाह । यमिति । योगादिभिः कृतप्रयत्नोऽपि यं न प्राप्नुयात्तं मामीयुरिति पूर्वेणान्वयः अत्र च प्रथमं या गोप्यः पश्चाद्वया वा श्रीकृष्णेन सह सङ्गताः ते सन्तस्तत्सङ्गोऽन्येषां सत्सङ्गस्तेन च तेषां भक्तिरिति ज्ञातव्यम् ॥ ९ ॥

गोपीनां भावं प्रपञ्चयति । रामेणेति चतुर्भिः । श्वाफल्किना अक्रूरेण मयि प्रणीते सति मे मत्तोऽन्यं सुखाय न ददृशुः कुतः वियोगेन तीव्रा दुःसह आधियासां ताः अत्र हेतुः मय्येव गाढेनातिदृढेन भावेन प्रेम्णाऽनुरक्तानि संसक्तानि चित्तानि यासां ताः ॥ १० ॥

तीव्राधित्वं व्यनक्ति । तास्ता इति । मया सह या एव क्षपा रात्रयः क्षणार्धवन्नीतास्ता एव पुनर्मया हीनास्तासां कल्पसमा बभूवुः कथम्भूताः तास्ताः वाचामगोचरा इत्यर्थः ॥११॥

किञ्च एवं तीव्राधयस्ता मोहमिवेण समाधिं प्राप्ता इत्याह । ता इति । मय्यनुषङ्गेणाऽऽसक्त्या बद्धा धियो याभिस्ताः स्वमात्मानं स्वदेहमदो दूरस्थमिदं सन्निहितं च नाविदन् यद्वा स्वं पतिपुत्रादि ममतास्पदम् आत्मानमहङ्कारास्पदं देहम् अदः परं लोकमिदमिमं लोकं च नाविदन्निति । यथा मुनयः समाधौ नामरूपे न विदुस्तद्वत् किन्त्वब्धितोये नद्य इव मयि प्रविष्टा इत्यन्वयः ॥ १२ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

अत्र च गोप्यादिप्रकरणे ॥ ९ ॥

मयि वियोगे प्रेमोद्रेकं प्रणीते सति मथुरां प्रति प्रापिते

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

सति मत्तोऽन्यं निजसख्यादिकमपि सुखाय न ददृशुः प्रियसखीमात्रापि जाळायते इत्याद्युक्तेः किन्त्वतीतनिर्देशेनाधुना तु सुखाय पश्यन्तीति वियोगो नास्तीत्यर्थः । अत्र वियोगतीव्राधित्वे ॥ १० ॥

तास्ता इति तच्छब्दयोरनुभूतार्थगोचरत्वाद्यच्छब्दानपेक्षत्वम् अतएव वाचामगोचरा इति व्याख्यातम् ॥ ११ ॥

मोहमिषेणाश्यपन्हुत्याऽप्रकटलीलाभिनिवेशेन प्रकटलीलाऽननुसन्धानलक्षणमोहस्य वास्तवत्वमभिव्यज्यते समाधेस्तूपमानमात्रत्वं स्तनापदेशं फलयुगममेव धत्ते मृदुः काञ्चनवल्लरीवेतिवत् प्रकृतं यन्निविध्यान्वत् व्याप्यते सा स्वपर्यालाचरिति तल्लक्षणात् पूर्वार्धे दूरस्थसन्निहितयोर्विशेषस्यासम्बन्धत्वाज्ज्ञेयत्वानहत्वाच्च यद्वेति पतिपुत्राद्यज्ञाने दृष्टान्तो यथा मुनय इति भगवन्मात्राभिनिवेशे दृष्टान्तः अब्धितोये नद्य इवेति ॥ १२ ॥

---

### भागुरदर्शनसूरिकृतशुकपक्षीयम् ।

यमिति यच्छब्दो भगवत्परः ॥ ९ ॥

श्वाफल्किना अक्रूरेण ॥ १०—११ ॥

तथेदमिति शरीरमुच्यते नद्यः प्रविष्टा इवेति नदीनां नामरूपावेदनमचेतनत्वादपि गोपीनां तु भगवद्ध्यानपारवश्यादिति वैषम्यम् ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मामिति विवक्षितमात्मानं विशिनष्टि । यमिति । योगादिभिः कृतप्रयत्नोऽपि यं न प्राप्नुयात्तं दुर्लभं मामापुरिति सम्बन्धः व्रतान्येकादश्युपवासादीनि तपः कृच्छ्रचान्द्रायणादिरूपं व्याख्या शास्त्राध्यापनं स्वाध्यायोऽध्ययनं सन्न्यासस्तुर्याश्रमपरिग्रह इति ॥ ९ ॥ केवलेन हि भावेनेति विवक्षितं गोपीनां भावं प्रपञ्चयति । रामेणेति चतुर्भिः । श्वाफल्किनाऽक्रूरेण मयि रामेण बलभद्रेण सार्धं सह मथुरां प्रणीते प्रापिते सति मत्तोऽन्यं सुखाय न ददृशुः कुतः वियोगेन तीव्रा दुःसहः आधिर्यासां ताः तत्र हेतुः मयि विगाढेनातिदृढेन भावेन प्रेम्णाऽनुरक्तानि संसक्तानि चित्तानि यासां ताः ॥ १० ॥

तीव्राधित्वं व्यनक्ति । तास्ता इति । या या इति पाठान्तरम् अङ्ग हे उद्धव ! वृन्दावनगोचरेण प्रियतमेन च मया सह याः याः क्षपाः रात्रयः क्षणार्धवन्नीताः यापिताः तास्ता एव पुनर्मया हीनाः तासां गोपीनां कल्पसमा बभूवुः ॥ ११ ॥

किञ्चैवं तीव्राधयो मोहव्याजेन समाधिङ्गताः किञ्चिदपि न विदुरित्याह । ता इति । मत्पदनुषङ्गेणासक्त्या बद्धा धियो मतयो याभिस्ताः गोप्यः स्वमात्मानं स्वदेहमदो दूरस्थम् इदं सन्निहितं च नाविदन् यथा मुनयः समाधौ स्वात्मानं न विदुर्यथा वाब्धितोये प्रविष्टा नद्यः स्वनामरूपे न विदुः तद्वन्नदीनां नामरूपावेदनमचेतनत्वाद्गोपीनां तु भगवद्ध्यानपारवश्यादिति वैषम्यम् ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्तिरहितं ज्ञानमपि न मत्प्रापकं किमुतान्यत्साधनजातमिति भावेनाह । यमिति । यं मां सत्सङ्गयत्नेनापि—

हरिसङ्गविहीनस्तु हरेर्दर्शनवानपि ।
न मुच्यतेऽखिलज्ञोऽपि तमो याति विनिश्चयात् ॥
गुणैरन्यैर्विहीनस्तु तद्भक्तस्यापि चाक्रमात् ।
सङ्गवान्सुखमागत्य क्रमाद्योगी मुक्तिमेति वा ॥
अभक्तसङ्गहीनस्य व्युत्क्रमात्सङ्गिनोऽपि वा ।
असङ्गविघ्नकृद्विष्णुस्तत्सङ्गेऽस्तु तत्र चेति ॥

अनेन भगवद्भक्तस्तद्भक्तभक्तेरन्वयव्यतिरेकौ दर्शिताविति ध्वनितमित्यनेन श्लोकेन ज्ञायते—

गोपिकाद्या दिवं गत्वा हरिं ज्ञात्वा यथातथम् ।
परस्परं वयः पूर्वसङ्गादेव सुमोचिता इति

वचनाद्भक्तिजनितज्ञानेन मुक्तिमाप्नोति न केवलज्ञानेनेत्यभिप्रायेण न सांख्येनेत्युक्तम् उपलक्षणमेतत् दानादिष्वप्यनुसन्धेयमेतत्—

श्रोतव्यं च श्रुतश्चेन्न वक्तव्यं कार्यमेव च ।
नित्यश्च हरेः पूजेत्येवं कुर्यात्र चाक्रमात् ॥
एवङ्कर्ता तु संन्यासी सर्वोत्तमगोचरो स्मृतः ।
अन्यथा नैव संन्यासी निष्क्रियोऽपि शिखा यथेत्येवं

वचनात् संन्यासी न तु शिखात्यागमात्रेणेत्यभिप्रेत्य वेणुमात्रभृत्संन्यासी न मामाप्नोतीति किञ्च—

नाहं कर्ता तु सर्वस्य कर्तैको विष्णुरव्ययः ।
इति विरक्त्या तु संन्यासी नान्यथा तु कथञ्चन ॥
मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वर इति

लक्षणान्तरत्वानेन सन्यासी न रक्तपटधारीत्यर्थः ॥ ९ ॥

गोपीनामपि भक्तिरपरोक्षज्ञानान्तरङ्गा न तु रतिनिमित्तेति प्रकटयितुं वक्ति । रामेणेति । ता गोप्यो मत्तोऽन्यद्वस्तु सुखाय न ददृशुरित्यन्वयः ॥ १० ॥

अत्र हेतुमाह । यासामिति ताः क्षपाः ॥ ११ ॥

स्वमात्मानं स्वस्वरूपम् अदः स्वर्गमिदं जगत् तत्र दृष्टान्तमाह । यथेति । समाधौ मुनयो नामरूपं यथा न विदन्ति अब्धितोये प्रविष्टा नद्यश्च अनेन भक्त्यतिशयो दर्शित इति ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तामेव व्यनक्ति । यमिति । यं भावम् अत्रापि योगादयो भगवत्परा एव योगादिभिर्यत्नवानपीत्यनेन तत्प्राप्त्यर्थप्रयुज्यमानत्वावगमात् ॥ ९ ॥

अथ साधकचरीणां गोपीनां प्रथमतत्प्राप्तिगतत्वेन नित्यप्रेयसीनामपि तन्महाविप्रयोगान्तरप्राप्ति तस्य वियोगस्यातीतत्वनिर्देशाद्दर्शयति द्वाभ्याम् । विगाढभावेन तीव्राधयः सत्यो मत्तोऽन्यं निजसख्यादिकमपि न सुखाय ददृशुः प्रियसखीमात्रापि जाळायते

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इतिवत् ततश्चाधुना तु सुखाय पश्यन्तीति वियोगो नास्ती-त्यर्थः ॥ १० ॥

एवं तास्ताः क्षपा मया हीनाः सत्यस्तासां कल्पसमा बभूवुः अधुना तु तादृश्यो न भवन्तीति नास्त्येव वियोग इत्यर्थः । पूर्वं तत्तत्कैवाख्य प्रति मयि ताः प्रेयसां प्रेष्ठ इत्यादौ वर्त्तमान-प्रयोगाः कृता इति सोऽयमर्थः स्पष्ट एव प्रतिपत्तव्यः ॥ ११ ॥

ततश्च प्रकटाप्रकटलीलयोः पृथक्प्रतिपत्त्यैवाप्रकटभाव-मापद्य स्वनामरूपयोरेव ताः स्थिता इत्याह । तास्तथाभूतविर-हाश्चयठातिशयेनाभिव्यक्तदुर्द्धरमहाभावाः सत्यः अथागामित्यत्य-द्दीर्घेण कालेनेत्यादिमत्युक्तानुसारेण यद्दीनुजालक्षापसमार मो मत्वानिस्वाविद्वारकानासिप्रजावचनानुसारेण च कदाचित्तासां दर्शनार्थं गते मयि स्वको योऽनुषङ्गो महामोदन भावाभिव्यक्ति-कारी पुनः संयोगस्तेन बद्धा धीयांसां तथा भूताः सत्यः स्वं ममतास्पदम् आत्मानमहंकारास्पदम् अदः अप्रकटलीलानुगतत्वेना-भिमतं वा तथा इदं प्रकटलीलानुगतत्वेनाभिमतं वा यथा स्यात्तथा तदानीं नाविदन् किंतु द्वयोरैक्येनाविदुरित्यर्थः । प्रकटाप्रकट-तयाभिन्नं प्रकाशद्वयमभिमानद्वयं लीलाद्वयं चाभेदेनैवाजा-नन्निति विवक्षितं ततश्च नाम च रूपं चेति समाहारद्वन्द्वेन नामरूपात्मनि अप्रकटप्रकाशविशेषे प्रविष्टा इव न तु प्रविष्टाः वस्तुभेदादित्यर्थः । तत्राहंकारास्पदं प्रविष्टा इवेति वस्त्वभे-देन योजयति यथा समाधौ समाध्युपाधौ तुरीयाख्यात्मनि मुनयो जाग्रदाद्युपाधितया विश्वतैजसप्राज्ञाख्या मुनीनामात्मानः प्रविष्टा इव किन्तु तेषां तुरीयं त्रिषु सन्ततमिति न्यायेनो-पाधिनैव तुरीयाद्भिन्नतया ख्यातानां तदुपाधिपरित्याग एव प्रवेशतयोपचर्यते तथा तासां सत्प्राप्त्यन्तरायतत्परित्याग एव प्रवेशतयोपचर्यत इत्यर्थः । अथ ममतास्पदे प्रविष्टा इवेत्यपि समग्रांशाप्रवेशेन योजयति । यथाब्धितोये नद्यः प्रविष्टा इव भवन्ति पृथिव्यामविच्छेदात् तद्वत्तयोः प्रकाशयोर्मिथो विच्छे-दाज्ञानात् प्रविष्टा इवेति ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

केवलस्य भक्तियोगस्य सत्सङ्ग एव हेतुर्नतु सुकृतान्तरं किमपीत्याह । यमिति । यत्नवतापि योगादीनां सम्यगनुष्ठानतत्-तोऽपि ॥ ९ ॥

तत्रापि गोपीनां भावस्य सर्वोपरि विराजमानत्वमाह । रामेणेति चतुर्भिः । दूताफल्किना अक्रूरेण मयि मथुरां प्रकर्षेण नीते सति मे मत्तोऽन्यं सुखाय न ददृशुः यतोऽनुरक्तचित्ताः प्रेम्णः षष्ठी भूमिका या ऽनुरागस्तन्मयीभूतानि चित्तानि यासां ताः तत्रापि विशिष्टा गाढो भावः अनुरागोत्तरभूमिकागतो महाभावभेदो रूढाभिधस्तेन हेतुना वियोगे सति तीव्रा आधिर्यासां ताः अत्र ददृशुरिति भूतनि-र्देशादधुना तु दन्तवक्रवधान्ते मया सह संयुक्ता एव वर्त्तन्त इति द्योतितम् ॥ १० ॥

कल्पस्य क्षणता योगे वियोगे तद्विपर्य्यय इति प्रेम्णः सप्तम्या भूमिकाया महाभावभेदस्य रूढभावस्य लक्षणं सर्वतो विलक्षणं दर्शयति । तास्ता इति । मया सह रासक्षपा ब्रह्मरात्रि-परिमिता अपि क्षणार्द्धवत् यामिनीताः । तासां मया वृन्दाव-नगोचरेण वृन्दावनस्थेन अथ च वृन्दावने गोभिः सह चरता हीनास्ताः क्षपाः प्रहरचतुष्टयपरिमिता अपि यापयितुमश-क्यत्वात् कल्पैर्बहुभिः समाः ॥ ११ ॥

मोहाख्यभावेऽपि सर्वविस्मरणमिति विगाढभावस्यापरमव्य-नुभावमुज्ज्वलनीलमणयुक्तं दर्शयति । मयि अनुषङ्गेण नितरां सङ्गेन बद्धा धियो याभिस्ताः । अत्र बद्धपदेन कृष्णस्य त्रिजगन्मो-हनविचित्रलीलस्तम्भत्वम् अनुषङ्गस्य बलवत्त्वं धीवृत्तीनां कृष्णवाडिज्ञत्वसम्पादककामधेनुघटात्वमारोपितं स्वमात्मानं देहं न विदुः रासाभिसारादौ क्व स्थितं क्व वा यान्तमिति नानुसन्दधुः तथा अदः परलोकं धर्मातिक्रमादिति भावः । इदमिमं लोकं लज्जाभयाद्यतिक्रमादिति भावः । समाधौ मुनय इति । तेषां यथा सर्वविस्मरणं ब्रह्मानुभवोऽभिव्यज्यते तथैतासां मदनुभव इति सर्वविस्मरणांशे दृष्टान्तः न तु प्राप्त्यंशे गोपीप्राप्यप्रेममुनिप्रा-प्यनिर्माणयोरहो महदेवान्तरं यस्मान्ममतामास्ते तयोः तथाहि सर्वसन्तापनिवर्त्तकात् परमाह्लादकात् दृश्यमानात् चन्द्रा-दपि सकाशात् सर्वगुणहीनोऽपि दृश्यमानः पतिपुत्रादिको यत् सुखमधिकं दत्ते तत्र ममतैव यदि कारणं तदा किं पुनः सर्व-गुणमण्डिते स्वभावादेव निरवधिकसुखप्रदे श्रीकृष्णे परब्रह्मणि निरवधिकैव ममता सुखाधिक्ये कारणं भक्तानामिति अत एवोक्तम्

> ब्रह्मानन्दो भवेदेष चेत्परार्द्धगुणीकृतः ।
> नैति भक्तिसुखाम्भोधेः परमाणुतुलामपीति ॥

ब्रह्म च भक्तेष्वासक्तं तद्वयं च मुनिषु नैवासक्तं न तद्द्वयं चेति नद्यो यथाब्धितोये प्रविष्टा नामरूपे स्वीये न विदुरिति रसचर्वणांशे दृष्टान्तः ॥ १२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यं माम् ॥ ९ ॥

गोपीनां भावं प्रपञ्चयति । रामेणेति चतुर्भिः । विगाढभावेन दृढप्रेम्णा अनुरक्तं चित्तं यासां ताः वियोगेन तीव्रो दुःसहः आधिर्यासां ताः मे मत्तोऽन्यं सुखाय न ददृशुः ॥ १० ॥

मया सह तास्ताः प्रसिद्धाः क्षपाः क्षणार्द्धवन्नीताः मया हीनाः पुनस्तास्तासां कल्पसमा बभूवुः ॥ ११ ॥

किञ्च ताः मयि अनुषङ्गेण आसक्त्या बद्धा धियो याभिस्ताः अत एव अब्धितोये नद्य इव मयि प्रविष्टाः स्वमात्मानं देहमिदं च लोकमदः परं च लोकं नाविन्दन् यथा समाधौ मुनयो न विदुस्तद्वत् ॥ १२ ॥

---

### भाषा टीका ।

योग से सांख्य से दानों से तप से यज्ञों से व्याख्यानों से स्वाध्याय से सन्यास से बड़े यत्नकरने वाला भी जिस मेरे को नहीं प्राप्त होसकता है तिस मेरे को गोपिका-दिक केवल भाव से प्राप्त होगये ॥ ९ ॥

मत्कामा रमणं जारमस्वरूपविदोऽबलाः ।
ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः ॥ १३ ॥
तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ।
प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च ॥ १४ ॥
मामेकमेव शरणमात्मानं सर्वदेहिनाम् ।
याहि सर्वात्मभावेन मया स्या ह्यकुतोभयः ॥ १५ ॥

उद्धव उवाच ।

संशयः शृण्वतो वाचं तव योगेश्वरेश्वर ! ।
न निवर्तत आत्मस्थो येन भ्राम्यति मे मनः ॥ १६ ॥

भाषा टीका ।

जिस समय अक्रूरजी हमको बलदेवजी के सहित मथुरा को लेगये तब गोपियोंने मेरे में चित्त के अनुराग होने से अतिगाढ प्रेम के वश होने से मेरे वियोग होने में तीव्र वेदना के होजाने से मेरे विना और किसी वस्तु को सुख दायक नहीं समुझा ॥ १० ॥

हे उद्धवजी ! मेरे साथ वृन्दावन में विचरने में प्रिय मेरे संग होनेसे उन बडी रातों को गोपियों ने क्षणमात्र के तुल्य मान लिया था फिर मेरे विना होने से वेही रातें कल्प सरी की गोपिकाओं को हो गईं ॥ ११ ॥

मेरे विषय में मन के अत्यन्त लगजाने से उन गोपियों ने न अपने शरीर का खयाल किया न पराये का जैसे कि मुनि जन समाधि में सब भूलजाते हैं और जैसे सब नदी समुद्र में मिलजाने से अपने नाम रूप दोनों को छोडदेती हैं तैसे ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं ता अबलाः केवलं मत्कामा अस्वरूपविदः स्वरूपं तु न जानन्ति तथाऽपि सत्सङ्गाज्जारं ब्रह्म जारबुद्धिविषयमपि ब्रह्मस्वरूपमेव मां परमं प्रापुरित्यर्थः ॥ १३ ॥

यस्मादेवं भूतो मद्भजनप्रभावस्तस्मात्त्वं चोदनां श्रुतिं च प्रतिचोदनां स्मृतिं च यद्वा विधिं च निषेधं चोत्सृज्य मां शरणं याहि ॥ १४ ॥

मयैवाकुतोभयः स्याः भव ॥ १५ ॥

पूर्वं तावत्स्वधर्मादिनिष्ठावान् स्वधर्मानुष्ठानादिना कर्म कर्तव्यमित्युक्तमिदानीं तु सर्वं त्यक्त्वा मां शरणं याहीत्युच्यते तत्र किमात्मनः कर्तृत्वाद्यस्ति नास्ति वेत्यात्मनो आत्मविषयः संशयो न निवर्तते यद्वा कर्म कार्यं त्याज्यं वेत्यात्मनो हृदिस्थः संशयो न निवर्तत इति पृच्छति । संशय इति । येन संशयेन ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

स्वरूपं परमेश्वरत्वलक्षणं सत्सङ्गादित्यभिज्ञानां गोपीनां सङ्गात् जारबुद्धिविषयमपीति अपि नाप्राकृते तद्बुद्धेरभावात्वेऽपि श्रीकृष्णे तु अचिन्त्यशक्तिभूषणत्वादिति व्याख्यातं परमं प्रापुरिति प्राप्तौ परमत्वस्य वैशिष्ट्यात्मकस्य विधेयत्वात् तदुक्तमभियुक्तैः "नेष्टा यदङ्गिनि रसे कविभिः परोढा तद्गोकुलाम्बुजदृशां कुलमन्तरेण । आशंसया रसविधेरवतारितानां कंसारिणा रसिकमण्डलशेखरेणेति" । तदेवाह रमणं रतिक्रीडासुखद मां श्रीकृष्णमेवेति तस्य ब्रह्मणो निराकारत्वं प्रत्याख्यातम् ॥ १३ ॥

पूर्वार्धे चोदनाशब्दस्य विधिरूपवेदैकदेशपरत्वेऽपि प्रतिचोदनाशब्दस्य स्मृतिपरत्वं न कुत्रापि प्रसिद्धमतो यद्वेति चोदनाशब्दस्य प्रवर्तनार्थत्वात्तद्विरोधिनिवर्तनार्थस्य प्रतिचोदनाशब्दस्य प्रत्याख्यानवत् तथाच प्रतिचोदनाशब्दस्य निषेधशब्दलक्षणाद्ग्रहणं प्रत्याख्यानवत् तथा व्याख्यानं प्रवृत्तं दक्षिणमार्गं निवृत्तमार्गं मुख्य एवेति तथा व्याख्यातं प्रवृत्तेन निवृत्तेनाऽऽनुते स्मृतमित्युक्तः अयं मुत्तरमार्गमावर्तेत प्रवृत्तेन निवृत्तेनाऽऽनुतेऽमृतमित्युक्तेः श्रोतव्यः अयं च श्रुतत्वादनुप्रेक्ष्य इत्युपायभावनोपासनादिभेदा श्रोतव्यः स्थितौ च स्मृतत्वादनुपायत्वात् कथञ्चन अवमन्तव्यः त्यक्त्वा शुद्धभक्तस्य द्वयोरप्यनुपायत्वात् कथम् मामेव शरणं याहीति पूर्वं प्रतिपादिता सत्सङ्गादिलक्षणा भक्तिरेव दृढीकृता सर्वात्मभावेनेति सर्वाभिमानमपि त्याजितं तच्च तत्परित्यागे किमपि दूषणमित्याह मयेति ॥ १४ ॥ १५ ॥

अत्र विप्रतिपत्तौ पूर्वार्धे मीमांसकमतप्रत्याख्यानपूर्वकं कर्तृत्वाद्यभावः विलक्षणः स्थूलसूक्ष्मादेहादात्माभिन्ना स्वहानिरस्वादिप्रघट्टकेन पूर्वमेवोपपादित इति तद्विषयकप्रश्नो विरुद्धयोर्वक्त्रस्य न युक्त इत्यतो यद्वेति तथाचैकान्तभक्तेन कर्म कर्तव्यं वा त्याज्यमिति प्रश्नस्य पूर्वमकृतत्वादपूर्वत्वमिति ज्ञेयम् ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अतः जारं चोरमत्तारम् अतः परमं गुह्यमित्यर्थः ॥ १३ ॥
तस्मान्मत्समाश्रयणस्य मोक्षहेतुत्वात् प्रतिचोदनां निषेधं

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्त्यानुसारिवेदार्थं ज्ञात्वा तदनुसारतः ।
भगवद्गुणोपवर्णयन्ते ते प्रोक्ता ज्ञानयोगिनः ॥
कर्माणि शास्त्रतो ज्ञात्वा तत्प्राधान्यानुसारतः ।
विज्ञातैर्गुणैर्विष्णोर्येऽचन्ते कर्मयोगिनः ॥
भक्तिज्ञानं च किञ्चित्तु पश्चात्तेष्वपि जायते ।
तथापि कर्मयोगास्ते कर्मपूर्वत्वकारणात् ॥
भगवद्गुणानुरागित्वमधिकं भक्तियोगिनाम् ।
तस्मात्तेऽप्यधिका ह्येषु देवा एव विशेषतः ॥
ईषद्वैराग्यमल्पं तु पूर्वं देवेषु जायते ।
पश्चाद्विरागोऽप्यधिको देवानां नात्र संशयः ॥
ज्ञानाधिक्यं तु देवानां भक्त्याधिक्यं तथैव च ।
विरागोऽप्यधिकस्तेषां सदैव सनकादिनाम् ॥
ज्ञानाधिक्यान्मनुष्येभ्यो भण्यन्ते ज्ञानयोगिनः ।
नतु ज्ञानादिकाख्ते वै देवेष्वस्तु कथञ्चन ॥
देवानामपि कर्मित्वं विद्यते यद्यपि स्फुटम् ॥
तथापि प्रत्यवायित्वान्मनुष्याः कर्मयोगिनः ।
त्रियोऽगाध्यधिको ब्रह्मा सर्वेभ्यः परमो विभुः ॥
महायोगेश्वरेशत्वात्तस्माद्ब्रह्मा चतुर्मुखः ।
इतिवचनात् समस्तम् युक्तम् ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गुणदोषेति । तैः तत्र तस्मिन्निति पूर्वोक्तपुण्यपापाभिव्यर्थः यस्मादिति यदि खलु स्वतः कदाचित् तर्केणापि निवर्त्तेत न तु तथा वेदेनैव आतत्वात्तदर्थप्राप्तत्वेनैव निवर्त्तेत तदेवं हि स्फुटं योऽयं भ्रमो भवति स यस्मात्तदर्थप्राप्तत्वेनैव निवर्त्तेत तस्माद्वेदवाचा त्वमेव तं भ्रमं निवर्त्तयेत्यर्थः ॥ ५ ॥

टीकायां विषयाभेदेऽपि पूर्वोक्तपुण्यपापादिरूपाणामभेदेऽपीत्यर्थः । अधिकारिभेदेनेति कर्मादिसाधकान् प्रति बहवो गुणदोषा वर्णिताः परमसिद्धान् प्रति गुणदोषद्वयेऽपि इत्यनेनैक एवेति भावः । यद्वा भक्तिज्ञानाद्युपाया एव भक्तेः सर्वोर्ध्वभूमिकावस्थितत्वम् अधिकारिविशेषनिष्ठत्वं च दर्शयितुं प्रक्रियान्तरं तत्र परमस्वरूपस्य वैमुख्यपरिहाराय यथाकथंचित्सांमुख्यमात्रं कर्त्तव्यत्वेन कल्पते तत्र त्रिधा निर्विशेषरूपस्य तदीयब्रह्माविर्भावस्य ज्ञानरूपं सविशेषरूपस्य च तदीयभगवदाविर्भावस्य भक्तिरूपमिति द्वयं तृतीयञ्च तस्य द्वयस्यैव द्वारं कर्मार्पणरूपमिति तदेतत् त्रयं पुरुषयोग्यताभेदेन व्यवस्थापयितुं लोके सामान्यतो ज्ञानकर्मभक्तीनामेवोपायत्वं नान्येषामित्यनुवदति योगास्त्रय इति । योगा उपायाः मया शास्त्रयोनिना श्रेयांसि मुक्तित्रिवर्गप्रेमाणि अनेन भक्तेः कर्मत्वं व्यावृत्तम् ॥ ६ ॥

तेष्वधिकार हेतूनाह द्वाभ्याम । इह एषां मध्ये निर्विण्णानां ऐहिक पारलौकिकविषयप्रतिष्ठासुखेषु विरक्तचित्तानाम् अत एव तत्साधनलौकिकवैदिककर्मसंन्यासिनां तानि त्यक्तवतामित्यर्थः वक्ष्यते स्वजातशुश्रूषाणामभिप्रेतं तेषां ज्ञानयोगः सिद्धिदः कामिनां तदसन्तोषेषु अनिर्विण्णानाम् अत एव तेषु तत्साधनभूतेषु कर्मसु अनिर्विण्णचित्तानां तानि अत्यक्तवतां कर्मयोगः सिद्धिदस्तत्तद्रूपानुरूपफलदः ॥ ७ ॥

अथ "ते वै विदन्त्यतितरन्ति च देवमायाम्" इत्यादौ तिर्यग्जनानामपि श्रवणेन भक्त्यधिकारे कर्मादिवज्जात्याद्यनियमातिक्रमात् श्रद्धामात्रं हेतुरित्याह । यदृच्छयेति । यदृच्छया केनापि परमस्वतन्त्रभगवद्भक्तसङ्गतत्कृपाजातमङ्गलोदयेन तदुक्तं शुश्रूषोः श्रद्दधानस्येत्यादि ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

परं त्विदानीमुभयसङ्कटमुपस्थितमित्याह । गुणेति । निगमात्मकाज्ञारूपाद्वेदादेव विधिनिषेधात्मकाद्गुणदोषभेददृष्टिर्विहिताऽभूत् निगमेनात्मना त्वदाज्ञयाभिहितया गुणदोषभेददृष्टेरपवादश्चेति (इ)त्यस्यार्थमभिप्रायमज्ञयानामस्माकमयं भ्रमोऽभूत् तं त्वमेव निवर्त्तयेति भावः ॥ ५ ॥

अधिकारिभेदेनावस्थाभेदेन च गुणदोषभेददृष्टेर्विहितत्वं निषिद्धत्वं च यथायोगं भवेदिति तज्ज्ञापयितुमाह । योगा उपायाः ब्रह्मकर्मदेवताकाण्डैः प्रोक्ताः श्रेयांसि मोक्षत्रिवर्गप्रेमाणि तेषां विधित्सयेति मे सर्वत्र कृपैवेति भावः । नान्यम् एतत्त्रयं विना कुत्रचित्तपोयागादिकस्तपोऽष्टाङ्गयोगादेर्यथासम्भवं ज्ञानभक्त्योरेवान्तर्भावदर्शनादिति भावः । अथ इत्यनेन कर्मिभिः कर्मणा एव ज्ञानिभिर्ज्ञानेनैवोच्यमानं शुद्धभक्तित्वं पराहतम् ॥ ६ ॥

तत्र के कुत्राधिकारिण इत्यपेक्षायामाह । निर्विण्णानामिति द्वाभ्याम् । इह एषां मध्ये निर्विण्णानां विरक्तानां गृहकुटुम्बादिष्वनासक्तानामित्यर्थः । अत एव कर्मसु गृहाश्रमप्राप्तेषु न्यासिनां त्यागवतां ज्ञानयोगो भवेत् तेषु गृहाश्रमकर्मसु अनिर्विण्णचित्तानां अतः कामिनां कामो विषयासक्तिस्तदतिशयवतां अपि मत्वर्थीयः देहगेहकलत्रादिष्वासक्तिमतामित्यर्थः ॥ ७ ॥

यदृच्छया प्रथमस्कन्धव्याख्यानयुक्त्या यादृच्छिकमहत्सङ्गेन मत्कथादौ जातश्रद्धः इति अत एव श्रद्धामृतकथायां मे इति श्रद्धालुर्मे कथाः शृण्वन्निति तत्र तत्र भक्तियोगे कथाश्रद्धालुरेवाधिकारी दर्शितः अत्र तु निरोपक्रम इत्यस्य नातिसक्तः कर्मिभ्यः वैशिष्ट्यम् एकवचनेन निरुद्धप्रचारत्वं च ध्वनितं नातिसक्तः देहगेहकलत्रादिषु अत्यासक्तिरहितः अत्र निर्विण्णा इति तेषु निर्विण्णत्वे ज्ञानेऽधिकारः अत्यासक्तत्वे कर्मण्यधिकारः अत्यासक्तिराहित्ये भक्तावधिकार इत्यधिकारत्रयविवेकः निर्वेदस्य कारणं निष्कामकर्महेतुकान्तःकरणशुद्धिरेव अत्यासक्तेः कारणमनाद्यविद्येव अत्यासक्तिराहित्यस्य कारणं यादृच्छिकमहत्सङ्ग एवेति तत्र तत्र कारणं दृष्टं किन्त्वेतदुत्कृष्टाधिकारिण एव लक्षणं किन्तु "राजन्निन्द्रियवान्मुकुन्दचरणाम्बुजम् । न भजेत्सर्वतो मृत्युः" इत्युक्तेर्यादृच्छिकभक्तसङ्गे सतीन्द्रियवानेव भक्तावधिकारी ज्ञेयः ॥ ८ ॥

---

तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥ ९ ॥
स्वधर्मस्थो यजन् यज्ञैरनाशीः[1] काम उद्धव ! ।
न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत् ॥ १० ॥
अस्मिँल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः ।
ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ॥ ११ ॥
स्वर्गिणोऽप्येतमिच्छन्ति लोकं निरयिणस्तथा ।
साधकं ज्ञानभक्तिभ्यामुभयं तदसाधकम् ॥ १२ ॥
न नरः स्वर्गतिं काङ्क्षेन्नारकीं[2] वा विचक्षणः ।
नेमं लोकं च काङ्क्षेत देहावेशात्प्रमाद्यति ॥ १३ ॥
एतद्विद्वान् पुरा मृत्योरभवाय घटेत सः ।
अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिदम् ॥ १४ ॥
छिद्यमानं[3] यमैरेतैः कृतनीडं वनस्पतिम् ।
खगः [4]स्वकेतमुत्सृज्य क्षेमं याति ह्यलम्पटः ॥ १५ ॥
अहोरात्रैश्छिद्यमानं बुद्ध्वायुर्भयवेपथुः ।
मुक्तसङ्गः परं बुद्ध्वा निरीह उपशाम्यति ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ते निगमात् विधिनिषेधलक्षणादाज्ञारूपाद्वेदात् निगमेन गुणदोषदृष्टिर्दोष इति भगवदाज्ञारूपेण वेदेन अपवादश्च क्रियते अतः इह स्फुटं भ्रमः संशयः ॥ ५ ॥

मुमुक्षोरुत्तमभक्तियोगमारुरुक्षोः यावद्यथाधिकारस्तत्र निष्ठा गुणः अनधिकारे प्रवृत्तिर्दोषः ततः प्राप्तपरमभक्तियोगः सर्वत्र निरपेक्षः गुणदोषदृष्टिशून्यः दृढविश्वासेन मां स्मरन्मुच्यते इति वक्तुं योगानाह श्रीपुरुषोत्तमः । योगा इति । श्रेयोविधित्सया मोक्षसाधनेच्छया योगा उपायाः अन्यः काम्यकर्मादिरूपः ॥ ६ ॥

तत्तदधिकारिणो दर्शयति । निर्विण्णानामिति द्वाभ्याम् । इह एषां मध्ये परमात्मस्वरूपगुणादिश्रवणमननाद्यभिनिवेशेन कर्मसु निर्विण्णानां त्यक्ततदनुष्ठानाभिनिवेशानाम् न्यासिनां त्यक्तान्तःकरणममतानां यद्वा परमात्मनि अनुष्ठितं कर्मफलत्यागिनाम् ज्ञानयोगः सिद्धिद इत्यभिप्रेतोऽन्वयः । भगवत्स्वरूपादिश्रवणाद्यनुत्पन्नरुचित्वेन तेषु कर्मसु अनिर्विण्णचित्तानां यतो हृदयशुद्धिकामिनाम् कर्मयोगस्तु सिद्धिदः ॥ ७ ॥

यदृच्छया मत्कथादौ जातश्रद्धः भक्त्युपयोगिषु कर्मसु न निर्विण्णः तेषु भक्तिपरत्वान्नातिसक्तः यः पुमानस्य भक्तियोगः सिद्धिदः मत्प्राप्तिलक्षणमोक्षप्रद इत्यर्थः ॥ ८ ॥

भाषा टीका ।

गुण दोष की दृष्टि तो आप की आज्ञारूप शास्त्र से है स्वयं नहीं है फिर आप की आज्ञा से उस गुण दोष दृष्टि का निषेध भी करते हो तो मेरे को इस बात में भ्रम होता है ॥ ५ ॥

श्रीभगवान् उवाच सब मनुष्यों के कल्याण के विधान की इच्छा से मैंने ज्ञान कर्म भक्ति ऐसे तीन प्रकार के योग कहे हैं इन से और कोई उपाय नहीं है ॥ ६ ॥

जो लोग इस संसार में कर्मों से उदासीन हैं और त्यागि हैं तिन के लिये ज्ञानयोग है उन कर्मों में जिन का वैराग्य नहीं है और जो कामना वाले हैं तिन के वास्ते कर्म योग है ॥ ७ ॥

जो पुरुष न विरक्त है न आसक्त है परन्तु दैवयोग से मेरी कथादिक में जिस की श्रद्धा होगई है उस के वास्ते मेरा भक्तियोग सिद्धिदायक है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सावधि कर्मयोगमाह । तावदिति नवभिः । कर्माणि नित्यनैमित्तिकानि यावता यावत् ॥ ९ ॥

कर्मयोगिनो ज्ञानभक्तिभूमिकारोहप्रकारमाह । स्वधर्मस्थ इति ।

---

१ मांस २ कोति ३ कालावयवैः स्वदेह इति वि० पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इति । ज्ञानभक्तिभ्यां केवलमोक्षयोः साधकं प्राप्तिकरं नृदेहमेव तत्साधकत्वकीर्तनेन स्वर्गिनारकिदेहयोरसाधकत्वं सूचितं तत्स्पष्टमाह । उभयं तदसाधकमिति । उभयं स्वर्गिनारकिशरीरं शास्त्रस्य मनुष्याधिकारित्वात्तद्विहितस्यैव पुरुषार्थसाधनत्वादिति भावः ॥ १२ ॥

स्वर्गिणोऽपीच्छन्ति इत्यनेन स्वर्गिशरीरापेक्षयापि मनुष्यदेहस्योत्तमत्वं सूचितं तत्र हेतुतया निरतिशयपुरुषार्थसाधनत्वमुक्तम् अतो दृष्टादृष्टवैषयिकसुखसाधनतोपयुक्तं न कुर्यादित्याह । न नर इति । विचक्षणः कुशलः नारकीं गतिमिति दृष्टान्तार्थं यथा नारकीं गतिं न काङ्क्षेत्तथा स्वर्गगतिमपीत्यर्थः । गतिरुपायः पुनरिमं लोकं नृदेहं च दृष्टादृष्टसुखसाधनोपयुक्तं न काङ्क्षेदित्यर्थः काङ्क्षायामनर्थमाह । देहाभिनिवेशात्प्रमाद्यतीति । दृष्टादृष्टदेहसुखाभिनिवेशात्प्रमाद्यति प्रमादं प्राप्नोति प्रमादो मोहः अन्ततः स्वार्थहानिं प्राप्नोतीत्यर्थः ॥ १३ ॥

कथं पुरुषार्थसिद्धिरुच्यते इत्यत आकृत्यं परिहर्तुमाह । एतदिति । यो मृत्योः पुरा मरणात्पूर्वमेव शरीरदाढ्यावस्थायामेवेत्यर्थः । मर्त्यं मरणधर्मकमप्येतन्नरशरीरमर्थसिद्धिदं निरतिशयपुरुषार्थसिद्ध्युपयुक्तमितीदं ज्ञात्वा अप्रमत्तः सन्नहितचित्तो भवति स विज्ञानभवाय मोक्षाय घटेत यतेत अत उपयुक्तमेवेदं ज्ञानमिति तात्पर्यमुक्तमिति भावः ॥ १४ ॥

मृत्योः पुरैव यतेतेत्यत्रैव रूपकविशेषाभिप्रायेणाह । छिद्यमानमिति । यमैर्यमवाद्विरेतैः पुरुषैः कृतं नीडं कुलायं यस्मिंस्तथाभूतमपि । वनस्पतिं यमैश्छिद्यमानं ज्ञात्वा खगः पक्षी एतं स्वाश्रयं विहायालम्पटः अनासक्तः क्षेमं सुखं याति तथा कृतहृदाकृतनीडं वनस्पतितुल्यं शरीरं छिद्यमानं ज्ञात्वा पक्षितुल्यो जीवः निर्लम्पटो निष्कामः स्वकेतमुत्सृज्य नश्वरशरीरसम्बन्धनिवृत्त्युपाय ज्ञात्वा क्षेमं यातीत्यर्थः ॥ १५ ॥

एतदेव विवृणोति । अहोरात्रैरिति । अहोरात्रमात्रैः कालावयवैरायुः छिद्यमानं क्षीयमाणं ज्ञात्वा भयेन वेपथुः चलद्गात्रं यस्य सः मुक्तसङ्गः देहासक्तिरहितः निरीहः निर्व्यापारः वैषयिकसुखार्थव्यापाररहितः परं प्रकृतिपुरुषविलक्षणं मां ज्ञात्वा उपास्य उपशाम्यति प्रकृतिसम्बन्धान्निवृत्तो भवतीत्यर्थः ॥ १६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ज्ञानभक्तियोगिनामपि ज्ञानभक्त्युदयात्पूर्वं ज्ञानभक्तिसाधनत्वादन्तःकरणशुद्धिद्वारा कर्मयोगः कर्तव्यतामर्हतीत्याह । तावदिति । देवादिस्थयोग्यानां मनुष्याणामिदं ज्ञातव्यं यद्वा कर्मयोगिनमेव विधिनाष्टि । तावद्विति ॥ ९ ॥

कर्मणां बन्धकत्वेन ज्ञानभक्तिद्वारा श्रेयःकारणत्वं कथमित्याशङ्कां परिहरन् तत्करणप्रकारमाह । स्वधर्मस्थ इति । ज्ञानयोगिभिराशीर्भिर्निष्कामः अन्यानिषिद्धं न करोति चेत् ॥ १० ॥

विहितकर्मणा स्वर्गादिकमप्राप्यं चेत् । किं तर्हि लभ्यमत्राह । अस्मिन्निति । यावद्देहपाते समुत्पन्ने वा यथा ज्ञानमाप्नोति तथा भक्तियोगं यद्वा किञ्च कर्मयोगी च शुद्धज्ञानभक्ती ॥ ११ ॥

ज्ञानभक्तिसाधनत्वान्मनुष्यशरीरमुत्तममित्याह । स्वर्गिण इति । लोकं देहं निरयिणः नारकाः ज्ञानभक्तिभ्यां पुरुषार्थसाधकं तदुभयं स्वर्गनरकस्थशरीरं ज्ञानभक्त्योरसाधकं फलरूपत्वात्तस्मान्मानुषमुत्तममित्यर्थः ॥ १२ ॥

मुमुक्षुणा नरकस्वर्गमनुष्यगतयः सदुःखत्वात्प्रमादहेतुत्वाच्च नाकाङ्क्ष्या इत्याह । न नर इति । इमं मनुष्यलोकं देहमवेक्ष्यात्प्रमाद्यति । प्रमादवान्भवति ॥ १३ ॥

तन्नवस्तु निराकाङ्क्षस्यानुत्तरं कार्यं किमत्राह । एतदिति पुरोक्तप्रकारेण स्वर्गादीनां दुःखादिमत्त्वाद्विहाय इदं मनुष्यशरीरं मर्त्यमप्यर्थसिद्धिदं ज्ञात्वा मृत्योरभावाय संसारस्योन्मूलनाय घटेतेत्यन्वयः ॥ १४ ॥

किञ्चात इत्यत्राह । छिद्यमानमिति । यैरिन्द्रियैर्गच्छति जानाति । विषयानिति खगो जीवः कालावयवैस्त्रुटिलवादिलक्षणैश्छिद्यमानं स्वदेहमुत्सृज्य क्षेमं मोक्षं याति अलम्पटो विरक्तो ज्ञानसामग्रीमान् कथमिव खं गच्छतीति खगः पक्षी कलच्छेदन इति धातोः कालावयवैः परमभावादिनिशिताग्रैः छिद्यमानमात्मना कृतनीडं वनस्पतिं विहाय क्षेमं प्रासरस्थानमिव अलम्पट उत्पतनसमर्थः पटगनाविति धातुः ॥ १५ ॥

उक्तमेव विशदयति । अहोरात्रैरिति । परम्परमात्मानं संसारादुपशाम्यति परं दृष्टान्तमुपगम्य शाम्यति शान्तदुःखो भवति निरीहः निर्णीतहरिबोधः ॥ १६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तावदिति तैः । तत्र स्वरूपः यदृच्छया ज्ञानभक्त्यनुकूलः न किञ्चिदिति अनुपयोगान्तरायरूपत्वादेति भावः वाक्यार्थं तु तत्र तयोः कर्मजगुणदोषाभ्यां न गुणदोषत्वमिति भावः यद्वा नन्वेवं केवलानां कर्मज्ञानभक्तीनां व्यवस्थोक्ता नित्यनैमित्तिकं कर्म तु सर्वेष्वेवावश्यकं तर्हि साङ्कर्यं कथं शुद्धे ज्ञानभक्ती प्रवर्त्तयेतां तदेतदाशङ्क्य तयोः कर्माधिकारतां वारयति तावदिति । कर्माणि नित्यनैमित्तिकानीति टीका च अत एव "श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्त्तते । आज्ञाच्छेदी मम द्वेषी" मद्भक्तोऽपि न वैष्णवः" इत्युक्तदोषोऽप्यत्र नास्ति आज्ञाकरणात् प्रत्युत जातयोरपि निर्वेदश्रद्धयोस्तत्करणे एवाज्ञाभङ्गः स्यात् यथा च व्याख्यानमाज्ञावैवं गुणानूद्योऽनित्यस्य टीकायां भक्तिदार्ढ्येन निवृत्ताधिकारतया सन्त्यजेति निवृत्ताधिकारत्वं चांशकरमाजनेन देवर्षिभूताप्तनृणामित्यादिना नैषां न किङ्करः किन्तु श्रीभगवत एवेत्यनधिकारित्वम् अत्र कर्मपरित्यागहेतुत्वेनाभिधानाच्छ्रद्धाकरणापरत्वैकार्थ्यं लभ्यते तद्युक्तं श्रद्धा हि शास्त्रार्थविश्वासः शास्त्रं च तदशरणस्य भयं तच्छरणस्याभयं वदति ततो जातायाः श्रद्धायास्तच्छरणापत्तिरेव लिङ्गमिति अत्र विशेषजिज्ञासा चेद्भक्तिसन्दर्भो दृश्यः ॥ ९ ॥

तदेवं योगत्रयं तदधिकारहेतूक्त्वा कर्मणोऽपि यथा भगवत्साम्मुख्यरूपत्वं स्यात्तथाह । स्वधर्मस्थ इति । टीकायां स्वर्गमपीति पुण्यफलभोगस्थोपलक्षणमेतदम् अफलकामत्वं कर्मणोऽन्तराधानबुद्ध्याकुर्वाणत्वं तत्र ज्ञानिसङ्गे सति तन्मात्रत्वमेव भगवदर्पणं भवेत् भक्तसङ्गे तु तत्सन्तोषमयत्वम् ॥ १० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इति । ज्ञानभक्तिभ्यां केवल्यमोक्षयोः साधकं प्राप्तिकरं नृदेहमेव तत्साधकत्वकीर्तनेन स्वर्गिनारकिदेहयोरसाधकत्वं सूचितं तत्स्पष्टमाह । उभयं तदसाधकमिति । उभयं स्वर्गिनारकिशरीरं शास्त्रस्य मनुष्याधिकारित्वात्तद्विहितस्यैव पुरुषार्थसाधनत्वादिति भावः ॥ १२ ॥

स्वर्गिणोऽपीच्छन्ति इत्यनेन स्वर्गिशरीरापेक्षयापि मनुष्यदेहस्योत्तमत्वं सूचितं तत्र हेतुतया निरतिशयपुरुषार्थसाधनत्वमुक्तम् अतो दृष्टादृष्टवैषयिकसुखसाधनोपयुक्तं न कुर्यादित्याह । न नर इति । विचक्षणः कुशलः नारकीं गतिमिति दृष्टान्तार्थं यथा नारकीं गतिं न काङ्क्षेत्तथा स्वर्गगतिमपीत्यर्थः । गतिरुपायः पुनरिमं लोकं नृदेहं च दृष्टादृष्टसुखसाधनोपयुक्तं न काङ्क्षेदित्यर्थः काङ्क्षायामनर्थमाह । देहावेशात्प्रमाद्यतीति । दृष्टादृष्टदेहसुखाभिनिवेशात्प्रमाद्यति प्रमादं प्राप्नोति प्रमादो मोहः अन्ततः स्वापवर्तां प्राप्नोतीत्यर्थः ॥ १३ ॥

अन्यपुरुषमन्यादिवदुत्पन्ने इत्यनाकूत्यं परिहर्तुमाह । एतद्विद्वानिति । यो मृत्योः पुरा मरणात्पूर्वमेव शरीरदार्ढ्यावस्थायामेवेत्यर्थः । मर्त्यं मरणधर्मवत्त्वेन नश्वरशरीरमर्थसिद्धिदं निरतिशयपुरुषार्थसिद्ध्युपयुक्तमितीदं ज्ञात्वा अप्रमत्तः अवहितचित्तो भवति स निःश्रेयसाय मोक्षाय घटेत यतेत अत उपयुक्तमेवेदं ज्ञानमिति नानर्थकमुक्तमिति भावः ॥ १४ ॥

मृत्योः पुरैव यतेतेत्यनेन रूपकविशेषाभिप्रायेणाह । छिद्यमानमिति । यमैर्यमवर्तिभिः पुरुषैः कृतं नीडं कुलायं वासस्थानभूतमपि । वनस्पतिं यमैश्छिद्यमानं ज्ञात्वा खगः पक्षी तं स्वाश्रयं विहायालम्पटः अनासक्तः क्षेमं सुखं याति तथा कृतहृदाख्यनीडं वनस्पतितुल्यं शरीरं छिद्यमानं ज्ञात्वा पक्षितुल्यो जीवः निर्लम्पटो निष्कामः अनेनमुत्सृज्य नश्वरशरीरसम्बन्धनिवृत्त्युपाय ज्ञात्वा क्षेमं यातीत्यर्थः ॥ १५ ॥

एतदेव विवृणोति । अहोरात्रैरिति । अहोरात्ररूपैः कालावयवैरायुश्छिद्यमानं क्षीयमाणं ज्ञात्वा भयेन वेपथुः चलनं यस्य सः मुक्तसङ्गः दृढाभ्याससङ्गरहितः निरीहः निर्व्यापारः वैषयिकसुखार्थव्यापाररहितः परं प्रकृतिपुरुषविलक्षणं मां ज्ञात्वा उपास्य उपशाम्यति प्रकृतिसम्बन्धाद्विरतो भवतीत्यर्थः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ज्ञानभक्तियोगिनामपि ज्ञानभक्त्युदयात्पूर्वं ज्ञानभक्तिसाधनत्वादन्तःकरणशुद्धिद्वारा कर्मयोगः कर्तव्यतामर्हतीत्याह । तावदिति । देवादिस्वयोग्यानां मनुष्याणामिदं ज्ञातव्यं यद्वा कर्मयोगिनमेव विधिनाष्टि । तावद्विति ॥ ९ ॥

कर्मणां बन्धकत्वेन ज्ञानभक्तिद्वारा श्रेयःकारणत्वं कथमित्याशङ्कां परिहरन् तत्करणप्रकारमाह । स्वधर्मस्थ इति । ज्ञानयोगिभिराशीर्निष्कामः अन्यान्निषिद्धं न करोति चेत् ॥ १० ॥

विहितकर्मणा स्वर्गादिकमप्राप्यं चेत् । किं तर्हि तत्रमत्राह । अस्मिन्निति । यास्यन् उपशान्ते समुच्चयं वा यथा ज्ञानमाप्नोति तथा भक्तियोगं यद्वाकिञ्च कर्मयोगी च शुद्धज्ञानभक्ती ॥ ११ ॥

ज्ञानभक्तिसाधनत्वान्मनुष्यशरीरमुत्तममित्याह । स्वर्गिण इति । लोकं देहं निरयिणः नारकाः ज्ञानभक्तिभ्यां पुरुषार्थसाधकं तदुभयं स्वर्गनरकस्थशरीरं ज्ञानभक्त्योरसाधकं फलरूपत्वात्तस्मान्मानुषमुत्तममित्यर्थः ॥ १२ ॥

बुभुक्षुणा नरकस्वर्गमनुष्यगतयः सदुःखत्वात्प्रमादहेतुत्वाच्च नाकाङ्क्ष्या इत्याह । न नर इति । इमं मनुष्यलोकं देहावेशात्प्रमाद्यति । प्रमादवान्भवति ॥ १३ ॥

तन्त्वस्तु निराकाङ्क्षस्तदुत्तरं कार्यं किमत्राह । एवमिति । पुरोक्तप्रकारेण स्वर्गादीनां दुःखादिमत्त्वाद्विज्ञानिदं मनुष्यशरीरं मर्त्यमवर्णमित्थं ज्ञात्वा मृत्योरभावाय संसारस्योन्मूलनाय घटेतेत्यन्वयः ॥ १४ ॥

किञ्चान इत्यत्राह । छिद्यमानमिति । खैरिन्द्रियैर्गच्छति जानाति । विषयानिति खगो जीवः कलावयवैस्त्रुटिलवादिलक्षणैश्छिद्यमानं स्वदेहमुत्सृज्य क्षेमं मोक्षं याति अलम्पटो विरक्तो ज्ञानसामग्रीमान् कथमिव वेगच्छतीति खगः पक्षी कलच्छेदन इति धातोः कालावयवैः परश्वादिनिशितास्त्रैः छिद्यमानमात्मना कृतनीडं वनस्पतिं विहाय क्षेमं प्राप्तवानिव अलम्पट उत्पतनसमर्थः पटगतावीति धातुः ॥ १५ ॥

उक्तमेव विशदयति । अहोरात्रैरिति । परम्परमात्मानं संसारादुपशाम्यति परं वृक्षान्तरमुपगम्य शाम्यति शान्तदुःखो भवति निरीहः निर्गतहरिचेष्टः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तावदिति तैः । तत्र स्वल्पः यदृच्छया ज्ञानभक्त्यनुकूलः न किञ्चिदिति अनुपयोगान्तरायरूपस्थाने इति भावः वाक्यार्थे तु तयोर्ज्ञानयोः कर्मजगुणदोषाभ्यां न गुणदोषस्पर्शमिति भावः यद्वा नन्वेवं केवलानां कर्मज्ञानभक्तीनां व्यवस्थोक्ता नित्यनैमित्तिकं कर्म तु सर्वेष्वेवावश्यकं तर्हि सांकर्यं कथं शुद्धे ज्ञानभक्ती प्रवर्त्स्येते तदेतदाशङ्क्य तयोः कर्माधिकारितां वारयति तावदिति । कर्माणि नित्यनैमित्तिकानीति टीका च अत एव "श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते । आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न वैष्णवः" इत्युक्तदोषोऽप्यत्र नास्ति आज्ञाकरणात् प्रत्युत जातयोरपि निर्वेदश्रद्धयोस्तत्करणे एवाज्ञाभङ्गः स्यात् यथा च स्वाश्वानमाज्ञावैवं गुणानुरोधानित्यक्त टीकायां भक्तिहार्देन निवृत्ताधिकारतया सन्त्यज्येति निवृत्ताधिकारत्वं चोक्तं करभाजनेन देवर्षिभूताप्तनृणामित्यादिना तेषां न किङ्करः किन्तु श्रीभगवत एवेत्यनधिकारित्वम् अत्र कर्मपरित्यागहेतुत्वेनाभिधानाच्छ्रद्धायाः परत्वारेकाध्वं तत्तत्तदयुक्तं श्रद्धा हि शास्त्रार्थविश्वासः शास्त्रं च तच्छरणस्य भयं तच्छरणाद्भयं वदति ततो जातायाः श्रद्धायास्तच्छरणापत्तिरेव लिङ्गमिति अत्र विशेष जिज्ञासायाञ्च भक्तिसन्दर्भो दृश्यः ॥ ९ ॥

तदेवं योगत्रयं तदधिकारहेतूंश्चोक्त्वा कर्मणोऽपि यथा भगवत्साम्मुख्यरूपत्वं स्यात्तथाह । स्वधर्मस्थ इति । टीकायां स्वर्गमपीति पुण्यफलभोगस्योपलक्षणमेतदम् अफलकामत्वं कर्त्तव्याराधनबुद्ध्याकुर्वाणत्वं तत्र ज्ञानिसङ्गे तर्हि तत्कर्मात्मात्र एव भगवदर्पणं भवेत् भक्तसङ्गे तु तत्सन्तोषमात्रत्वम् ॥ १० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अतो यदृच्छयेति पूर्वमुक्तसत्कृतानुपालनयोः भागवं योजितं तदुक्तम् एतावानेव यजतामित्यादि ॥ ११ ॥

उभयं तत्साधकमिति स्वर्गिणो महाविषयावेशात्नारकिणो महापीडावेशात् नतु तयोः कर्मवदत्रार्थित्वकारत्वात् "तदुपर्यपि बादरायणः सम्भवात्" इति न्यायेन ॥ १२ ॥

तस्मात्प्राप्तेन नरदेहेन ज्ञानभक्ती एव साधयेन्न तु स्वर्गस्यादिकं काङ्क्षेदित्याह । न नर इति ॥ १३ ॥

अथ वैराग्यपूर्वकं विज्ञानमार्गं विवृणोति । एतादित्यादिना जातेस्यतः प्राक् ॥ १४—२२ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तदेवं जात्यैवात्यासक्तस्य जीवस्य कर्माधिकारः स्वाभाविक एव स च कियत्पर्यन्तस्तथा ज्ञानाधिकारो भक्त्यधिकारश्च कदा-क्रमादित्यपेक्षायामाह । तावदिति । कर्माणि नित्यनैमित्तिकानि तावता यावत् न निर्विद्येत कर्मणा वान्तःकरणशुद्धौ सत्यां यावन्निर्वेदो न जायत इत्यर्थः । निर्वेदे तु जाते निर्विण्णानां भावः तथा आकस्मिकसत्कृपाजनिता श्रद्धा यावद्वदिति ज्ञानयोग इति मदुक्तेर्ज्ञान एवाधिकारो न कर्मणीति श्रद्धातः पूर्वमेव कर्माधिकारः श्रद्धायां जातायान्तु जातश्रद्धस्तु यः पुमानिति मदुक्तेर्भक्तावेव केवलायामधिकारो न कर्मणीति भावः श्रद्धा चेयमास्तिक्यैक्यमेव ज्ञेया स च भगवत्कथा श्रवणादिभिरेव कृतार्थी भविष्यामि नतु कर्मज्ञानादिभिरिति दृढतराहितकथाश्रवणेव तादृशशुद्धभक्तसङ्गोत्थैव ज्ञेया अतएव

"श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते ।

आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न वैष्णवः ॥

इत्युक्तदोषोऽप्यत्र नास्ति आज्ञाकरणात् प्रत्युत जातायां श्रद्धायां तत्करणे आज्ञाभङ्गः प्रसज्जेदिति किञ्चप्राप्तमहत्कृपस्यादज्ञानतादृशशुद्धमपि नैष्फल्याश्रयोत्कर्षं दृष्ट्वैव तदुदेव कर्मत्यक्त्वा भगवन्तं भजन्तं जनमेव तद्दृष्ट्वा विश्वसीकरोतीति केचिदाहुरन्यत् श्रुतिस्मृती भक्तिप्रतिप्रतिपादिके एव नतु वर्णाश्रमधर्मप्रतिपादिके मयादिष्टानपि स्वकान् धर्मान् संत्यज्य यः सर्वान् मां भजेत्स च सत्तम इति भगवदुक्तिविरोधात् अनन्यभक्तानामस्माकं श्रुतिस्मृत्युक्तविदोभिर्निषेधाभ्यां न किमपि प्रयोजनमिति मत्वा यदेकादश्यादि-व्रतानामाचरणं ताम्रपात्रस्थदुग्धादेः कांस्यपात्रस्थनारिकेलोदकस्य च भगवतेऽर्पणं तस्य च भगवदर्पितस्य भक्षणमिति निषिद्धाचरणं च तदेव श्रुतिस्मृती ममैवाज्ञे इति भगवदुक्तिर्विषयीकरोतीत्याचक्षते न च इति निजवर्णाश्रमधर्मे इति न वदति न कल्पते इति तत्रार्थः अत्र प्राक्तनभक्तानामनन्यानामपि कर्मिकृतसङ्गनेत्वेनैव तदनुरोधवशात् यदीयत् कर्मकरणं तत्कर्माकरणमेव तत्र श्रद्धाराहित्यात्—

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत् ।

असदित्युच्यते पार्थ ! न च तत्प्रेत्य नेह च इति ।

भगवदुक्तेः ॥ ९ ॥

अत्यासक्तस्य कर्मिणः स्वर्गनरकगामिनः कदाचित्सम्भविनं निष्कामकर्मयोगमाह । स्वधर्मस्थ इति । अनाशीः कामः फलकामनारहितः अन्यत् निषिद्धम्, अतोऽयं स्वधर्मस्थत्वेन विहितानतिक्रमात् निषिद्धवर्जनाच्च नरकं न याति फलकामनाराहित्याच्च स्वर्गमपीत्यर्थः ॥ १० ॥

तर्हि कर्मी किं प्राप्नोत्यत आह—अस्मिन्नेव मर्त्यलोके स्थितः स्वधर्मस्थ इति निष्कामकर्मकरणात् अनघ इति निष्पापत्वाच्च शुचिः शुद्धान्तःकरणः सन् विशुद्धं ज्ञानमाप्नोति ज्ञानाभ्यासेन यदृच्छयेति यदि च यादृच्छिकशुद्धभक्तसङ्गवानस्तदा मद्भक्तिं च केवलां तया च प्रेमाणं प्राप्नोति यदि च कर्ममिश्रज्ञानमिश्रभक्तिमत्साधुसङ्गवानस्तदा ततः प्राप्तया कर्ममिश्रया ज्ञानमिश्रया च प्रधानीभूतया भक्त्या अन्ततः शान्तिरतिं प्राप्नोति ॥ ११ ॥

अतो मुक्तिप्रेमभक्तिसाधकं नरदेहं स्तौति—स्वर्गिण इति षड्भिः । ज्ञानभक्तिभ्यां ज्ञानभक्त्योः तदुभयं स्वर्गिनारकि शरीरम् ॥ १२ ॥

तस्मादुत्कृष्टां नरगतिं प्राप्य ततो निकृष्टां स्वर्गतिं नरकगतिं च कृताभ्यां पुण्यपापाभ्यां न कामयेतेत्याह । नेति । पापरहितां नृगतिमपि सुखेन निष्ठयामिति बुद्ध्या न कामयेतेत्याह नेमामिति । इमं नरलोकं यतो देहावेशात् देहासक्त्या स्वार्थे ज्ञाने भक्तौ वा प्रमाद्यति ॥ १३ ॥

परन्तु एतन्मर्त्यशरीरं साधकमिति विद्वान् जानन् मृत्योः पूर्वमेव अभवाय भवनिवृत्तये यतेत अप्रमत्तः अनलसः सन् अर्थसिद्धिप्रदत्वेनात् शरीरं मर्त्यं मरणधर्मकं ज्ञात्वा ॥ १४ ॥

देहावेशत्यागे दृष्टान्तमाह । यमैर्यमवत्प्रवर्तितैरेतैः पुरुषैश्छिद्यमानं वृक्षं नीडं यस्मिन्कृतं स्वकृतं स्वस्याश्रयं वात्सृज्य त्यक्त्वा अकल्पः अनासक्तः खगश्चतुरः पक्षी यथा याति ॥ १५ ॥

तथैव अहोरात्रैश्छिद्यमानमायुर्बुद्ध्वा निरीहः शान्तिं प्राप्नोति ॥ १६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कर्मयोगेन तु ज्ञानभक्तिलाभस्ततो मुक्तिरित्याह । तावदिति त्रिभिः ॥ ९ ॥

यदि अनाशीः कामः अनाशीः फलवासनारहितः कामः सङ्कल्पो यस्य सः स्वधर्मस्थः स्वोचितकर्मपरः यज्ञैः यथायोग्यैः यजन् स्वर्गं न याति यदि अन्यत् निषिद्धं न समाचरेत् अतो नरकं न याति ॥ १० ॥

किन्तु ज्ञानं विशुद्धं भक्तिश्चेत्स्फुरम् विशुद्धमिति पदं लिङ्गविपरिणामेन योज्यं विशुद्धां ज्ञानपूर्विकां मद्भक्तिं वाऽऽप्नोति ततो मुक्तो भवतीति भावः ॥ ११ ॥

उक्तयोगत्रयाधिकारित्वेन मोक्षसाधकं देहं स्तुवन्मुमुक्षोर्मुक्तिमाह । स्वर्गिण इति पञ्चभिः । एत लोकं नरदेहं ज्ञानभक्तिभ्यां साधकं मोक्षस्येति शेषः । तदुभयं स्वर्गिनारकिदेहद्वयम् ॥ १२ ॥

१ नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् ।
मयाऽनुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत् स २आत्महा ॥१७॥
यदारम्भेषु निर्विण्णो विरक्तः संयतेन्द्रियः ।
अभ्यासेनाऽऽत्मनो योगी धारयेदचलं मनः ॥ १८ ॥
धार्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम् ।
अतन्द्रितोऽनुरोधेन मार्गेणाऽऽत्मवशं नयेत् ॥ १९ ॥
मनोगतिं न विसृजेज्जितप्राणो जितेन्द्रियः ।
सत्त्वसम्पन्नया बुद्ध्या मन आत्मवशं नयेत् ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नरः दैवासुरदेहवान् स्वर्गतिं नारकीं गतिं वा न काङ्क्षेत इमं लोकं चापि न काङ्क्षेत पुण्यापुण्यमिश्रकर्माचरणेन स्वर्गनरकादिधारमात्मानं न पातयेदिति भावः । यतो विचक्षणोऽपि देहावेशात्प्रमाद्यति इदं हित्वा अनिष्टे निमज्जति ॥ १३ ॥

तर्हि किङ्कुर्यादित्यत आह । एतदिति । सः नरः विद्वान् सत्तर्हि इदं नरशरीरमर्थसिद्धिदमपि मर्त्यं मरणधर्मकं भवति एतज्ज्ञात्वा इत्थम्भावं अप्रमत्तः सन् अभवाय ज्ञानभक्तिभ्यां मोक्षाय यतेत ॥ १४ ॥

अप्रमत्त एव यतेत इत्यत्र दृष्टान्तमाह । छिद्यमानमिति । यमैर्निर्घृणैः एतैः प्रसिद्धैः ॥ १५ ॥

अप्रमत्तस्य फलमाह । अहो रात्रैरिति भयेन वेपथुः कम्पो यस्य सः मुक्तस्तत्कृतः सङ्गो येन सः परं माम् बुद्ध्वा ध्यास्यति मम साधर्म्यं प्राप्नोति ॥ १६ ॥

---

भाषा टीका ।

जब पर्यन्त फलों से वैराग्य न होवे तब तक कर्मों को करे अथवा जब तक मेरी कथा के श्रवण में श्रद्धा न होवे तब तक कर्मों को करे ॥ ९ ॥

हे उद्धव ! अपने धर्म में स्थित होकर कर्म करे और कामना न करे यदि और दूसरे कर्मों को नहीं करे तो तब स्वर्ग अथवा नरक को नहीं जाता है ॥ १० ॥

अपने धर्म में स्थित होकर इस लोक में वर्तमान होवे पवित्र रहे निष्पाप होवे तब विशुद्ध ज्ञानको प्राप्त होजाता है अथवा दैवयोग से मेरी भक्ति को प्राप्त होता है ॥११॥

इस मनुष्य शरीर को स्वर्ग वाले तथा नरक वाले दोनों चाहते हैं यह शरीर ज्ञान भक्ति दोनों के सिद्ध करने वाला है उन दोनों देवता नारकि शरीरों से ज्ञान कर्म नहीं सिद्ध होते हैं ॥ १२ ॥

बुद्धिमान् मनुष्य न स्वर्ग की इच्छा करे न नरक की न इस लोक की इच्छा करे क्योंकि देह के अभिमान करने से मनुष्य को प्रमाद होजाता है ॥ १३ ॥

इस बात को जान कर पुरुषको मृत्युकाल के आने से पहिले ही अपने मोक्ष के लिये यत्न करना चाहिये सावधान होकर जाने कि यह शरीर मरने वाला है तोभी मनोरथ के सिद्ध करदेने वाला है ॥ १४ ॥

यम सरीखे निर्दयी पुरुषों से कटते हुये अपने घोंसला-वाले पेड़ निवासस्थान को छोड़ कर निर्लोभ होकर जो पक्षी चला जाता है सो सुखी हो रहता है ॥ १५ ॥

इसी तरह से रात दिनों के बीतने से स्वयं में अपनी आयु के कटते हुये जान कर काँपता हुआ सत पुरुष संग को छोड़कर परमात्मा को जानकर चेष्टा रहित होकर सब कामनाओं से शांत होजावे ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवमप्रयतमानं प्रमत्तं निन्दति—नृदेहं प्लवं आद्यं प्राप्येत्यध्याहारः यो भवाब्धिं न तरेत्स आत्महा तत्र हेतवः आद्यं सर्वफलानां मूलम् एतदनुपार्जितकर्मभिः अप्राप्तेः किञ्च सुदुर्लभमनुष्यकोटिभिरपि प्राप्तुमशक्यम् तथापि तु सुलभम् यदृच्छया लब्धत्वात् तं च सुकल्पं पटुतरम् किञ्च गुरुः संश्रितमात्र एव कर्णधारो नेता यस्य तम् मया च स्मृतमात्रेणानुकूलमारुतेन प्रेरितम् ॥ १७ ॥

एवं तावद्विरक्तस्य वैराग्यद्वारा ज्ञानभक्तिसाधकं कर्मयोगमुक्त्वेदानीं अल्पविरक्तस्य ज्ञानयोगं तस्य च ज्ञानप्राप्तेः पूर्वं किञ्चित्कृत्यं वर्जनीयं चाऽऽह सार्द्धैर्नवभिः । यदा स्वारम्भेषु कर्मसु निर्विण्णो दुःखदर्शनेनाप्रवृत्तफलेषु विरक्तोऽस्ति तदा संयतेन्द्रियः सन्नात्मनोऽभ्यासेनाऽऽत्मार्थविषयार्पितचित्ततया अचलं यथा भवति तथा मनो धारयेत् ॥ १८ ॥

---

१ नृदेहमाद्यसुदुर्लभं च । २ [illegible] ।

एष वै परमो योगो मनसः सङ्ग्रहः स्मृतः ।
हृदयज्ञत्वमन्विच्छन् दम्यस्येवार्वतो मुहुः ॥ २१ ॥
साङ्ख्येन सर्वभावानां प्रतिलोमानुलोमतः ।
भवाप्ययावनुध्यायेन्मनो यावत्प्रसीदति ॥ २२ ॥
निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः ।
मनस्त्यजति दौरात्म्यं चिन्तितस्यानुचिन्तया ॥ २३ ॥
यमादिभिर्योगपथैरान्वीक्षिकया च विद्यया ।
ममार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र प्रथममेवात्यन्तधारणासंभवात्स्वभावानुसारेण वशीकरणमाह यर्हि त्वाशु भ्रान्तपरिभ्रमदनवस्थितं भवति तदाऽनुरोधेन किंचिदपेक्षापूरणद्वारेण ॥ १९ ॥

ननु तर्हि यथा पूर्वमेव स्यात्तत्राऽऽह मनोगतिं तु न विसृजेन्नोपेक्षेत किंत्वप्रमत्तः सन् वशयेदित्यर्थः ॥ २० ॥

अनुरोधमार्गं सदृष्टान्तं स्तौति एष इति । अनुवृत्तिमार्गेण मनसः संग्रहः परमो योगः तत्साधनत्वादुपचारेण स्तुतिः । यथा अदान्तस्य दम्यमानस्याश्वस्य हृदयज्ञत्वं स्वाभिप्रायेण गतिमन्विच्छन्नपेक्षमाणोऽश्ववारकः प्रथमं किंचिदनुगतिमनुवर्तते तदा च रश्मिना तं धृत्वैव गच्छति नतूपेक्षते तद्वदित्यर्थः ॥ २१ ॥

एवमीषद्वशीकृतस्य मनसोऽत्यन्तनैश्चल्योपायमाह — सांख्येनेति त्रिभिः । सांख्येन तत्त्वविवेकेन सर्वभावानां महदादिदेहान्तानामनुलोमतः प्रकृत्यादिक्रमेण भवं प्रतिलोमतः पृथिव्यादिक्रमेणाप्ययं चानुध्यायेत् प्रसीदति निश्चलं भवति ॥ २२ ॥

ननूपायसहस्रेणापि मनो विषयाकारतां न त्यजति किंभूयोभूय उपदेशेनेति चेत्तत्राऽऽह — निर्विण्णस्येति । ततश्चागमापायिषु तेष्वाविर्भूतात्मदर्शनात्तदविवेकापन्नसंसारे निर्विण्णस्यातो विरक्तस्य ततश्चोक्तवेदिनो गुरूपदिष्टार्थालोचकस्य ततो गुरूपदिष्टस्यैव चिन्तितस्य पुनः पुनरनुचिन्तया दौरात्म्यं देहाद्यभिमानं त्यजति ॥ २३ ॥

किंच यमादिभिर्योगमार्गैरान्वीक्षिकया पदार्थद्वयशोधनेन ममार्चनध्यानादिभिर्वा वाशब्देनास्य पक्षस्य स्वातन्त्र्यं दर्शयति एतैरुपायैर्योग्यं परमात्मानं मनः स्मरेन्नान्यैरतोऽभ्यासं कुर्यादित्यर्थः ॥ २४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

अप्रयतमानं यावत्कुर्वन्तं तत्र आत्मघातित्वे । पतादिति नृदेहसम्पादितकर्मभिः । तथापि सुदुर्लभत्वेऽपि । यदृच्छया केनापि भाग्योदयेन ॥ १७ ॥

तस्य च सम्यग्विरक्तस्य । किंच तत् कृत्यं मनोधारणादि । वर्जनीयश्च दम्भश्च मनस उपेक्षणादि । आत्मनि विषयवृत्तिसन्तत्या सजातीयप्रत्ययप्रवाहेन ॥ १८ ॥

तत्र मनोधारणे । तत्स्वभावानुसारेण मनः स्वभावानुकूल्येन । किंचिदपेक्षापूरणं मिष्टान्नादिरूपो द्वित्रिदिनं तत्सेवित्वा पुनर्निर्वेदेन तत्त्यजनम् ॥ १९ ॥

यैरपेक्षापूरणं तर्हि यथापूर्वं विषयाविष्टम् ॥ २० ॥

अनुरोधमार्गेण आनुकूल्येन मनोनिरोधमार्गेण । अनुवृत्तिमार्गेण । किंचिदपेक्षापूरणद्वारेण । तत् साधनत्वात् । योगसाधनत्वात् उपचारेण अभेदारोपेण आयुर्घृतमितिवत् स्तुतिः । तदनुगतिमनुगतिं । तदा चाऽनुवर्तनकाले । तमश्वम् ॥ २१ ॥

यावत् प्रसीदतीति मनःप्रसादे भावानां नश्वरत्वानुसन्धानेनैव विरक्तिद्वारा साधनमित्यभिप्रेतम् ॥ २२ ॥

ननूपायसहस्रेणेत्यादि शङ्कासमाधानाभासः कश्चिदस्ति तदयुक्तमेव ततश्चेति पृथगेव योजनोत्थापनात् । ततश्च भवाप्ययानुध्यानानन्तरं तेषु भावेषु । तदविवेकापन्ने संसारे आत्मनो देहादेः पृथक्त्वाज्ञानावलसिते संसारे । निर्विण्णस्य दुःखवद्भावाद्विग्नस्य । अतो निर्विण्णत्वात् ततश्च विरक्तत्वे सति । तत उक्तवेदित्वे सति ॥ २३ ॥

पदार्थद्वयशोधनेन जहदजहल्लक्षणया तत्त्वं पदार्थयोः सामानाधिकरण्येन अस्य पक्षस्य परापरक्षत्वमाशङ्क्य पक्षान्तरमाह — ममार्चोपासनाभिर्वेति । ततश्च यमादिभिर्न प्रयोजनमिति भावः । अन्यैः कर्मभिर्न प्रयोजनं अन्यत् कर्मादिकम् ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

हृदयज्ञत्वं स्वमनोऽभिप्रायवेदित्वं मनः क्वचाति अस्तु वेत्ते तत्रैव गन्तुमिच्छति शाम्यतीत्येवमालोचन गत्यप्रवर्तकस्य उत्पत्तिप्रतिलोमक्रमेणाप्ययः ॥ २२ ॥

दृष्टिः प्रवचनादेः चिन्तितस्यानुचिन्तनं भूयोभूयोपासना ॥ २३ ॥

न स्मरेत् नानुध्यायेत् ॥ २४—२५ ॥

यदि कुर्यात्प्रमादेन योगी कर्मविगर्हितम् ।
योगेनैव दहेदंहो नान्यत्तत्र कदाचन ॥ २५ ॥
स्वेस्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ।
कर्मणां जात्यशुद्धानामनेन नियमः कृतः ।
गुणदोषविधानेन सङ्गानां त्याजनेच्छया ॥ २६ ॥
जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु ।
वेद दुःखात्मकान् कामान् परित्यागेऽप्यनीश्वरः ॥ २७ ॥
ततो भजेत मां प्रीतः श्रद्धालुर्दृढनिश्चयः ।
जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन् ॥ २८ ॥
प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुने ! ।
कामा हृदय्या नश्यंति सर्वे मयि हृदि स्थिते ॥ २९ ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि ॥ ३० ॥
तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥ ३१ ॥
यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥ ३२ ॥

भाषा टीका ।

जब प्रवृत्ति के कर्मों से विरक्त होजावे तब इन्द्रियों का संयम करके योगी पुरुष आत्मा के अभ्यास से निश्चल-मनको धारण करै ॥ १८ ॥

धारणा स्थिर करने से भी मन यदि भ्रमता रहै स्थिर न होवे तब धीरे से मन का कुछ अनुरोध कर के उसको अपने वश करै ॥ १९ ॥

प्राणायाम से प्राण को जीत कर सब इन्द्रियों को जीत कर सत्त्व गुण युक्त बुद्धि से मन को आत्मा के वस करै ॥ २० ॥

जैसे दमन करने योग्य दुष्ट घोड़ा के मन को रख कर धीरे धीरे उस को वश करते है तैसेही धीरे धीरे मनको निग्रह कर लेना यही परम योग है ॥ २१ ॥

जब तक मन न स्थिर हो तब तक सम्पूर्ण पृथिव्यादि पदार्थों का अनित्यादि विचार से क्रम से तथा विपरीत से सब भावों की उत्पत्ति तथा प्रलय इनका ध्यान करता रहै तो मन स्थिर होगा ॥ २२ ॥

जिसको संसार से निर्वेद भया है जो विरक्त है जो इस कहे योग को जानता है वह पुरुष किसी तत्व को चिन्तन कर फिर चिन्ता करता रहै तो मन अपने चञ्चल आदि पनको छोड़ देता है ॥ २३ ॥

यम नियमादिक जो योग के मार्ग हैं तिन से वेदान्तज्ञान से ज्ञानकी निष्ठा में अथवा कुछ नहीं तो मेरी मूर्ति के पूजन से मनके द्वारा परमात्मा का स्मरण करै यही योग है और किसी उपाय से किसी का स्मरण न करै ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, पापापत्तौ प्रायश्चित्तं कार्यमेव तत्राऽऽह—यदीति । योगेन ज्ञानाभ्यासेनैव एनः भक्तस्यापि नामकीर्तनाद्युपलक्षणार्थम् नान्यत्कृच्छ्रादि ॥ २५ ॥

ननु नित्यनैमित्तिकं कर्म मलापकर्षकत्वाद्गुणो हिंसादिकं त्वशुद्धिहेतुत्वाद्दोषः तत्र च नित्यवर्जनेकृच्छ्रादिप्रायश्चित्तं गुण इति विधिप्रतिषेधाभ्यामुक्तत्वात्प्रायश्चित्तं विना योगेन कथं पापं देहेत्त्राऽऽहस्वस्वइतिसार्धेन स एव गुणो नेतरः तदुपपादयति—वस्तुविधिप्रतिषेधाभ्यामनेन गुणदोषविधानेन

श्रीधरस्वामिकृतभावार्थदीपिका ।

कर्मणां नियमः सङ्कोचः कृतः कुत इत्यत आह जात्या उत्पत्त्यैवाशुद्धानाम् स च प्राप्तानां सङ्गानां त्याजनेच्छया अयं भावः पुरुषस्याशुद्धिर्नाम न प्रवृत्तेरन्याऽस्ति स्वाभाविकप्रवृत्त्यैव तस्य मलिनत्वात् न च सहसा सर्वतो निवृत्तिःकर्तुं शक्यते अत इदं न कर्तव्यमिदमेव कर्तव्यमित्येवं स्वाभाविकप्रवृत्तिसंकोचद्वारेण निवृत्तिरेव क्रियते यथा च न प्रवृत्तिरेव वेद्-स्तयोत्तराध्याये वक्ष्याम उत्पत्त्यैव हि कामोऽरित्यादिना अतो योगिनः स्वाभाविकप्रवृत्त्यभावाच्च प्रायश्चित्तादिविधिगोचर-तेति ॥ २६ ॥

भक्त्यधिकारिणो भक्तियोगमाह—जातश्रद्ध इति सप्तभिः । मत्कथासु जातश्रद्धोऽत एवान्येषु कर्मसुद्विग्नो न तु तत्फलेषु विरक्तः तदाह वेदेति यद्यपि वेद तथाऽपि तत्परित्यागेऽनीश्वरोऽसक्तः ॥ २७ ॥

एवम्भूतो यः श्रद्धालुर्भक्त्यैव सर्वं भविष्यतीति दृढनिश्चयः संस्ततस्तदनन्तरं मां प्रीत्या भजेत विषयांस्तु सेवमानोऽपि तेषु प्रीतिं न कुर्यादित्याह गर्हयन्निति ॥ २८ ॥

कथं भजेत किंवा ततो भवति तदाह प्रोक्तेनेति द्वाभ्याम् "श्रद्धामृतकथायां मे शश्वन्मदनुकीर्तनात्" इत्यादिना तत्र तत्रोक्तेन मामासकृन्नित्यं भजतो हृदय्या हृद्गताः कामा नश्यन्ति ॥ २९ ॥

हृदयमेव ग्रन्थिरहङ्कारस्तत्पूर्वकाश्च सर्वे संशया असंभावनादयः कर्माण्यनारब्धफलानि संसारहेतुभूतानि च ॥ ३० ॥

तदेवं व्यवस्थयाऽधिकारत्रयमुक्तम् तत्र च भक्तेरत्यनिरपेक्षत्वादन्यस्य च तत्सापेक्षत्वाद्भक्तियोग एव श्रेष्ठ इत्युपसंहरति तस्मादितित्रिभिः मदात्मनो मय्यात्मा चित्तं यस्य तस्य श्रेयः श्रेयःसाधनम् ॥ ३१ ॥

तत्र हेतुः यत्कर्मभिरित्यादि इतरैरपि तीर्थयात्राव्रतादिभिः श्रेयःसाधनैर्यद्भाव्यं स्वर्गसुखादि तत्सर्वमञ्जसा अनायासेनैव स्वर्गमपवर्गं मद्धाम वैकुण्ठं लभत एव वाञ्छा तु नास्तीत्युक्तं यदि वाञ्छतीति ॥ ३२ ॥ ३३ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तत्र विगर्हिते कर्मणि । एतच्च ज्ञानाऽभावेनांहो दहनकम् ॥२५॥

नित्यं सन्ध्योपासनादि । नैमित्तकं जातेष्ट्यादि । तत्र च दोषत्वे सति । तन्निवर्तकत्वात् । हिंसादिदोषनिवर्तकत्वात् । उक्तत्वात् । गुणदोषयोरभिहितत्वात् गुणरूपं प्रायश्चित्तं विना । स्वे स्वे इत्यत्रैकम् । तथाच ज्ञानिनो ज्ञानाभ्यास एव गुणः नतु प्रायश्चित्तादिरिति तत्र कुर्यादिति भावः ॥ २६ ॥

तत्र अधिकारिभेदेन गुणदोषयोः व्यवस्थितत्वं उपपादयति उपपत्त्या साधयति । यस्माद्धेतोः । अनेन पूर्वसूचितकर्मव्याख्यानेन । उत्पत्त्यैव स्वभावेनैव । सच सङ्कोचः । ननु गुणदोषविधानेन सङ्गानां त्यागः कथं स्यात्तत्राह अयं भाव इति । तस्याऽधर्मः पुरुषस्य । अतः गुणदोषविधानस्य सङ्कोच द्वारा निवृत्तिप्रयोजकत्वात् ॥ २७ ॥

जातश्रद्ध इति युग्मकम् । कथादिष्विति कीर्तनाद्युपलक्षणं । जातश्रद्धो सञ्जातविश्वासः । अतएव जातविश्वासत्वादेव । अन्येषु भगवद्धर्मव्यतिरिक्तेषु । तत्फलेषु कर्मफलेषु । तमेवाह अविरक्तत्वमेवाह । एवम्भूतः निर्विण्णोऽपि परित्यागाऽशक्तः । तदनन्तरं विश्वासानन्तरम् । मांभजेत मदनन्यता भक्त्याधिकारी स्यात् । तेषु विषयेषु । श्रद्धा चेयं कर्मणि अर्थिसमर्थविद्वत्त्वादुक्ताधिकारिविशेषणमेव नतु भक्त्यङ्गत्वे प्रविशति स्वाराज्यकामो राजा राजसूयेन यजेतेतिवत् पुरुषविशेषणत्वेन श्रुतत्वात् तदभावेऽपि सकृदपि परिणीतं श्रद्धया हेलया वेत्यादौ तस्याः फलदातृत्वश्रवणाच्च । तदुक्तं रसामृतसिन्धौ । श्रद्धामात्रस्य तद्भक्ताधिकारित्वहेतुता । अङ्गत्वमस्य विश्वासविशेषस्य तु केशवे इति । अतएवानुष्ठानाङ्गत्वेऽपि न प्रविशतीति ज्ञेयम् ॥ २८ ॥

ततो भजनात् ॥ २९ ॥

तत्र तत्र प्रकरणे ॥ ३० ॥

असम्भावनादर्शने सन्देहः आदिना विपरीतभावना तत्कार्यभूता रागादयश्च गृह्यन्ते । न आरब्धं नोत्पादितं सुखदुःखादिफलं येषां तानि अनारब्धफलानि सञ्चितागामिकानीति प्रारब्धस्य तु भक्तोत्कण्ठावर्धनार्थं भगवतैव रक्षणादिति ज्ञेयम् । तथाच पारमर्षं सूत्रम् । तदधिगमे उत्तर पूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादिति । श्रुतिश्च । "तत् सुकृतदुष्कृते विधुनुते एवम् ह वाव न तपति किमहं साधुना करवं किमहं पापमकरवम्" इति ॥ ३१ ॥

तदेवं निर्विण्णानां ज्ञानयोग इत्याद्युक्तप्रकारेण । तत्र च योगत्रयमध्ये । अस्य निरपेक्षत्वाज्ज्ञानाद्यपेक्षारहितत्वात् । अन्यस्य च ज्ञानादेः तत्सापेक्षत्वाद्भक्त्यपेक्षासहितत्वात् । यतो भक्त्यैव कामादिनाशलक्षणं वैराग्यं ज्ञानञ्च स्वतएव स्यात् तस्मात् मद्भक्तियुक्तस्य ध्यानं ज्ञानस्य धनाभ्यासः वैराग्यञ्च वैराग्याभ्यासः । प्रायः वितर्के । श्रेयो न भवेत् किमुत कर्मत्यर्थः । व्यभिचारिकश्रमात्कृच्छ्रभक्त्यन्तरायाच्च । नतुद्वयमत्यन्तनिषेधार्थः ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

स्वे स्वे वर्णाश्रमानुरूपे जात्या शुद्धानां स्वतः शुद्धानां गुणदोषविधानेन निष्कामसकामत्वप्रतिपादनेन नियमः कृतः व्यवस्था कृता ॥ २६ ॥

सङ्गानां काम्यकर्मश्रद्धानां त्याजयने छाया इन्द्रियजपात्मकस्यापि भगवत्सख्या इन्द्रियजयातिसिद्धिमाहजातश्रद्ध इत्यादिभिः ॥ २७—३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वक्ष्यते । किञ्च, भगवदनुभवरूपं ज्ञानं विषयारोचकत्वलक्षणम् वैराग्यं च भक्त्युत्थत्वाद्गुणातीतं तस्य स्वत एव स्यात् यदुक्तं "भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एक कालः । प्रपद्यमानस्य" इति प्रायग्रहणेन कश्चिच्छ्रद्धालुभक्तेः प्रथमदशायां तयोर्विहापि नाश्रयणकरः भक्तिमुक्त्येव निर्विघ्नत्वाबाधयुक्तविरक्ता इति तन्मतमुक्तं भक्तिरसामृतसिन्धौ ॥ ३१ ॥

ननु, यदि कश्चित्त्वत्कथादाविव श्रद्धालुस्तु कर्मज्ञानादिषु तत्‍शोधकत्वादत्र च तत्फलेषु स्वर्गापवर्गादिषु स्पृहावांश्च स्यात्तदा किं भवेदत आह—यदिति द्वाभ्याम् । इतरैरपि श्रेयः साधनैस्तीर्थयात्राव्रतादिभिः मद्धाम सालोक्यम् ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यदुक्तमन्यैर्मनोवीरात्मयं न त्यजतीति तत्र स्वाधिकारे निष्ठा गुणोऽन्याधिकारे निष्ठा दोष इति हेतुमाह—यदीति सार्द्धद्वाभ्याम् । योगेनैव स्वाधिकारप्राप्तेनैव तत्र सम्यक् स्वाधिकारबाह्य कदाचनापि नैव कुर्यात् ॥ २५ ॥

यतः स्वेस्वे अधिकारे कर्मयोगिनः कर्मणि ज्ञानयोगिनो ज्ञाने भक्तियोगिनो भक्तौ या निष्ठा स गुणः परितः सर्वतः कीर्त्तितः अन्याधिकारे निष्ठा दोष इत्यर्थः । सङ्गानां दुःखयोनीनां प्राकृतपदार्थसंयोगानां त्यजनेच्छया मुक्तीच्छया अनेन मुक्त्युपायविषयकेन गुणदोषविधानेन जात्यशुद्धानां जातित एवाशुद्धानां संसारप्रापकाणां मुक्तिविरोधिनां कर्मणां नियमः कृतः मुक्तेरुपायानां कर्मज्ञानादीनां यथाधिकारे आदरोऽनधिकारे नादरस्तदा तेषां स्वत एव सर्वमाचरेदिति नियमः कृत इत्यर्थः ॥२६॥

एवं गुणदोषदर्शनप्रयोजनमुक्त्वाऽथ कर्मभिः इह जन्मकृतैरन्यजन्मकृतैर्वा शुद्धान्तःकरणाश्च महत्सेवया साधनरूपा कथाश्रवणाद्यात्मिका भक्तिः तया वैराग्य ज्ञानं च जायते "वासुदेवे भगवति भक्तियोगः समाहितः । सध्रीचीनेन वैराग्यं ज्ञानं च जनयिष्यति" इति श्रीमन्नारदोक्तेः तत्र स्वाधिकारप्राप्ते कर्मणि भक्तियोगे वा गुणं पश्यन्नन्यत्र प्रवृत्तावधिकाराभावाद्दोषं पश्यन् एवं शुद्धस्य तदनन्तरं ज्ञानवैराग्याभ्यां पराभक्तिर्जायते ।—

> "तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव ! ।
> ज्ञानविज्ञानसम्पन्नो भजमांभक्तिभावित." ॥

इति पूर्वप्रोक्तत्वात् तया सम्पन्नस्य गुणदोषवर्जितस्वभावो भवतीत्याह—जातश्रद्ध इति । द्वादशाभिः कर्मभिः शुद्धान्तःकरणत्वेन मत्कथासु जातश्रद्धः "तावत्कर्माणि कुर्वीत न निर्विद्येत यावता । मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते" इति पूर्वोक्तश्च । अत एव सर्वकर्मसु निर्विण्णः कारयन्ते इति कामा तान् यद्यपि दुःखात्मकान् वेद तथापि तान् जुषमाणः मां भजतेत्युत्तरेणान्वयः ।—

> "तत्तेऽनुकम्पां सुसमीक्षमाणो भुञ्जान एवात्मकृतं विपाकम् ।
> हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक्" ॥

इत्युक्तात् ॥ २७

भगवद्भजनेनैव तत्कैर्यादयश्च यादिरूपेण कामाः भगवज्ज्ञानं मद्भक्तिप्राप्तिश्च भविष्यतीति दृढनिश्चयः ॥ २८ ॥

प्रोक्तेन मत्कथाश्रवणादिरूपेण कामानद्वयति तेभ्यो वैराग्यं भवति मयि हृदिस्थिते मयि ज्ञाने सतीत्यर्थः । मत्कथाश्रवणादिरूपया भक्त्या मद्विषयकं ज्ञानं संसाराद्वैराग्यं च भविष्यतीति फलितोऽर्थः ॥ २९ ॥

ज्ञानफलमाह—भिद्यत इति । हृदयं देहादावहंममाभिमानरूपान्तःकरणवृत्तिः तादृशं हृदयमेव ग्रन्थिः विद्यते अन्योपि संशयाः उपास्योपासकस्वरूपगुणादिविषयकाः सर्वे क्षीयन्ते कदा आत्मन्यात्मनि मयि दृष्टे सुजाते सति "यद्विज्ञानेन सर्वविज्ञानं भवति" इति श्रुतेः ॥ ३० ॥

तस्मात्कर्मभक्तिसमुत्पन्नात्स्ववैराग्यात्स्वज्ञानात् हेतौ मद्भक्तियुक्तो भवति मत्प्रेमातिशयभक्तियुक्तो भवति तस्य मद्भक्तियुक्तस्य महमात्मा आश्रयो यस्य तस्य न वैराग्यं चकारात्कर्मादि न श्रेयः न मम वशीकरणहेतुः प्रायोग्रहणेन ज्ञानादीनाम् भक्तिद्वारा श्रेयस्त्वं सूच्यते यथा केनापि हेतुना बहुकालतो राजपुत्रः स्वैरिण्या वियोजितः संवर्द्धितश्च स्ववशो इत्यादि तश्च स कदाचित्कमपि कर्मणा तुष्टेन राजस्वरूपगुणाद्यभिज्ञेन प्रबोधितः स्वैरिणीदोषख्यापनेन तस्यां विरक्तश्च कृतः राजप्राप्त्युपाये च प्रवर्तितस्तस्य पितृप्रेमविह्वलस्य पितुरङ्कपतितस्य भक्तिरेव पितरं वशीकरोति न पूर्वकृतानि कर्मज्ञानादीनि साधनानि तद्वदिति ॥ ३१ ॥

भक्त्यैव सर्वं यद्यद्वाञ्छति तत्तत्सुलभं भवतीत्याह यदिति द्वाभ्याम् इतरैस्तीर्थयात्रादिभिश्च श्रेयोभिर्हरिप्राप्त्युपाये ॥ ३२ ॥

---

भाषा टीका ।

यदि कदाचित् भक्त योगीजन से प्रमाद वस से कोई खोटा कर्म हो भी जावै तो योगही से उसके पाप को दहन करै और कुछ नहीं करै ॥ २५ ॥

अपने अपने वर्णाश्रम के अधिकार से निष्ठा रखना यही गुण है जाति से अशुद्ध जो कर्म है तिनका यही यात से नियम किया है गुण तथा दोष के विधान से और सङ्गों को त्यागने की इच्छा से ॥ २६ ॥

मेरी कथा में जिसको श्रद्धा भई हो और सब कर्मों मे वैराग्य होगया हो वह सब कर्मों को दुःख रूप जानता है परन्तु परित्याग करने में भी समर्थ नहीं है ॥ २७ ॥

तब अति प्रीति से श्रद्धावान् दृढ़ निश्चयवाला होकर दुःख फलदेने वाले उन कर्मों की निन्दा करता हुआ फिर भी यथा कथंचित् उन का सेवन करता हुआ मेरा भजन करै ॥ २८ ॥

पहिले कहे हुए भक्तियोग से जो मुनि मेरे को निरन्तर भजता है उस मुनि के हृदय के सब काम मेरे हृदय के मध्य मे वास करने से नष्ट हो जाते हैं ॥ २९ ॥

जब सब को अन्तर्यामी मेरे को वह पुरुष हृदय में देख लेताहै तब उस के हृदय की मोह ग्रन्थी छूटजाती है सब संशय उसके मिटजाते हैं और सब कर्म क्षय हो जाते हैं ॥ ३० ॥

सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति ॥ ३३ ॥
न किञ्चित्साधवो धीरा भक्ता ह्येकान्तिनो मम ।
वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥ ३४ ॥
नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् ।
तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥ ३५ ॥
न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः ।
साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥ ३६ ॥
एवमेतान् मयादिष्टाननुतिष्ठन्ति मे पथः ।
क्षेमं विन्दन्ति मत्स्थानं यद्ब्रह्म परमं विदुः ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
विंशोऽध्यायः ॥ २० ॥

भाषा टीका ।

जिस से मेरी भक्ति से युक्त मेरे मे मन लगाने वाले योगी के लिये न ज्ञान है न वैराग्य है अर्थात इन से कल्याण पाने की अपेक्षा नहीं रहती है ॥ ३१ ॥

कर्मों से जो फल होता है तपस्या से जो होता है ज्ञान से जो होता वैराग्य से जो होगा योग से दान धर्म से और अन्य धर्मों से भी जो कुछ होता है ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र हेतुमाह—न किञ्चिदिति । धीरा धीमन्तो यतो मम एकान्तिनो मय्येव प्रीतियुक्ता अतो मया दत्तमपि न गृह्णन्ति किमुत स्वयं न वाञ्छन्तीत्यर्थः । अपुनर्भवमात्यन्तिकमपि कैवल्यम् ॥ ३४ ॥

तदुपपादयति—नैरपेक्ष्यमेव परमुत्कृष्टमनल्पकं महन्निःश्रेयसं फलं तत्साधनं च प्राहुः मे भक्तिर्निराशिषः प्रार्थनाशून्यस्य निरपेक्षस्य प्रार्थनाकारणभूतापेक्षारहितस्य पुंसो भवेत् । यद्वा, मे निरपेक्षस्य या भक्तिः सा निराशिषो भवेदित्यर्थः ॥ ३५ ॥

अनेन प्रकारेण सिद्धानां न गुणदोषा इति विरोधपरिहारमुपसंहरति न मयीति गुणदोषैर्विहितप्रतिषिद्धैरुद्भवो येषां ते गुणाः पुण्यपापादयः साधूनां निरस्तरागादीनामतः समचित्तानामत एव बुद्धेः परमीश्वरं प्राप्तानाम् ॥ ३६ ॥

काण्डत्रयनिष्ठां निर्दिश्यैतान् मुक्तिमार्गानुपसंहरति—एवमिति । ये पथो मयोक्तानुपायान् येऽनुतिष्ठन्ति ते क्षेमं काल-मायादिरहितं मम लोकं विन्दन्ति यत्परमं ब्रह्म तच्च विदुः ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
विंशोऽध्यायः ॥ २० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तत्र ज्ञानवैराग्ययोः श्रेयस्साधनत्वाऽभावे । यदीति पुनम-कम् । सत्त्वशुद्ध्यादीत्यादिना स्वर्गादिपरिग्रहः ॥ ३३ ॥

तत्र वाञ्छाऽभावे । एकस्मिन् मय्येवान्तो निष्ठा येषाम् ते इति मय्येव प्रीतियुक्ता इति व्याख्यानम् । अत एकान्तित्वात् ॥ ३४ ॥

तत् एकान्तित्वम् उपपादयति, युक्त्या साधयति । तत्-साधनं फलसाधनम् । पूर्वार्धे प्रार्थनाशून्यत्वेनैवापेक्षाराहित्यमुक्तम् पुनर्निरपेक्षस्येत्यधिकमतो यद्वेति । निराशिषो निष्कामस्य ॥ ३५ ॥

विरोधपरिहारं गुणदोषदर्शनादौ इत्यस्य "महतः सात्त्विका-मुपासीत न कलञ्जं भक्षयेत्" इत्यादिभिर्यो विरोधः गुणदोष-भिदा दृष्टिर्निगमात्ते न हि स्वतः इत्यादिनोक्तस्तस्य परि-हारं निवृत्ति विहितप्रतिषिद्धैः सत्त्वाद्यन्तमादिकक-मलयादिभिः ॥ ३६ ॥

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

एतान् निष्कामकर्मयोगज्ञानभक्तिरूपान् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
विंशोऽध्यायः ॥ २० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

न वाञ्छन्ति अपवर्गेच्छाविरहे भक्तेः स्वादुत्वकाष्ठा दर्शिता नत्व-पवर्गेच्छाया मानर्थहेतुत्वं "रक्षापेक्षां प्रतीक्षते" इति वचनान्तरानु-रोधात् ॥ ३४ ॥

मे मत्तः भक्तिप्रदोऽपहारमित्यर्थः ॥ ३५ ॥

गुणदोषोद्भवा गुणाः गुणदोषज्ञानमात्रोद्भवा रागद्वेषा-दयः प्रथगुपायान् येऽनुतिष्ठन्ति ते विदुरित्यध्याहारयोजना नरकापेक्षया स्वर्गो गुणी अतः आपेक्षिकः गुणदोषविभागः अतो विधिनिषेधशास्त्रप्रवृत्तिनिरूपकस्य तु स्वर्गो नरकमुभय-मपि इष्टममिति गुणदोषसद्भाववादः कृतः भक्तियोगस्तु निरू-कस्यापि गुणवत्तर इति गुणदोषसद्भाववचनं न तद्गोचरम् मपितु सङ्कुचितविषयमिति परिहारः फलितः ॥ ३६—३७ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, समीहितमेव श्रेय ऐश्वर्यकैवल्यादिस्तथा न तस्य भक्ति-योगोपि साधनमित्यत आह—यदिति । यत्कर्मादिभिरवाप्यं तत्सर्वं मद्भक्तियोगेनाञ्जसा सुखेन लभते तत्र कर्म यज्ञादि-रूपं तपः शास्त्रीयकायक्लेशः ज्ञानं प्रकृतिविविक्तात्मोपासनात्मकं वैराग्यं तदुपयुक्तं विषयेषु वैराग्यं योगो योगस्तदुपयुक्तः दान-मात्मीयद्रव्यस्य परस्वत्वापादनं धर्मो वापीकूपतडागवनादि-निर्माणात्मकः । इतराणि श्रेयः साधनानि तीर्थयात्रा व्रतादीनि सर्वमित्यनेन विवक्षितं विवृणोति—स्वर्गापवर्गमिति । अपवर्ग-शब्दोऽत्र कैवल्यपरः तस्य प्रकृतिसम्बन्धाभावमात्ररूपत्वान्मद्धा-मेति । मोक्षस्य पृथक्निर्देशादेवं भक्तियोगस्य सर्वफल-साधनत्वमुक्त्वाऽथानितरसाध्यमाधनमाह । मद्धामकर्मार्थयाद वाञ्छतीति लभते इत्यनुषज्यते यदीति । सम्भावना-द्योतको निपातः ॥ ३३ ॥

वाञ्छा तु नास्तीत्यभिप्रेत्य तद्विवृणोति, न किञ्चिदिति । मम भक्ताः नास्ति पुनर्भवो तस्य यस्मात्तमपुनर्भवं मोक्षं केवलं न मत्तः इतरत् न वाञ्छन्ति । यद्वा कैवल्यं निरवशेषं हेय-सम्बन्धाभावात्मकमपुनर्भवं मद्धाम न वाञ्छन्तीत्यर्थः । न वाञ्छ-न्तीत्यपवर्गेच्छाविरहे भक्तेः स्वादुत्वस्य काष्ठा दर्शिता नत्वपवर्गे-च्छाया आनर्थक्यहेतुत्वं "रक्षापेक्षां प्रतीक्षते" इति वचनान्तरा-नुपपत्तेः मद्वाञ्छायां हेतुतया भक्तान् विशिनष्टि—एकान्तिनः इति एकान्तिनः मदनुभवैकप्रयोजनपराः अतो मदनुभव एव तेषां प्रयोजनं तदेव सिद्धमिति न वाञ्छन्तीति भावः ॥ ३४ ॥

यदि न वाञ्छन्ति तर्हि तेषां मुक्तिर्न स्यादेव किमित्यत आह—नैरपेक्ष्यमिति । परं केवलमनल्पकं केवलमनल्पकं नैर-पेक्ष्यं निःश्रेयसं निःश्रेयसकरम् एकान्तभक्तिरेव निःश्रेयससाधन-भूतत्वादवाञ्छतामपि मुक्तिस्तेषां भवतीति भावः । भक्तियोगोऽपि नितरां निरपेक्षस्यैव प्रतिष्ठितः स्यादित्याह, तस्मादिति तस्मादनल्पनैर-पेक्ष्यस्य निःश्रेयसकरत्वान्निराशिषः इष्टादृष्टफलेष्वाशारहितस्य निरपेक्षस्यापवर्गेच्छारहितस्य मद्भक्तिर्भवेत् । अन्तरायाऽ-प्रतिहता भवेदित्यर्थः ॥ ३५ ॥

तदाह—न मयीति । गुणदोषोद्भवा गुणदोषज्ञानमात्रोद्भवाः गुणाः रागद्वेषादयो न भवेयुः रागद्वेषादयोऽपि भक्तियोगविघातकाः ते च न स्युरित्यर्थः । तदभावे हेतुत्वेन विशिनष्टि—मय्येकान्त-भक्तानामनन्यप्रयोजनभक्तियुक्तानां समचित्तानां गुणदोषविवर्जित-चित्तानां बुद्धेः गुणदोषबुद्धेः परम् अतीत धर्मम् उपेयुषामुभय-वर्जनात्मकधर्मपराणाम् इत्यर्थः ॥ ३६ ॥

"श्रुत्वा धर्मान् बहून्पश्चान्मोक्षधर्माननुपृच्छत । तानहं तेऽभिधा-स्यामि" इति प्रतिज्ञातमोक्षधर्मनिरूपणमुपसंहरति, तदनुष्ठानफल-माह । एवमिति । मादिष्टानुपदिष्टान्मयः मोक्षमार्गान्येऽनुति-ष्ठन्ति ते परब्रह्म विदुस्तस्य परब्रह्मभूतस्य मम स्थानं क्षेमं सुखं यथातथाभिव्यक्तिं लभन्ते मदिति पृथक्पदं ममेत्यर्थः । यद्वा, समासरूपायां वृत्तौ वृत्तस्यापि तस्य मदिति पदस्य सामर्थ्या-द्विशेषणयोगः ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कर्मादिना प्राप्यं यच्छ्रेयो न तत् स्वद्भक्त्या प्राप्यमित्याशङ्कां माभूदित्याह—यत्कर्मभिरिति । यदि वाञ्छति तर्हि लभते न तत्रेतरापेक्षाऽस्तीत्यर्थः । योगेन प्राणायामलक्षणेन ध्यानेन वा ॥ ३३ ॥

ननु यदीति स्यर्थं रागिणां तेषां सर्वाभिलाषसम्भवा-दिति तत्राह—न किञ्चिदिति । रागिणोऽपि ते भक्तिफल-बुद्ध्या न किञ्चिद्वाञ्छन्ति ॥ ३४ ॥

सुखं न वाञ्छन्ति चेत् दुःखयोग्याः किमित्याह—नैरपेक्ष्य-मिति नैरपेक्ष्यमकलत्रं निष्पापं परं पूर्णं निःश्रेयसं प्राहुरिति । यस्मादस्मात् स्वैकपरायणानां तेषां स्वतः कि-सुखलक्षणं फलम् अन्यथा पापात्मत्वमपि श्रेयः स्यादित्याशङ्कां परिहरन्नुपसंहरति, तस्मादिति । निराशिषः संसारविषयाशीर्मु-क्तस्य मे एकान्तनिरपेक्षस्य तस्य भक्तिरानन्दरूपापत्तिसंविद-त्यन्वयः यतो भक्तिविषयमा भक्ताय फलं देयमत इति—

"यदि दद्याद्भक्तियोगफलं मोक्षमपीश्वरः ।
भक्तियोगफलत्वेन तत्तद्गृह्णीयुरेव ते" ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तथापि मुक्तिस्तु इत्यादिनेति सूचयन् निरपेक्षसाधर्म्ये साधनं निरपेक्षत्वमेव भवेदित्युपपादयति, नैरपेक्ष्यमिति। परं श्रेष्ठ- मनल्पकं निरपेक्षः आनन्दपूर्णः आश्रयः अह तस्य मामो नैरपेक्ष्यं मद्भावलक्षणं निःश्रेयसं मोक्षं "निरञ्जनः परमं साम्य- मुपैति" इत्याद्याः श्रुतयः प्राहुः तस्मान्नैरपेक्ष्यमेव मद्भावसाधन- रूपा भक्तिरपि निराशिषो निरपेक्षस्यैव भागवतस्य भवेदि- त्यर्थः ॥ ३५ ॥

भागवतानां निरपेक्षत्वमेव दर्शयति–नेति। बुद्धेरित्युपलक्षणं देहेन्द्रियमनोबुद्धिप्राणेभ्यः परं विलक्षणं स्वं पदार्थं यद्वा बुद्धेः प्रकृतेः परं मां ध्यानेनोपेयुषां प्राप्तानामत एव साधूनां निरस्तरागादीनामत एव समचित्तानामत एव मय्येकान्तभक्तानां गुणेष्विष्टेषु दोषेषूद्भवो येषां गुणानां रागद्वेषादीनां ते न सन्ति गुणदोषवर्जितास्तेषां अभाव इत्यर्थः ॥ ३६ ॥

उपसंहरति, एवमिति। आदिष्टानुपादिष्टान् यथा मुक्तिमार्गान् येऽनुतिष्ठन्ति ते क्षेमं कालकर्मप्रकृतिदोषरहितं परमं परमश्रेष्ठं ब्रह्म व्यापकं यान्ति। श्रुतयः स्मृतयश्च तन्मम स्थानं विष्णोः यदन्ते योऽव्ययात्मा स परमं ज्योतिः इत्याद्याः श्रुतयः—

"प्रयाणः सदनात्पूर्वं तद्विष्णोः परमं पदम्।
शुद्धं सनातनं ज्योतिः परब्रह्मेति यद्विदुः" ॥

इत्याद्याः स्मृतयश्च ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
विंशाध्यायार्थप्रकाशः ॥ २० ॥

---

भाषा टीका।

इन सब फलों को मेरा भक्त मेरे भक्ति योग से अना- यास से प्राप्त हो जाता है स्वर्ग तथा मोक्ष तथा मेरा वैकुण्ठधाम जो चाहे तो मिल जाता है ॥ ३३ ॥

जो मेरे एकांती भक्त हैं साधु हैं धीर हैं वे तो मेरे देने से भी न कैवल्य को चाहते हैं न मोक्ष को चाहते हैं ॥ ३४ ॥

जो निरपेक्षता है वही बड़ा भारी कल्याण पदार्थ है तिस हेतु से जो निरपेक्ष है सो निष्काम है तिसी को मेरी यथार्थ भक्ति होती है ॥ ३५ ॥

जो मेरे एकांत भक्तों को गुण तथा दोषों के गुण नहीं होते है क्यों कि वे तो साधु हैं समचित्त वाले हैं बुद्धि के पर तीर मे प्राप्त हो गये हैं ॥ ३६ ॥

इस प्रकार कहे हुवे इन मार्गों को जो लोग अनुष्ठान करते हैं वे भक्ति जन क्षेम कल्याण स्थान मेरे पद को प्राप्त होते हैं जिसको कि परब्रह्म कहते है ॥ ३७ ॥

इति श्रीमद्भागवत महापुराण एकादशस्कन्ध में
बीसवें अध्याय की पं० ज्वालाप्रसादजीकृत
भाषा टीका समाप्त ॥ २० ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे विंशोऽध्यायः ॥ २० ॥

——:०:——

## अथ एकविंशोऽध्यायः ।

---:*:---

श्रीभगवानुवाच ॥

य एतान् मत्पथो हित्वा भक्तिज्ञानक्रियात्मकान् ॥
क्षुद्रान् कामांश्चलैः प्राणैर्जुषन्तः संसरन्ति ते ॥ १ ॥
स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्त्तितः ।
विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः ॥ २ ॥
शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु ।
द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ ॥ ३ ॥
धर्मार्थं व्यवहारार्थं यात्रार्थमिति चानघ ! ।
दर्शितोऽयं मयाऽऽचारो धर्ममुद्वहतां धुरम् ॥ ४ ॥
भूम्यम्ब्वग्न्यनिलाकाशा भूतानां पञ्चधातवः ।
आब्रह्मस्थावरादीनां शारीरा आत्मसंयुताः ॥ ५ ॥
वेदेन नामरूपाणि विषमाणि समेष्वपि ।
धातुषूद्धव कल्प्यन्त एतेषां स्वार्थसिद्धये ॥ ६ ॥
देशकालादि भावानां वस्तूनां मम सत्तम ! ।
गुणदोषौ विधीयेते नियमार्थं हि कर्मणाम् ॥ ७ ॥
अकृष्णसारो देशानामब्रह्मण्योऽशुचिर्भवेत् ।
कृष्णसारोऽप्यसौवीरकीकटासंस्कृतेरिणम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

जयति स्वपरानन्दः परानन्दनृकेसरी ।
यत्कृपालवलेशेन श्रीधरः सत्कृतिः कृती ॥
दुरन्तामिव्छूनां सन्तः क्षमन्तां मम साहसम् ।
यथा हि स्वीयबोधाय कृतमेतन्न सर्वतः ॥
एकविंशे क्रियाज्ञानभक्तिष्वनधिकारिणाम् ।
कामिनां द्रव्यदेशादिगुणदोषाः प्रपञ्चिताः ॥

तदेवं गुणदोषव्यवस्थार्थं योगत्रयमुक्तं तत्र ज्ञानभक्तिसिद्धानां न कश्चिद्गुणदोषौ साधकानां तु प्रथमतो निवृत्तिकर्मनिष्ठानां यथाशक्तिनित्यनैमित्तिकं कर्म सत्त्वशोधकत्वाद्गुणः तदकरणं निषिद्धकरणं च तन्मलीमसकरणत्वाद्दोषः तन्निवर्तकत्वाच्च प्रायश्चित्तं गुणः विशुद्धसत्त्वानां तु ज्ञाननिष्ठानां ज्ञानाभ्यास एव सिद्धिहेतुत्वाद्गुणः भक्तिनिष्ठानां पुनः श्रवणकीर्तनादिभक्तिरेव गुणः तद्विरुद्धः सर्वमुभयेषां दोष इत्युक्तम् इदानीं ये तु न सिद्धा नापि साधकाः किन्तु केवलं काम्यकर्मप्रधानास्तेषां सकलगुणदोषान् प्रपञ्चयिष्यन्नादौ तानति बहिर्मुखान्निन्दति, य एतानिति । मत्पथो मदुक्तमार्गान् क्षुद्रान् तुच्छांश्चलैरस्थिरैः प्राणैर्बहिरायुभिरिन्द्रियैर्वा जुषन्तः सेवमाना भवन्ति ते संसरन्ति निखिलगुणदोषभाक्त्वेन नानायोनीः प्राप्नुवन्तीत्यर्थः ॥ १ ॥

ननु, तैरेव कर्मभिः केचिद्गुणदोषभाजः केचिन्नेति कुतो वैषम्यम् नन्वात्मना केचित्तत्पद्यन्ते केचिन्नेति स्वभावात तत्राऽऽह, स्वे स्व इति । अधिकारभेदेन कल्पितौ गुणदोषौ न वस्तुनिष्ठाविति भावः ॥ २ ॥

आत्मा परिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदार्थनिष्ठः ।
व्यर्थोऽपि नैवोपरमेत पुंसां मत्तः परावृत्तधियां स्वलोकात् ॥ ३३ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

चक्षुरिति चक्षू रूपमर्काशः एवं त्वगादि त्वक् स्पर्शो वायुरिति श्रवणादि श्रवणं शब्दो दिशा इति जिह्वादि जिह्वा रसो वरुण इति नासादि नासा गन्धोऽश्विनाविति चित्तयुक्तं चित्तादि च चित्तं चेतयितव्यं वासुदेवोंश इति उपलक्षणमेतत् मनो मन्तव्यं चन्द्र इति बुद्धिर्बोद्धव्य ब्रह्मेति अहंकारोऽहंकर्तव्यं रुद्र इति एवमन्यदपि सर्वं त्रिविधमिति ॥ ३१ ॥

नन्वसौ नानाविकारमयः प्राकृतः प्रपञ्चः सत्यो मिथ्या वा वादिनां मतवैविध्यान्निश्चेतुमशक्यत्वात् पृच्छ्यते इत्याकाङ्क्षायामनुवादपूर्वकमाह । योऽसाविति द्वाभ्याम् । गुणक्षोभकार्यः विकारमयः प्रपञ्चप्रधानमूलात् प्रधानहेतुकात् महतः सकाशात् प्रसूतः उद्भूतो योऽहङ्कारस्तस्मात्प्रवृत्त त्रिरूपीभूतः त्रिवृत्त्वमेवाह । वैकारिकस्तामस ऐन्द्रियश्चेति आधिदैवाधिभूताध्यात्मादिमयः सोहि मोहविकल्पहेतुः मोहेन अज्ञानेन हेतुना सत्यो वा मिथ्या वा नित्यो वेत्येव विकल्पस्य हेतुः ॥ ३२ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

परिहरति । प्रकृतिः पुरुषश्चेति । विकल्पो भेद एव पुरुषयोनि स्वरूपभेदेन जडाजडयोरैक्यं शङ्कितुं योग्यो न भवामिति सूचयन् अचेतनत्वविकारित्वादिधर्मवैधर्म्यात् भिन्न एव पुरुष इत्याह । एष इति सार्धद्वाभ्याम् । एष जडत्वेन प्रसिद्धः देहादिरूपः अनात्मवर्गः वैकारिकः विकारवान् सृज्यते इति सर्गः गुणानां व्यतिकरः क्षोभः आत्मा कारणं यस्य स गुणव्यतिकरात्मकः गुणक्षोभज इत्यर्थः ॥ २९ ॥

स च मम शक्तिभूतायाः मायायाः वेशभूतः इत्याह । ममेति । अङ्ग हे उद्धव ! मम माया देवमनुष्यपश्वादिरूपैः अनेकधा भवति अत एव गुणैः देवत्वादिभिः विकल्पेषु जीवभेदेषु देवोऽहम् मनुष्योऽहम् अयं पशुः इत्याद्याः बुद्धीः भक्ते जीवानेव व्यामोहयतीत्यर्थः । स च वैकारिकः विकारवान् देहादिसंज्ञकः त्रिविधः तदुपपादयति । अध्यात्मभेकम अत्राव्ययं विभक्तिसमीपसमृद्धीत्यनेन अध्यात्मादिशब्दानां विभक्त्यर्थेऽव्ययीभावः आत्मनि देहे वर्तमानमध्यात्मं चक्षुरादि अन्यात्यत् भूतेषु तेजःप्रभृतिषु संभूतमधिभूतं चक्षुरादिग्राह्यं रूपादि रविरधिदैवं चक्षुराद्यधिष्ठातृ देवतारूपम् ॥ ३० ॥

तानि जडानि तज्ज्ञाता पुरुषस्तेभ्योऽन्य इत्याह । दृगिति दृगध्यात्मम् रूपमधिभूतम् अत्र दृग् गोलकं प्रविष्टमार्कं वपुरधिदैवम् रूपग्राहकमिन्द्रियं दृक् दृग्ग्राह्यो गुणो रूपम् रूपग्रहणे उपकारकमार्कं वपुरित्येवमध्यात्मादिकं परस्परं तेनैव आत्मा सिध्यति केन यः आत्मा स्वतः अनात्मभूतदृगादिनैरपेक्ष्येण खे हृदि वर्तते हृदयमात्मेति श्रुतेः विषयेषु प्रवर्तमानानां प्रेरकः अत एव एतेभ्योऽपरो भिन्नः किं बहुना स्वानुभूत्या ज्ञानेन सकलमिन्द्रियाणां सिद्धिः मनुकारकः चक्षुषि दर्शितं त्रैविध्यं त्वगादिष्वपि दिशति एवमिति । चक्षुश्चक्षुरादित्रिकं यथा परस्परं सिध्यति एवं त्वगाद्यपीत्यन्वयः चक्षुरादीनां मनः सहकृतानामेव शब्दादिग्रहणे कारणत्वं द्योतयितुमाह । चित्तयुक्तमिति ॥ ३१ ॥

अथ प्रकृतिपुरुषभेदशङ्कायां पुरुषेश्वरयोरत्यन्ताभेदशङ्कायां च अहङ्कार एव हेतुरित्याह । य इति । अहमहङ्कारः मोहविकल्पयोर्हेतुः तत्र प्रकृतिपुरुषयोरैक्यभ्रमो मोहः पुरुषेश्वरयोरत्यन्ताभेदभ्रमः विकल्पः ॥ ३२ ॥

———

भाषा टीका ।

श्रीभगवान् उवाच हेपुरुषश्रेष्ठ ! उद्धवजी प्रकृति और पुरुष इनका तो आपस में बड़ा भेद है यह जो प्रकृति का विकार देहादिक है सो तो गुणों के क्षोभ होने से बनता है ॥ २९ ॥

हे उद्धव ! हमारी प्रकृति माया गुणमयी है सो अनेक प्रकार की भेद बुद्धियों को पैदा करती है जिसमें तीन भेद ये हैं एक अध्यात्म एक अधि दैव एक अधिभूत यही उसके विकार हैं ॥ ३० ॥

ये तीनों इस प्रकार से हैं जैसे रूप के देखने में नेत्र अध्यात्म है रूप अधिभूत है उस नेत्र में जो सूर्य देवता का अंश सो अधिदैव है ये तीनों आपस में एक के आश्रय के विना एक सिद्ध नहीं होता है सो जो आकाश में सूर्य है वह तो स्वयं ही सिद्ध होरहा है और जो आत्मा है सो तो इन तीनों से भिन्न है आद्य है अपने प्रकाश से सब प्रकाश होने वालों का प्रकाशक है जैसे नेत्र का कहा है तैसे ही त्वचा श्रवण चक्षु जिह्वा नासिका इनके व्यापारों में भी अध्यात्मादिक तीनों को जानना चाहिये ॥ ३१ ॥

यह जो गुणों के क्षोभका किया विकार है प्रधान कारण वाले महतत्त्व से पैदा भया है जिस में अहंकार मोह का हेतु है सो सात्त्विक राजस तामस ऐसे तीन प्रकारका है ॥ ३२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

स कुतो निवर्तते आत्माज्ञाननिवृत्तिपर्यन्तमित्यभिप्रायेणाऽऽह । आत्मा परिज्ञानमय इति । ननु कथं मोहमयत्वं विकल्पस्याहंकारस्य वा कोऽप्यस्त्यत्वाङ्गीकारात् अत्राऽऽह । विवाद इति । अयं भिदा अर्थनिष्ठा विवादोऽत्यात्मा परिज्ञानमय इत्यन्वयः यद्वा विवादः सर्वोऽपि भिदाऽर्थनिष्ठ एव

उद्धव उवाच ॥

त्वत्तः परावृत्तधियः स्वकृतैः कर्मभिः प्रभो ! ।
उच्चावचान्यथा देहान् गृह्णन्ति विसृजन्ति च ॥ ३४ ॥
तन्ममाख्याहि गोविन्द दुर्विभाव्यमनात्मभिः ।
नह्येतत्प्रायशो लोके विद्वांसः सन्ति वञ्चिताः ॥ ३५ ॥

श्रीभगवानुवाच ॥

मनः कर्ममयं नृणामिन्द्रियैः पञ्चभिर्युतम् ।
लोकाल्लोकं प्रयात्यन्य आत्मा तदनुवर्तते ॥ ३६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु वस्तुमात्रनिष्ठः सन्नः परस्परं युक्तिभिरेवं भेदस्य निराकरणात्मोहमयत्वं सिद्धमिति ननु यदहंकारो विकल्पश्च तत्कृत अकस्माद्धि तन्निवृत्तिप्रयासेन तत्राऽऽह । व्यर्थोऽप्यर्थरहितोऽपि स्वरूपभूतात्मत्तो बहिर्मुखानां नैवोपरमेत् प्रत्युत तत्कृतः कर्मभिरुच्चनीचदेहेषु संसरन्तीति ॥ ३३ ॥

तत्र पृच्छति । त्वत्त इति । व्यापकस्यात्मनो देहाद्देहान्तरगमनमकर्तुः कर्माणि नित्यस्य च जन्ममरणादीनि कथमिति भावः ॥ ३४ ॥

एतद्विद्वांसो न सन्ति हि यस्मात्त्वन्मायया वञ्चिता मोहिताः ३५

लिङ्गशरीराध्यासेन सर्वं घटत इत्युत्तरमाह । मन इति । प्रधानत्वेन पञ्चभिरिति निर्देशोऽन्येषामप्युपलक्षणार्थम् देहाद्देहान्तरं प्रति याति तदाऽऽन्य एवाऽऽत्मा तन्मनोऽनुवर्तते अहङ्कारेणानुगच्छति ॥ ३६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपनी टिप्पणी ।

सोऽहङ्कारः आत्माज्ञानविलसितत्वादात्मस्वरूपाऽज्ञानेन रचितत्वात् । तज्ज्ञानेन आत्मज्ञानेन अहङ्कारः आत्मापरिज्ञानमयः आत्माऽज्ञानविलसितः । मोहमयत्वमज्ञानविलसितत्वं कैश्चिन्मीमांसकसांख्यादिभिः । पूर्वार्धेऽपरभ्याहारः । आत्मन्यादेशवृत्तिगौरवमतो यद्वेति । अतो वस्तुमात्रनिष्ठत्वाभावात् । परस्परयुक्तिभिरिति भेदो नाम वस्तुनः स्वरूपं, तद्धर्मो वा आद्य इत्तः कर इति घटपटो भेद इति पर्यायापत्तिः । द्वितीये भेदस्यापि भेदस्य तद्धर्मत्वात् पुनस्तस्यापीत्यनवस्थेत्यादियुक्तिभिः । तन्निवृत्तिप्रयासेन अहङ्कारस्य विकल्पस्य च निवृत्तिसाधनश्रमेण प्रत्युतेत्यव्ययं वैपरीत्ये तत्कृतैः अहङ्कारकृतैः ॥ ३३ ॥

त्वत्त इति युग्मकम् । तत्र बहिर्मुखानां संसरणे । एतद्विद्वांसः व्यापकस्य कर्तुः संसरणं कथमित्यत्र सिद्धान्तरहस्यम् ॥ ३४ ॥ ३५ ॥

सर्वव्यापकस्यापि देहाद्देहान्तरगमनमकर्तुः कर्म नित्यस्य जन्ममरणादिकं च अन्येषां प्राणबुद्धिकर्मेन्द्रियाणाम् । ततो मनःप्रधानाल्लिङ्गशरीराद्भिन्नः । मुखं कर्ममयं कुर्वद्रूपम् । यथाऽऽकाशस्य विभुत्वेन गमनासम्भवेऽपि घटाद्युपाधिगमनेनाकाशोऽपि गच्छन्निव प्रतीयते तद्वदत्रापीति भावः । वैष्णवानामणुमते तयोरपि गमनं निरीहस्य न सम्भवति इति आक्षेपः उत्तरन्तु यथा स्थितमेव ॥ ३६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इन्द्रियैरिति । भूतसूक्ष्माणामप्युपलक्षणं लोकाल्लोकान्तरं शरीराच्छरीरान्तरम् ॥ ३६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यत एवमतो देहादत्यन्तविलक्षण एवात्मेत्याह । आत्मेति । परिज्ञानमयः परितः कार्त्स्न्येन ज्ञानस्वरूपः परिशब्देन प्रदेशभेदेनापि जडत्वव्यावृत्तिः देहस्तु परितो जड इति भावः । विपादः अहम्प्रत्ययेन सर्वैः सम्प्रतिपन्नः परितो ज्ञानमय इत्यनेनैकरूपत्वलाभात्तस्य विकाराभावप्रयुक्तत्वात्तत्प्रयुक्तं सदाऽस्तिशब्दव्यपदेश्यत्वं देहस्य तु अचेतनपरिणामात्मकत्वे पूर्वपूर्वविकाराणामुत्तरोत्तरेष्वभावाभासितशब्दव्यपदेश्यत्वं तथा तत्तद्वस्थाविषयास्तिनाऽस्तिव्यपदेश्यत्वञ्च व्यनक्ति तदाह । अस्तीति नास्तीति भिदार्थनिष्ठः नास्तीत्यस्य व्यपदेश इति शेषः उभयविधो व्यपदेशः भिदार्थनिष्ठः भिदया भेदेनावस्थितो योऽर्थः देवमनुष्यादिशरीररूपस्तन्निष्ठस्तद्विषय इत्यर्थः।अस्तीति नास्तीत्येवंरूपो भेदव्यपदेशः अर्थनिष्ठः देवमनुष्यादिदेहरूपार्थनिष्ठ इति भावः यद्वा परिज्ञानमय आत्मा देहविलक्षणोऽस्ति नास्तीति विवादमात्रम् अस्त्येवेत्यर्थः भिदास्वर्थनिष्ठः लिङ्गव्यत्यय आर्षः अर्थनिष्ठ इत्यनेनात्मस्वरूपानिष्ठस्तन्निष्ठतया प्रतीतिस्तु भ्रम इति सूचितं स च स्वात्मयाथात्म्यसाक्षात्कारादेव निवर्तनेऽन्यथा तु न निवर्तते इत्याह । व्यर्थ इति । व्यर्थोऽर्थशून्योऽप्यात्मन्यविद्यमानोऽपि स्वस्य बोधः साक्षात्कारो यस्मात् तस्मात्त्वत्तः परावृत्ता विमुखा धीर्येषां तेषां पुंसां नैवोपरमेत् किन्त्वनुवर्तत एवेति भावः ॥ ३३ ॥

एवं भगवद्विमुखानां देवमनुष्यादिदेहसम्बन्धवियोगरूपसं-

[1]ध्यायन्मनोऽनुविषयान् दृष्टान् वाऽनुश्रुतानथ ।
उद्यत्सीदत्कर्मतन्त्रं स्मृतिस्तदनुशाम्यति ॥ ३७ ॥
विषयाभिनिवेशेन नाऽऽत्मानं यत्स्मरेत्पुनः ।
जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः ॥ ३८ ॥
जन्म त्वात्मतया पुंसः सर्वभावेन भूरिद ! ।
विषयस्वीकृतिं प्राहुर्यथा[2] स्वप्नमनोरथः ॥ ३९ ॥
[3]स्वप्नं मनोरथं[4] चेत्थं प्राक्तनं न स्मरत्यसौ ।
तत्र पूर्वमिवाऽऽत्मानमपूर्वं चानुपश्यति ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रकारं ब्रूहीत्यर्थः । अनात्मन्यात्मबुद्धिभिर्बहिर्मुखैरविद्वद्भिर्मायावितुमशक्यं किं पुनर्बोद्धुमित्यर्थः । ननु लोके विज्ञा बहवः कथमुक्त एवैतत् प्रष्टव्यमत आह । नहीति त्वन्मायया मोहिताः ॥ ३४ ॥ ३५ ॥

मनो मनःप्रधानं सूक्ष्मशरीरमेव लोकाल्लोकान्तरं याति कर्म कर्माधीनम् आत्मा जीवोऽन्यस्ततो भिन्नोऽपि तदुपाहितत्वादेव तत् सूक्ष्मशरीरमनुवर्त्तते अनुगच्छति ॥ ३६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ पुरुषेश्वरयोरत्यन्ताभेदं पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपीति वाक्येन प्राप्तं प्रसङ्गान्निराकरोति । आत्मा जीवः परमात्मनोऽंशः स अंशत्वादवच्छिन्नस्वरूपेण भिन्नोऽपि अंशिनिरपेक्षस्थितिप्रवृत्त्याद्यभावादभिन्नः "अंशो नानाव्यपदेशादन्यथा चापि" इत्यादिन्यायात् एवं भूतस्य परमेश्वराद्भिन्नस्यैवाभिन्नस्य आत्मनः यदपरिज्ञानं तन्मय एव कः पुरुषेश्वरयोर्भिदा भेदरूपो योऽयं त्वदसृष्टः अस्तीति नास्तीति विवादः ननु यथार्थे त्वन्मतमाश्रित्येमं विवादं कुतो न त्यजन्तीत्यत्र मत्पराङ्मुखत्वान्मम मतं न जानन्त्यतो न त्यजन्तीत्याशयेनाह । अर्थोऽपीति । आलोकात् प्रलयकालपर्यन्तम् परावृत्तधियां बहिर्मुखानां अर्थोऽपि निरर्थोऽपि केवलं भेदवादः केनचाभेदश्च नैवोपरमेत ॥ ३३ ॥

भगवत्पराङ्मुखबुद्धित्वेन तेषां जन्ममरणप्रवाहलक्षणः संसार एव भवतीति सूचितं तत्र पृच्छति । त्वत्त इति । यथा गृह्णन्ति विसृजन्ति च तन्ममाचक्षीहीत्युत्तरेणान्वयः ॥ ३४ ॥

एतद्विद्वांसः प्रायो बहुधा न हि सन्ति हि यतो वञ्चिताः त्वन्मायया इति शेषः ॥ ३५ ॥

मनः कर्ममयं कर्मप्रधानं फलोन्मुखकर्मप्रेरितम् पञ्चभिरित्युपलक्षणं पञ्च तन्मात्राणां पञ्चकर्मेन्द्रियाणां च मनः प्रधानं लिङ्गशरीरमित्यर्थः । लोकात्स्थूलदेहाल्लोकान्तरं देहान्तरं प्रयाति तर्हि तदेवात्मा किं नेत्याह । अन्य इति । तल्लिङ्गशरीरमेवानुवर्त्तते यथा ग्रामाद्ग्रामान्तरं रथः प्रयाति रथी तमनुवर्त्तते तद्वत् ॥ ३६ ॥

---

आत्मा जो है सो तो ज्ञान स्वरूप है उस के विषय में अस्ति नास्ति ऐसा सब लोगों का विवाद रहता है और उस के अर्थ में भेदभी है जिन लोगों की बुद्धि मेरे से बहिर्मुख है उन का यह विवाद मिटता नहीं है ॥ ३३ ॥

उद्धव उवाच हे प्रभो ! तुमारे से जिन की बुद्धि बहिर्मुख है वे लोग जैसे ऊंच नीच शरीरों को धारण करते हैं और छोडते हैं ॥ ३४ ॥

हे गोविन्द ! सो बात आप मेरे से कहो ये जिस को अज्ञानि लोग नहीं जान सकते हैं इस के जानने वाले पंडित नहीं हैं जो हैं सो तुमारि माया के भुलाये भये हैं ॥ ३५ ॥

श्रीभगवानुवाच मनुष्यों का जो कर्म मय मन है सूक्ष्मशरीर सो पांच इंद्रियों से युक्त है वह लोकों से लोकांतर को जाता है उसी के पीछे आत्माभी जाता है ॥ ३६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु मनसोऽपि पूर्वदेहवियोगो देहान्तरयोगश्च कथं भवतीति चेत्स्मृतिवियोगयोगाभ्यामिति वक्तुं तयोः कारणमाह । ध्यायदिति । कर्मतन्त्रत्वात्कर्मोपस्थापितान् दृष्टान् वा अनुश्रुतान् वैदिकान् विषयाननुध्यायत् अथानन्तरं ध्यायमानेषूद्यदाविर्भवत्पूर्वं विषयेषु च सीदल्लीयमानं भवति तदनन्तरं तस्य स्मृतिः पूर्वापरानुसन्धानं नश्यति ॥ ३७ ॥

ततः किमत आह । विषयेति । कर्मोपस्थापितदेवादिदेहात्यन्ताभिनिवेशेनाऽऽत्मानं पूर्वदेहं पुनर्न स्मरेदिति यत्सेयं यातनादिदेहाभिनिवेशेन वा हर्षविषादहेतोः पूर्वदेहस्यात्यन्तविस्मृतिरहङ्कारनिवृत्तिस्तदभिमानिनो जन्तोर्जीवस्य मृत्युरुच्यते न तु देहनाशः ॥ ३८ ॥

जन्म तु विषयस्य देहस्यात्मतया स्वीकृतिमभिमानं प्राहुर्न तु देहस्योत्पत्तिः न च पुत्रादिदेहवत्प्रीत्यतिशयमात्रेण किं तु सर्वभावेनाभेदेन अभिमानमात्रेणोत्पत्तिमरणयोर्दृष्टान्तद्वयम् यथा स्वप्नश्च मनोरथश्चेत्यर्थः ॥ ३९ ॥

दृष्टान्तौ विवृणोति । स्वप्नमिति । तत्र वर्त्तमाने स्वप्नादौ पूर्वं

---

१ ध्यायमानोऽनु इति वीर०पाठः २ स्वप्नः ३ तस्मादिति शुकपक्षीय०पाठः ४ चार्थ वि०पाठः

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इदानीं जन्म रूपयति। जन्मेति। पुंसो देहादिष्वहं ममेद-मित्यात्मतयात्मीयत्वेन सर्वभावेन सर्वथेत्यर्था समस्तधर्माभि-मानेन विषयस्वीकृतिं देहाभिमानं जन्म प्राहुरित्यन्वयः। देहा-दिस्वयं स्वकीयश्च न भवति परमात्माधीनत्वादिति तुशब्देन विशेषेणार्थं उदाहरति। यथेति। आप्रादिदामित्ययं स्वप्नो यथा अविद्यमानो यथा च मनोरथविषयोऽत्यविद्यमानो न त्वनिर्वचनीय एवस्यापि जीवस्यासौ जन्ममृतियुक्ते इति भावः। स्वप्न इति पाठे स्वप्ने जायमानो जाग्रत्प्रत्ययो यथा अविद्यमानइत्यर्थः ॥३९॥

अत्यन्तविस्मृतिं मोहादरणा रूपयति। स्वप्नमिति। यथा-स्वप्नादेकस्थितः स्वप्नरूपं मनोरथं च प्राक्तनमर्थं तद्विषयं चासौ स्वप्नादिदृक् न स्मरति तथा तत्र देहान्तराभिमाने सति पूर्वं पुरातनमात्मानं देहं न स्मरति इत्यन्वयः केषां चिन्महात्मनां स्मरणं सम्भवतीत्यविस्मरणे अस्मरणे कारणमाह। अपूर्वमिति चाप्राप्त एवार्थं अपूर्वं पश्चात्तनं नूतनं देहमेवानुपश्यति यस्तत इति यद्वा विषयाभिनिवेशमेव रूपयति। स्वप्नमिति। प्राक्तनं स्वप्नं मनोरथं च यथा न स्मरति असौ तथा प्राक्तनजन्मा-द्यनुभूतमर्थं विषयं च न स्मरति किं तत्र निमित्तमत्राह। तत्रेति। तत्र देहान्तरप्राप्तौ पूर्वममादिमेवात्मानम् अपूर्वं सादि-मिवानुपश्यति इति यस्मात्तस्माद्विषयाभिनिवेश एव कारण-मित्यर्थः ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

जन्ममिति। तैः तऽत्र पूर्वं चेत्यादौ पूर्वं चापूर्वमिवेत्यन्वय इत्येव वक्तव्यम् ॥ ४०—४४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

एवं सर्वदैव सूक्ष्मशरीरानुवर्त्तिनो जीवात्मनः स्थूलशरी-रेण वियोग एव मृत्युः संयोग एव जन्मेति ब्रुवंस्तयोरपि स्थूलवियोगसंयोगयोः सर्वथा स्मृतिवियोगस्मृतिसंयोगमेव कारणमित्याह। ध्यायद्विति। कर्मतन्त्रं कर्माधीनं मनः कर्मोपस्थापि-तान् दृष्टान् विषयान् मर्त्यलोकस्थान् परदारादीन् श्रुतान् देवलोक-स्थान् तानेव ध्यायन् सन् अथ ध्यानानन्तरं ध्येयेषु तेष्वेव उद्यत्-तदाकारीभवत् सीदत् पूर्वध्यातेभ्यो विषयेभ्यः सर्वथा विच्युती-भूतं भवति तदनु तदनन्तरं तस्य स्मृतिः पूर्वापरानुसन्धाने न-श्यति ॥ ३७ ॥

ततः किमत आह। विषयेति। कर्मोपस्थापितेषु देवादि-देहेषु यातनादेहेषु वा अत्यन्ताभिनिवेशेन आत्मानं पूर्वदेहं पुनर्मनो न स्मरेदिति यत् स मृत्युः। स्थूलदेहवियोगः। अत्यन्ता आत्यन्तिकी पूर्वदेहविषया विस्मृतिर्यतः सः। कस्य-चिद्धेतोः प्रारब्धकर्मसमाप्तिरित्यर्थः ॥ ३८ ॥

जन्मत्विति। विषयस्य कर्मोपस्थापितदेहस्य सर्वभावेन आत्म-तया स्वीकृतिम् आत्यन्तिकमभिमानमेव जन्म प्राहुः। अभिमा-नमात्रेणोत्पत्तिमरणयोर्दृष्टान्तद्वयम्। यथा स्वप्नश्च मनोरथश्च सः। सर्वोऽपि द्रष्टा विभाव्यैकधर्मवतीत्येकवचनम् ॥ ३९ ॥

दृष्टान्तौ विवृणोति। स्वप्नमिति वर्तमानो देहस्थो जीवो यथा प्राक्तनं स्थूलदेहं न स्मरति इत्थमेव वर्तमानस्वप्नस्थो मनो-रथस्थो वा जीवः प्राक्तनं स्वप्नं मनोरथं वा न स्मरति कश्चित् कदाचित् स्वप्ने पूर्वकं स्वप्नं च स्मरतीति चेत् कश्चित् कदाचित् जातिस्मरश्च पूर्वदेहं स्मरतीति न सर्वथा नियमः किञ्च तत्र वर्तमानदेहस्थो जीवः पूर्वसिद्धमेवात्मानम् अपूर्वमिव अनुपश्यति अहं चातुर्वार्षिक इति साप्तवार्षिक इति इतः पूर्वमहं नासमिति प्रतिक्षणमात्मानं जानातीत्यर्थः ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ननु पूर्वदेहादिकमात्मा कुतो न स्मरतीत्यत आह। ध्यायदिति तस्यात्मनः कर्मतन्त्रं मनः कर्मोपस्थापितान् दृष्टान्वामोक्ष्यतया-श्रुतान् वा विषयान् अनुध्यायन् ध्यायमानेषु विषयेषु उद्यद् आविर्भवत् अन्यत्र सीदत् स्मृतिहीनं भवति एवमेकस्मिन्नेव जन्मनि विषयस्मृतिरनुपपद्यते किमुत जन्मान्तरीयदेहादिवि-षयेत्यर्थः ॥ ३७ ॥

ननु आत्मा देहाद्देहान्तरं गच्छति चेत्तर्हि देवदत्तो मृतः जातः इति लोकप्रसिद्धयोर्जन्ममरणयोः को विषय इतिशङ्कां निराकरोति। विषयेति द्वाभ्याम्। यत् यः जन्तुः देही विषयाभिनिवेशेन अहमित्यहङ्कार विषये देहे योऽभिनिवेशः देहोऽहमित्याग्रहस्तेन आत्मानं देहेन्द्रियादि-विलक्षणं न स्मरेत् तस्य जन्तोः पुनः कस्यचिद्धेतोः विस्मृतिं देहवियोगो मृत्युरित्यर्थः ॥ ३८ ॥

जन्मेति। जन्म तु विषयस्य देहस्य आत्मतया स्वीकृतिं प्राहुः पूर्वदेहादिस्मृतिविनाशकं देहान्तरात्माभिमानं जन्म प्रथे-नमेतं प्राणा अभिसमापन्ति अन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वेत्याद्याः श्रुतयः प्राहुरित्यर्थः। पृथग्भूतस्यापि पुत्रादेरात्मतया स्वीक-रणं सम्भवत्यत आह। सर्वभावेनेति। सम्पूर्णेन देहात्मभावे-नेत्यर्थः दृष्टान्तमाह। यथा स्वप्नमनोरथ इति। स्वप्ने मनोरथः रूपान्तराभिनिवेशः पूर्वरूपस्मृतिनिनाशको यथा तद्वदित्यर्थः ॥३९॥

पूर्वदृष्टान्तानुवादपूर्वकं दृष्टान्तान्तरमाह। स्वप्नमिति। असौ पुमान् स्वप्नं मनोरथं च प्राप्य प्राक्तनमात्मानममुकनामामुकनाम-रूपगोत्रोऽहमासमिति न स्मरति तत्र स्वप्ने मनोरथं च पूर्व-मिव अपूर्वमात्मानं पश्यति चकरात्पूर्वगृहादिवदपूर्वं गृहादि-कमपि पश्यति ॥ ४० ॥

---

### भाषा टीका।

पुरुष का मन विषयों का ध्यान करता रहता है तब देखे सुने विषयों के ध्यान करने से वह मन कभी कार्यों में उद्यत होता है कभी लय होजाता है तब ऐसे कर्म लय होने से उसकी स्मृति नष्ट होजाती है ॥ ३७ ॥

विषयों के अत्यन्त अभिनिवेश होने से अपने को फिर नहीं स्मरण करता है ऐसे इस मनुष्य को किसी हेतु से अत्यन्त विस्मरण वाला मृत्यु होजाता है ॥ ३८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ऽवस्थान्तरदेवत्वमनुष्यत्वशोकभयादिहेतुः असज्जनकृत यथा असत्पुत्रोत्पादकः पुरुष इव असत्पुत्रो ह्यनर्थहेतुः एवं बाह्यान्तर्भेदानुभावो ह्यनर्थहेतुः असत्कन्युत्पादकतुल्यं मन इत्यर्थः ॥ ४१ ॥

नित्यदेति । भवन्ति परिणामान्तरं यान्ति न भवन्ति पूर्वावस्थां त्यजन्ति ॥ ४२ ॥

कालकृतानां संस्थानां सूक्ष्मतया दुर्दर्शत्वे दृष्टान्तमाह । यथेति कालकृताः येन कृताः तेनेति पूर्वेणान्वयः । अर्चिषां धीः अर्चिर्विषया सोऽयं दीप इति धीः स्रोतोविषया नदीयं जलमिति धीश्च यद्वन्मृषायुषाम् अस्थिराणां नृणां मनुष्यशरीराणां गीः मनुष्यशरीरगोचरा सोऽयं पुमानिति धीश्च तद्वत् भ्रान्तिमूलेत्यर्थः ॥ ४३ ॥ ४४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलं मृति विषयविस्मृतिस्वीकृतिहेत्वोर्मृतिजन्मनोर्जन्मान्तरीयस्मृतिविघातकत्वमेवापि त्वनर्थहेतुत्वं चेत्याह । इन्द्रियेति । वसत्येकरूपतयावतिष्ठते इति वस्त्वात्मस्वरूपं तस्मिन् इन्द्रियायतनसृष्टयन्द्रियायतनमिन्द्रियाश्रयं शरीरं तस्य सृष्टयोत्पत्त्याविदं त्रैविध्यं शरीरमिन्द्रियायतनान्तःकरणं चेति त्रैविध्यं भाति तद्बहिरन्तर्भिदाहेतुः देवत्वमनुष्यत्वबालत्वयुवत्वलोभभयादिभेदरूपानर्थहेतुः जनोऽसज्जनकृद्यथाऽसज्जनकृदसत्पुत्रोत्पादकः असत्पुत्रो ह्यनर्थहेतुरेवं बाह्याऽभ्यन्तरभेदकृतत्रैविध्यमप्यनर्थहेतुरसत्सुतोत्पादकतुल्यं देहसम्बन्धप्रयुक्तं त्रैविध्यमित्यर्थः ॥ ४१ ॥

वस्तुतीत्यनेन शरीरस्य सततं परिणामित्वं सूचितं तत्स्वरूपमेवाह । नित्यदेति । अङ्ग हे उद्धव ! भूतानि भूतसंघातपरिणामात्मकानि शरीराणि नित्यमभवन्ति परिणामान्तरं यान्ति न भवन्ति पूर्वावस्थां त्यजन्ति तत्पूर्वावस्थात्याग उत्तरावस्थास्वीकारश्चोभयं कालसूक्ष्मत्वान्न दृश्यते ॥ ४२ ॥

कालकृतानामवस्थानां सूक्ष्मतया दुर्दर्शत्वे दृष्टान्तमाह । यथेति । अर्चिषां यथा पूर्वपूर्वमत्यंशयद्ज्वालासंयोगजानामपायउत्तरोत्तरवर्धनयद्ज्वालासंयोगजानामागमश्च सूक्ष्मत्वान्न गृह्यते यथा स्रोतसां प्रवाहाणां पूर्वपूर्वजलापाय उत्तरोत्तरजलागमश्च न गृह्यते यथा वा वनस्पतेः फलानां प्रतिक्षणपरिणामो न गृह्यते तथा सर्वभूतानां कालकृता वयोवस्थादयश्च सूक्ष्मत्वान्न गृह्यन्त इत्यर्थं नित्यदेत्यनेनैकैकस्यामपि बाल्याद्यवस्थायां प्रतिक्षणपरिणामित्वं सूचितम् ॥ ४३ ॥

कुतस्तर्हि स एवायं दीपः स एवायं पुमानित्याद्यवस्थायैर्यगोचरबुद्धिशब्दावित्यतः सादृश्यात्प्रयोगवशात्तानपरमार्थौ स्त इति सदृष्टान्तमाह । यथेति । यथार्चिषां पूर्वपूर्वज्वालानां तत्सदृशानामुत्तरज्वालानां च भेदमगृहीतवतः पुंसः कस्य भ्रमात्मकप्रत्यक्षमूलौ स एवायं दीप इत्यर्चिः समुदायगोचरौ बुद्धिशब्दौ स्तः ज्वालाभेदानुमानेन ज्वालैक्यप्रत्यक्षोपमर्दौ भास्वभूतप्रकाशिकयोः प्रयासितः यथा च स्रोतसां सम्बन्धिजलं तदेवेदमिति बुद्धिशब्दौ स्तः तथायं पुमान् स एव बाल इत्यादि बुद्धिः शब्दश्च मृषायुषामस्थिरायुषां नृणां मृषा भ्रान्तिमूलौ इत्यर्थः ॥ ४४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्र जीवस्यानादिनित्यत्वं देहस्य सादित्वमनित्यत्वं तत्राभिमानाभिमानलक्षणौ जन्ममृती इत्युक्तं तत्र जीवस्यानादिनित्यत्वे युक्तमुक्तं तदेव कथमत्राह । इदशोति । वस्तुनि जीवतत्त्वे विज्ञाय विचारेण ज्ञाते सति जीवस्यानादिनित्यत्वं ज्ञायते तथाहि ईदृशः इदानींतनकालवर्त्यनादिकालवर्तीत्याद्य पूर्वस्मात्कालवर्ती चायमेव सः अतीतकालसम्बन्ध इति त्रैविध्यं जातस्य त्रिकालवर्तित्वं भाति तदेवानादिनित्यत्वं देहस्य यद्यनादित्वो युक्तमुक्तम् ईदृशायात इत्यत्र यासि इति दीर्घस्य लोपो वक्तव्यः छेपेऽदीर्घश्च[1] इति यत् ज्ञानमन्तरेण पुरुषार्थो न स्यात्तत्र त्रिपादप्रवर्तनीयामिति ज्ञापनाय प्रयुक्तदीर्घो लुप्यत इति सूत्रादत्रा[2] तदिति प्रयोगाच्च अनित्यशरीरसम्बन्धेन जीवस्याप्यनित्यत्वमापद्यत इति तत्राह । बाहिरेति । बहिर्नारिकेलकपालवत् बाहिष्ठो देहो जीवाद्भिन्नो नारिकेलतद्वत् इत्यन्तर्वर्तिनो जीवस्य भिदा भा नित्यत्वादिविशेषस्याहेतुः आपादको न भवति । भेदो विशेषवचन इत्यभिधानं जीवस्यानादिनित्यत्वे परमात्मना अभेदः प्राप्त इत्यतो वाह । बहिरिति । बहिरन्तर्वर्तिनो हरेर्भिदा भा हेतवो दुःखादयो यस्य स बहिरन्तर्भिदा हेतुः कस्तु हरेर्भेदो जीवस्य देहाद्भेदः कथमित्यतो वाह । बहिरिति अयमेव बहिरन्तरयत्वधर्मः आत्मानात्मनोर्विलक्षणत्वे भिदाहेतुर्विशेषहेतुरित्यर्थः । देहस्यानात्मत्वं सोदाहरणमाह । जनइति यथा असज्जनोऽसज्जनकृत्प्रायोऽसज्जनोऽसज्जनं पुत्रमेव जनयतीति पितुः ज्ञानात्पुत्रदोषात्मत्वं ज्ञायते एवमनित्यो देहो नित्यं देहं जनयतीति अतो देहस्यानित्यत्वाज्जीवस्य त्रैकालिकवर्तित्वेन नित्यत्वात् देहस्यानात्मत्वमत एव जीवाद्भिन्नत्वं च भिन्नम् असाधुजन एव जीव परयोर्भेदं वक्तीति सोदाहरणमाह । जनइति । यथाऽसाधुजन एवासाधुजनं करोति न साधुः एवमासुरो जनोऽपि सन्तमभेदमसन्तं करोति अतोऽसाधुजनपरम्परादोषात्मत्वं साधुजनवाक्याज्ज्ञायत इत्यर्थः ॥ ४१ ॥

देहस्यानित्यत्वप्रकारमाह नित्यदेति । नित्यदा प्रतिक्षणं भूतानि जीवाधिष्ठितदेहा अङ्ग नो भवन्त्युपचितानि न भवन्ति च अपचितानि भवन्ति च किमिति न दृश्यत इति तत्राह । कालेनेति । उपचयापचययोः सूक्ष्मत्वाल्लिङ्गत्वाच्चक्षुषा तन्न दृश्यते ॥ ४२ ॥

तदेव सोदाहरणं वक्ति । यथेति । यथार्चिरादीनां सैवं ज्वालेत्यादिप्रतीतिः कालकृता तथा सर्वभूतानां सर्वप्राणिदेहानां वयोऽवस्था बाल्यकौमाराद्यवस्था तेन कालेन कृता ॥ ४३ ॥

नन्वस्तु कालकृतत्वमत्र विवेकः कथमित्यत उक्तमेव विवृ-

---

[1] महाव्याकरणमिदं सूत्रम् ।

[2] संहितया उच्चारणकाले उच्चारणमात्रादीर्घः पदकाले लुप्यते इत्यत्रप्रयोगं दर्शयति अभ्रात इति अभ्रातमाहुः परमं जरित्रामित्यत्र अत्र ते आहुः परमं जरित्रामिति पदच्छेदात् ।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ज्योति १ सोऽयमिति । यथा प्रतिक्षणमग्निज्वालादीनामागमापगमयोरवस्तोऽयमग्निरिति प्रत्यभिज्ञानं मृषेति मतोऽस्त्याहारः स एवायं दीप इत्यादिप्रत्यभिज्ञा मृषा तथा भूयागोभिर्मृषायुषां पुंसां केषां चिद्वाल्यशैशवाद्यागमात् केषां चिदपगमात् स एवायं पुमानिति देहविषयो व्यवहारो मृषा विवेकिनां स चायं देह इत्यादिको न मृषा स चायमिति तु ज्ञानं न मृषायं स एव तु इतिज्ञानमृषेव व्यवहितादेर्विशेषविवेकोऽयुज्यते ॥ ४४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

उपसंहरति । इन्द्रियायनस्य इन्द्रियाश्रयस्य देहस्य सृष्ट्यैव इदं त्रैविध्यं विश्वतैजसप्राज्ञत्वं वस्तूनि जीवे भाति त्रिविधं कीदृशं बहिरन्तर्भिदाहेतुः बहिर्भिदानां जागरे श्रोत्रादीन्द्रियगुणभेदानामन्तर्भिदानां स्वप्नसुषुप्त्योर्मनोबुद्धिगुणभेदानां हेतुरुत्पादकं जनो यथा असज्जनकृत् असत्पुत्रोत्पादकः इन्द्रियमनोबुद्धिगुणभिदानां निसृष्टामध्यमत्त्वात् सत्कृत एव दृष्टान्तः ॥ ४१

लोकप्रसिद्धौ जन्ममृत्यू निरूप्य प्रतिक्षणवर्तिनौ तौ सूक्ष्मौ वैराग्यार्थं निरूपयति । नित्यदा प्रतिक्षणं भूतानि शरीराणि भवन्ति उत्पद्यन्ते न भवन्ति नश्यन्ति च ननु प्रतिक्षणमुत्पत्तिविनाशौ देहानां न लक्ष्येते तत्राह । अलक्ष्यवेगेनेति सूक्ष्मत्वात् कालवेगो यथा दुर्लक्ष्यस्तथा तत्कालकृताबुत्पत्तिविनाशावित्यर्थः ॥ ४२ ॥

उत्पत्तिविनाशयोरलक्ष्यत्वेऽपि तासवस्थादिभिरेवानुमीयेते इति सदृष्टान्तमाह । यथेति । अर्चिषां परिणामादिभिः स्रोतसां गन्धादिभिः फलानां रूपादिभिर्यथा अवस्था विशेषाः कृताः कालेनेति पूर्वस्यानुषङ्गः तथैव भूतानां देहानां वयोऽवस्थादयः कौमाराद्यवस्थादयः आदिशब्देन तेजोबलकामकोशादीनि प्राणिनां भूतानि प्रतिक्षणोत्पत्तिविनाशवन्ति अवस्थाभेदवत्त्वाद्दीपज्वालावदित्यनुमानम् ॥ ४३ ॥

प्रत्यभिज्ञा तु सादृश्यावलम्बिनी भ्रान्तिरेवेत्याह । सोऽयमिति । अर्चिषां क्षणमात्रेणैव सहस्रश उद्गमापगमवतां ज्योतिः किरणानां पुञ्ज एव क्षणान्तरे सोऽयं दीप इति स्रोतसां स्रोतो युक्तजलानां क्षणमात्र एव क्रमशो दूरनतत्वेऽपि क्षणान्तरेऽपि नदीदं जलमिति प्रतीतिर्यथा तथैव कौमारे दृष्टे यौवनेऽपि सोऽयं पुमानिति तेन तत्राभेदावलम्बिनी धीर्ज्ञानं, गीर्वाक्च मृषा अविवेकविजृम्भितेत्यर्थः मृषा एतादृशाविवेकव्यापनमायुर्येषां तेषाम् ॥ ४४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

उक्तत्वात्मतया देहस्वीकारलक्षणस्य जन्मनः फलमाह । इन्द्रियेति । इन्द्रियायतनसृष्ट्या इन्द्रियाणामयनस्य देहस्य सृष्ट्या जन्मना आत्मतया देहस्वीकारलक्षणेन इदं त्रैविध्यमुत्तममध्यमाधमत्वं वस्तूनि आत्मनि भाति जनः आत्मतया देहस्वीकारकर्ता बहिरन्तर्भूतानामुपद्रवाणां भिदायाः भेदस्य हेतुर्भवति उक्तेन देहात्माभिमानेनोक्तत्रैविध्यं बाह्याभ्यन्तरोपद्रवांश्च प्राप्नोतीत्यर्थः असज्जनजनको यथा असज्जनेन हेतुभूतेन बाह्याभ्यन्तरसन्तापान् प्राप्नोति तद्वत् ॥ ४१ ॥

देहिनो देहात्माभिमानेन क्षणभङ्गुरेषु देहादिषु स्थिरत्वभ्रान्तिज्ञानादिना तन्निवृत्तिमाह । नित्यदेति सप्तदशभिः । हे अङ्ग नित्यदा प्रतिक्षणं भूतानि शरीराणि भवन्त्यवस्थान्तरं प्राप्नुवन्ति न भवन्ति पूर्वावस्थां त्यजन्ति तदुभयं सूक्ष्मत्वान्न दृश्यते ॥ ४२ ॥

एतदेव दृष्टान्तेन स्फुटीकरोति । यथेति । यथा अर्चिषां दीपादिगतानां पूर्वपूर्वज्वालानामपायः उत्तरोत्तरज्वालानामागमः यथा च स्रोतसां पूर्वपूर्वप्रवाहजलानामपायः उत्तरोत्तरप्रवाहजलानामागमः यथा च वनस्पतेः फलानां पूर्वपूर्वावस्थापायः उत्तरोत्तरावस्थागमाः कालेन कृताः न दृश्यन्ते इति दृश्यतेऽनेनैवान्वयो यथासम्भवमन्यतो बोध्यः तथैव सर्वभूतानां पञ्चभूतमयानां देहानां वयसा कालेन कृताः अवस्थाः निषेकाद्याः आदिना तत्तद्गुणादिर्भेदश्च सूक्ष्मत्वान्न दृश्यन्ते देहात्मवादिनः अनित्येषु देहादिषु नित्यभ्रान्तिर्भवतीति भावः ॥ ४३ ॥

अनित्ये नित्यभ्रान्तिमेव दर्शयति । सोऽयमिति । मृषा आत्मानात्मविवेकानुपयोगित्वेन व्यर्थमायुर्येषां तेषाम् ॥ ४४ ॥

---

### भाषा टीका।

इंद्रियों के भोग की सृष्टि से ऐसा त्रैविध्य वस्तु आत्मा में भान होता है सोइ बाहिर भीतर के भेद का हेतु होता है जैसे कि असज्जन पुत्र को पैदा करने वाला जन होता है ॥ ४१ ॥

हे उद्धव ! नित्यही सब भूत प्राणीके शरीर होते हैं और जाते हैं जिस का वेग लखा नहीं जाता है ऐसे काल के वेगसे सूक्ष्म होने से नहीं दीखता है ॥ ४२ ॥

जैसे अग्नि की ज्वाला और जल का स्रोत और वृक्ष के फल होते हैं तैसे ही सब भूतों की अवस्था भी बदलती है ॥ ४३ ॥

जैसे ज्वालाओं में अग्नि दीखती है जैसे प्रवाह में वही जल दीखता है तिसी प्रकार से मनुष्यों का वही मनुष्य है कर के मिथ्या आयुवालों की मिथ्या बुद्धि मिथ्या वाणी भी होती है ॥ ४४ ॥

---

१ सोऽयमितिश्लोके सोयं पुमानिति देहविषयकप्रत्यभिज्ञायाः भ्रान्तित्वमुक्तं तदनुपपन्नं तथात्वे देहस्य क्षणिकत्वापत्तेरिति शङ्कानिरासकत्वेन प्रवृत्ततात्पर्यामुरोधेन प्रत्यभिज्ञाद्वयं प्रदर्शयोजयामि । तथा च प्रत्यभिज्ञानावधारणानिरवधारणा चेति द्विविधा । आद्या भ्रमरूपा । जडे भेदाभेदसत्त्वात् । द्वितीयाविरोधित्वात्प्रमैव ।

मा स्वस्य कर्मबीजेन जायते सोऽप्ययं पुमान् ।
म्रियते वाऽमरो भ्रान्त्या यथाऽग्निर्दारुसंयुतः ॥ ४५ ॥
निषेकगर्भजन्मानि बाल्यकौमारयौवनम् ।
वयोमध्यं जरा मृत्युरित्यवस्थास्तनोर्नव ॥ ४६ ॥
एता मनोरथमयीर्ह्यन्यस्योच्चावचास्तनूः ।
गुणसङ्गादुपादत्ते क्वचित्कश्चिज्जहाति च ॥ ४७ ॥
आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ ।
न भवाप्ययवस्तूनामभिज्ञो द्वयलक्षणः ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु कथं देहाध्यासवतः पुंसः कर्मजन्ममरणानि सन्ति नात्मन इति व्यवस्था न हि घटते घटस्य पुरुषभेदेन सत्त्वमसत्त्वं चेति न कस्यापि वस्तुतस्तदभावादित्याह । मा स्वस्य नैवाऽऽत्मनः कर्मणा बीजभूतेन सोऽप्ययमपि पुमान् जायते म्रियते वा किन्त्वयं भ्रान्त्याऽजन्मापि जायत इवामरोऽपि म्रियत इव यथा महाभूततेजोऽग्निः काष्ठान्तरवस्थितोऽपि दारुयोगवियोगाभ्यां जन्मनाशौ प्राप्नोति तद्वत् ॥ ४५ ॥

सिद्धवत्कृत्योक्ता वयोऽवस्थाः प्रपञ्चयति । निषेको जठरे प्रवेशः गर्भस्तन्मध्ये वृद्धिः बाल्यं शिशुत्वमापञ्चमाब्दात् कौमारमाषोडशाद्वर्षात् ततो यौवनमापञ्चाशत्वारिंशतः ततो वयोमध्यमाषष्टिवर्षात् ॥ ४६ ॥

देहसम्बन्धाज्जन्ममरणादीनीत्युपपादितमर्थमुपसंहरति । एता इति । हि स्फुटम् अन्यस्य देहस्य तनूरवस्थाः गुणसङ्गात्तत्कृताविवेकात् कश्चित्परमेश्वरानुग्रहतः क्वचित्कथञ्चिज्जहाति अवस्थावतो देहस्य द्रष्टा नास्यावस्था नानीति विवेकज्ञानेन ४७

ननु तदानीं मूर्च्छितत्वेन जन्ममरणवान् देहो न दृश्यतेऽत्राऽऽह आत्मन इति । पितुर्देहस्यौर्ध्वदेहिक कुर्वताऽप्ययदर्शनात्पुत्रदेहस्य च जातकर्मणि जन्मदर्शनादात्मनः स्वस्य देहस्यापि भवाप्ययावनुमेयौ एवं च दृश्यत्वे सति भवाप्ययवतां वस्तूनां देहानामभिज्ञो द्रष्टा द्वयलक्षणो भवाप्ययधर्मको न भवति ॥ ४८ ॥

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

नेत्यारभ्य समाधानग्रन्थः । तदभावात् कर्मजन्ममरणाभावात् । रज्जुसर्पवत्तत्सत्त्वाभावादित्यर्थः । सा व्यवस्था व्यावहारिक्येव न पारमार्थिकीत्यर्थः । सोऽपि पुमान् स्वस्य कर्मबीजेन मा जायते मा म्रियते च किन्तु भ्रान्त्याऽजन्मापि जायत इवामरोऽपि म्रियत इव यथा दारुसंयुतोऽग्निस्तथेत्यन्वयः । वाशब्द इवार्थः । अमर इति अजन्मेत्यस्योपलक्षणम् ४५

सिद्धवल्लोके ज्ञातत्वादनुवादत्वादित्यर्थः ॥ ४६ ॥

कथञ्चिदित्यध्याहृतम् ॥ ४७ ॥

तदानीं जन्ममरणसमये । एवं अनुमानप्रकारेण दृश्यत्वे सति । जन्ममरणवतः स्वदेहस्यापि दृश्यत्वे सति ॥ ४८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अथ शरीरात्पूर्वमपि विद्यमानः पुमान् भ्रान्त्या जायते आत्मनः उत्पत्तिर्भ्रान्तिसिद्धेत्यर्थः । एवमुत्तरत्रापि यथाग्निरिति दारुगताग्नेरपि पूर्वं विद्यमानत्वान्मथनेनाभिव्यक्तिरेव नोत्पत्तिः तद्वत् ४५-४६

मनोरथमयीः मनोरथो मनोवृत्तिः यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरं तं तमेवैति कौन्तेयेति न्यायाद्वासनाप्रत्ययानुगुणा इत्यर्थः ॥ ४७ ॥

आत्मन इति । अद्वयलक्षणः जन्ममरणाद्यवस्थाभेदविलक्षणः स्वभावाप्ययावस्थानामनभिज्ञः स जन्ममरणानां न प्रत्यभिज्ञाता तदानीं मोहग्रस्तत्वात् अतः स्वभवाप्ययावनुमेयौ कथमित्यत्राह । पितृपुत्राभ्यामिति । पुत्रोत्पत्तिदर्शनात्स्वोत्पत्तिरनुमेया पितृमरणान्मरणमनुमेयमित्यर्थः ॥ ४८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं शरीरस्य सततपरिणामित्वमवस्थान्यथेयंगोचरबुद्धिविषयत्वाभ्रान्तिमूलत्वं चोक्तम् अथात्मनो जन्माद्यवस्थात्वयं तद्विषयप्रतीतेर्भ्रान्तिमूलत्वं चाह । मा स्वस्येति । स्वस्य देहस्य कर्मबीजेन देहोत्पत्तिनिमित्तकर्माख्यबीजेन सोऽपि देहात्माभिमान्यपि पुमान् जीवो मास्तु देहवत्सततपरिणामस्वभावो न भवतु तथापि भ्रान्त्या जायते म्रियते च आत्मन उत्पत्तिमरणे भ्रान्तिसिद्धे इत्यर्थः । तत्र हेतुत्वेन पुमांसं विशिनष्टि । अज अमर इति । च तद्यजस्य अनिरमरस्य मृतिश्च विद्यत इत्यर्थः । देहोत्पत्तेः पूर्वं तद्विनाशात्पश्चाच्चात्मनो विद्यमानत्वादिति भावः तत्र दृष्टान्तमाह । यथाग्निरिति । यथा महाभूततृतीयपरिणामात्मकस्याग्नेर्दारुसंयुक्तस्य मथने नोपलब्धिमात्रं न तु दारुणा सहोत्पत्तिविनाशौ तत्प्रतीतिस्तु भ्रान्तिमूला तद्वत् ॥ ४५ ॥

वयोऽवस्थाश्च दृष्टुका अवस्था दर्शयति । निषेकेति । निषेको

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अतो मित्रैर्मर्त्यैः सह विग्रहोऽसतां भवतीत्याशयेनाह । तमिति । अयमक्षरार्थः अत्र जीवराशौ केचिद्विमूढास्तामसाः पूर्वापरविहितनमित्तात्तयोर्मनसोऽस्तं तामसमनोलक्षणं शत्रुं सुखविरोधिनं न विजित्य मित्रैर्मर्त्यैरसद्विग्रहं कुर्वन्ति । कीदृशं शत्रुं दुर्जयं दुरेन पाविना कालनेमिना जितत्वाद्वशीकृतत्वाज्जेतुमशक्यत्वादत एवासह्यवेगं वायुवन्मुष्टिग्रहणायोग्यमरुन्तुदं सततिहितलक्षणवत् दुःखकरम् अनेन शत्रुशब्दो विवृतः विष्णुप्रसादेन विजयीत्याह । उदासीनेति । विष्णुभक्तादुदासीनानां रिपुं न तु भक्त्या तदुपासतो यतमानानामित्यर्थः । प्रस्तुतसात्त्विकमनो विहाय तामसमनःपरामर्शः कथं युज्यत इतीचमाशङ्क्य "एकस्यानभिपत्ये तु भिन्नानामपि युज्यतेऽभेदेन परामर्शः सादृश्ये चापि वस्तुनो" इत्यनेनापि परिहर्तव्या यद्वा तममनतं तमोऽभिमानिनं कालनेमिनं न विजित्य मित्रैरसद्विग्रहं कुर्वन्ति । कीदृशं तं शत्रुमनेन शत्रुमजित्वा मित्रकलहो बालकलहवत् परिहासहेतुरित्युक्तं भवति ॥ ४९ ॥

दुष्टाभिमानलक्षणोपचितशक्तितामसमनोनिर्मितदेहाभिमानमात्रलक्षणोत्पन्नमिथ्याज्ञानेन जीवस्य नित्यनिरयपातहेतुत्वात् स एव जेतव्य इति भावेनाह । देहमिति । इदमित्यव्ययं मनोमात्रं मनसा निर्माणमुपगतं देहं गृहीत्वा ममेदमहमिति स्वात्मन्यध्यासेन एव देहोऽहमित्यनात्मनः आत्मभ्रमेणान्योऽहं देहोऽयमित्यपि भ्रमेणाहमन्य इति आत्मनोऽनात्मभ्रमेण मिथ्याज्ञानेनाभ्यधियोऽस्तङ्गतयथार्थज्ञाना मनुष्याः दुरन्तपारे तमसि पतित्वा भ्रमन्ति पुनः पुनर्दुःखसमुद्र एव मग्ना वर्तन्त इत्यतो बुद्धिमता तज्जय एव प्रयतितव्यमिति भावः । देहमात्रं स्वमात्मानं यः पश्यति "अन्धे तमसि मग्नस्य नोत्थानं तस्य कुत्रचि"दिति वचनात् मिथ्याज्ञानिनामन्धन्तमो नियतमिति ज्ञायते ॥ ५० ॥

एवं मनसः सुखदुःखकारणत्वमुक्तं तत्र तर्हि तस्य प्रतीयमानं सुखदुःखकारणत्वमभिमाननिमित्तमेवेति जानता स्वकृतकर्मफलज्ञानेन पुरुषेण सोढव्यं तत्र कोपो न कार्य इत्याह । जन इत्यादिना ग्रन्थेन । अस्य जीवस्य सुखदुःखयोर्हेतुर्जनः परदेहश्चेद्यदि तर्हि अत्र देहे वर्तमानस्य देहव्यतिरिक्तस्यात्मनो निर्मुक्तकपालमालिकवत् स्थितस्य किं स्यात् किमपि दुःखं स्यात्तर्हि कस्य तदत्राह । हीति । तद्दुःखं विवेकेन विचारिते सति । भौमयोः पृथिवीकार्ययोस्ताड्यताडकयोरेव हि यस्मात्तस्मात्तदात्मनोऽभिमानकृतं दुःखमिति । जानन्नपि मध्ये कस्मै कुप्येदित्यन्वयः तत्रोदाहरणम् । जिह्वामिति । स्वैर्दद्भिः स्वदन्तैः तस्यां जिह्वायां वेदनायां सत्यामनेन देहस्याचेतनत्वेनाभिमानजन्यं दुःखमित्युक्तं भवति । "जनशब्दः स्मृतो जीवे क्वचिद्देहे च वर्तते" इति वचनाज्जनशब्दोऽत्र देहवाची ॥ ५१ ॥

देहस्याचेतनत्वेन दुःखहेतुप्रवृत्त्ययोगात् अभिमानस्य च पराधीनत्वेनायुक्तमुक्तं किन्तु देवतायाः सर्वस्मात्प्राधान्येन तत्कर्तृत्वमुचितमित्यत्राह । दुःखस्येति । यदि दुःखस्य हेतुर्देवतेत्युच्यते तद्वचनमसत् विचारिते न घटते तत्राह । विकारयोः विकाराभिमानिनोर्देवयोः सकाशादुत्पद्यमानदुःखमभिमाननिमित्तमेव तत्र निरभिमानस्यात्मनस्तेन किं स्यादतः स्वाभिदेवात् प्रतिकोपो न कार्य इति भावः । तत्रोदाहरणम् । यदङ्गमिति । यदा स्वदेहे 'विकाराभिमानिन्या देवताभिमन्यमानहस्ताद्यङ्गेन चक्षुराद्यङ्गं कश्चिद्विहन्यते तदा तत्सोढव्यमेव अन्यथा पुरुषः कस्मै कुप्येत हस्तादेरकारणत्वाद्योग्यकोपादेर्मन एव कारणमत्रेति—

अविकाराश्च ते देवा विकारा इति शब्दिताः ।
अभिमानाद्विकारस्य अतः शक्ता अपि ध्रुवम् ।

इति वाक्याद्विकारशब्दवाच्यत्वं युक्तं देवानाम् ॥ ५२ ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

जनस्त्विति । आत्मनो जीवस्य आत्मन एव प्राधान्येन सर्वाणि सूत्राणीति विचारे तु सुतरां न कोऽप्यपकारी इत्याह । जिह्वामिति । एवमुत्तरत्रापि ॥ ५१ ॥

दुःखस्येति । तैः तत्र हस्तेनेति कस्य चिद्धस्तेनान्यतरस्य मुखेऽभिहत इत्यर्थः । देवतानां चेति आत्मनः सविकारादित्वेऽपि च इन्द्रादिर्मम देहे स एवान्यस्य देहे ततो ममान्यस्य च देवतात्मता इति क्रोधविषया न स्युरेवेत्यर्थः ॥ ५२ ॥

———

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अरुन्तुदं तनुदहति व्यथयतीति अरुन्तुदं न विजित्य अजित्वा एवाजितात्मनः केचिन्मूढाः मर्त्यैः सहासद्विग्रहं कुर्वन्ति तत्र चानुकूलप्रातिकूल्यादीनन्यानपि मित्रादीन् कुर्वन्ति ॥ ४९ ॥

ततश्चानेन प्रकारेणाविद्यया भ्रम्यमाणा भवन्तीत्याह । देहमिति । मनसो मात्रा वृत्तयः इन्द्रियादयो यस्मिंस्तं देहमिमम् अहमिति पुत्रादिदेहं च ममेति गृहीत्वा भ्राम्यन्ति तमसि संसारे ॥ ५० ॥

तदेवं मनस एव सुखदुःखयोः कारणत्वमुपपाद्येदानीं जनादीनां पूर्वोक्तानां षण्णामकारणत्वं प्रपञ्चयति । जनस्त्विति षड्भिः हेतुरिति जन एव जनं सुखयति जन एव जनं दुःखयतीति चेत् अत्र च अस्मिन्नपि पक्षे आत्मनो जीवात्मनः किं न किञ्चिदपि यस्मात् सुखदुःखकर्तृत्वं सुखदुःखकर्मत्वं च भौमयोर्मृण्मयदेहयोरेव न त्वात्मनः अमूर्तस्य देहाद्भिन्नत्वाद्वस्तुतो निरभिमानिनस्तस्य ताडनादिषु कर्तृत्वकर्मत्वानुपपत्तेः ननु तदपि पीडात्वात्मन एव प्रत्यक्षीभवतीत्यत आह । जिह्वामिति । तद्वेदनायां तत्र वेदनायां पीडायामात्मगामिन्यां सत्यां कस्मै कुप्येत् किं पीडकेभ्यो दद्भ्यः किंवा पीड्यमानायै जिह्वायै तत्र यथा पीड्यमानायै जिह्वायै कोपस्यानौचित्यात् पीडकेभ्यो दद्भ्यः कोपो न क्रियते तथैवात्रापि कोपो न कर्तव्य इति भावः । दुःखं त्वात्मनो लिङ्गाध्यासमूलकं सोढव्यमेव किन्तु मन एवेति तदन्ते अन्यस्मै कोपो न देय इत्यग्रिमश्लोकेषु सर्वत्रैवमेव ज्ञेयम् ॥ ५१ ॥

यदि देवता अस्तु नाम तत्रापि पक्षे आत्मनः किं यतो विकारयोर्विक्रियमाणयोर्देवतयो रेव तत् हस्तेन मुखे अभिहते तेन च श्विन्नाधिकत्वात् हस्तेऽभिहते तदभिमानिनोर्वह्नीन्द्रयोर्देवतयोरेव तद् दुःखं सम्भवतु तत्रात्मनस्ततः पृथग्भूतस्य

आत्मा यदि स्यात्सुखदुःखहेतुः किमन्यतस्तत्र निजस्वभावः ।
न ह्यात्मनोऽन्यद्यदि तन्मृषा स्यात्क्रुध्येत कस्मान्न सुखं न दुःखम् ॥ ५३ ॥
ग्रहा निमित्तं सुखदुःखयोश्चेत्किमात्मनोऽजस्य जनस्य ते वै ।
ग्रहैर्ग्रहस्यैव वदन्ति पीडां क्रुध्येत कस्मै पुरुषस्ततोऽन्यः ॥ ५४ ॥
कर्मास्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तद्धि जडाजडत्वे ।
देहस्त्वचित्पुरुषोऽयं सुपर्णः क्रुध्येत कस्मै न हि कर्ममूलम् ॥ ५५ ॥
कालस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तत्र तदात्मकोऽसौ ।
नाग्नेर्हि तापो न हिमस्य तत्स्यात्क्रुध्येत कस्मान्न परस्य द्वन्द्वम् ॥ ५६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

देवतानां च सर्वदेहेष्वभेदात् कोपविषयोऽस्तीति स्वदेह दृष्टान्तमाह । यत् यदा अङ्गं मुखादिकमङ्गेन हस्तादिना इन्द्रा-द्यधिष्ठानेन विनिहन्यते चेदित्यत एव पूर्वत्र देवताधिष्ठानरूप-भूविकारदन्तोदाहरणम् ॥ ५२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु वासुदेवभक्त एव तद्ध्यानेन मनो वशे युञ्ज्यात्तर्हि तदभक्तानां का गतिरित्यतस्ते संसारे भ्रमन्तीत्याह । तमिति द्वाभ्याम् । यस्मात् अदन्तुदं मर्मच्छेदजनकमान्तरीयं शत्रुम विजित्य अविजित्य मर्त्यैर्मोहार्जनैः विग्रहं मित्रायुदासीनान् रिपूंश्च कुर्वन्ति नस्तस्मात्ते मूढाः ॥ ४९ ॥

यतो यतो धावति दैवचोदितंमनो विकारात्मकमापपञ्चसु ।
गुणेषु मायारचितेषु देह्यसौ प्रपद्यमानः सह तेन जायते ॥
इत्युक्तप्रकारेण मनोमात्रं कर्मानुसारतः सङ्कल्पानुरूपं देह-महामिति गृहीत्वा गेहादि ममेति च गृहीत्वा तमसि संसारे भ्रमन्ति ॥ ५० ॥

अथ "आत्मानि तु गच्छन्ति प्रादयन्ति च" इतिसूत्रकारोक्तां सकलश्रुतिसिद्धान्तजीवब्रह्मणोः तादात्म्यानुसन्धानवतः न जनादयः सुखदुःखहेतव इत्याह । जन इति षड्भिः । जनः सुखस्य कश्चि-द्दुःखस्य च हेतुश्चेत् अत्र हि अस्मिन् पक्षेऽपि भौमयोः भूमिविकारयोः देहात्मवादिनः "अन्नमयं हि सोम्य मनः" इति श्रुतेः मनआत्मवादिनोर्वा तत्सुखदुःखदातृत्वं तत्प्राप्त्या प्रीति द्वेषकर्तृत्वं च भवति आत्मनः ब्रह्मांशत्वेन ब्रह्माभिन्नत्वानुस-न्धानवत एनां समास्थाय परात्मनिष्ठामिति वक्ष्यमाणात् किं न किमपि सुखदुःखदातृत्वं तत्प्राप्त्या प्रीतिद्वेषकर्तृकत्वं च न भवति द्वितीयाभावात् यथा कश्चिद्देही स्वजिह्वां स्वकीयैर्दन्तैः कश्चिद्दशति तदा कस्मै वा दन्तजिह्वकतराय कुप्येत् स्व-द्दृगतत्वेन तदनन्यत्वात् ॥ ५१ ॥

देवता इन्द्रियाधिष्ठातृरूपा अस्मिन् पक्षेऽपि तत्सुखदुःखदा-तृत्वं तत्प्राप्त्या प्रीतिद्वेषकर्तृत्वं च विकारयोः देहे मनसि वा विकाररूपे आत्माभिमानिनोरेव भवति आत्मनः परात्मनिष्ठा-वतः किं न किमपि सर्वस्य सर्वात्मभूतभगवदात्मकत्वेन द्वेष-विषयाभावात् यथा कश्चित्कदाचित्स्वदेहे यदा अङ्गं मुखादि अङ्गेन हस्तादिना निहन्यते तदा पुरुषः कस्मै क्रुध्येत हस्तादेः परकीयत्वाभावात् ॥ ५२ ॥

---

भाषा टीका

कोई लोग उस दुर्जय नहीं सहने वड़े बल वाले मर्म भेदन करने वाले मनरूप शत्रु को नहीं जीतकर इस लोक में मनुष्यों के साथ मित्र शत्रु उदासीन भाव करके वैर करते हैं वे लोग मूर्ख हैं ॥ ४९ ॥

मनमात्र के संसर्ग से इस देह को अहंकार से ग्रहण करके मेरा यह है मैं इसका स्वामी हूं ऐसे अन्ध बुद्धि वाले होकर बहुत से मनुष्य यह मै हूं यह दूसरा है ऐसे भ्रम से अपार तमोगुण सागर में घूमते रहते हैं ॥ ५० ॥

यदि देही जनकोई सुखदुःख का कारण होवे तो उस से आत्माका क्या सम्बन्ध है यहतो पृथिवी विकारों का है यदि कदाचित अपने दांतों से जीभमे दबने से चोट लगै तो उस के दुख होने से किसपर कोप करेगा ॥ ५१ ॥

यदि देवता दुःख का हेतु होवे तो इससे भी आत्मा को क्या है यहभी इन्द्रिय अधिष्ठाता देवता विकार का है यदिमभी अपने शरीर से अपने शरीर मे चोटलगे तो किस पर कोप करैगा ॥ ५२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मनः सुखदुःखाद्याकारपरिणामोऽन्यः स एव यदि हेतुः स्यात्तत्र तस्मिन् पक्षे अन्यतः किं न किञ्चिदन्यतो भवति यस्मै कुप्येदित्यर्थः । यतो निज एव स्वभावः सः नन्वात्मनस्तथा परिणामोऽन्यनिमित्तो भवत्वतोऽस्ति कोपविषय इति चेत्तत्राऽऽह । नहीति । आत्मव्यतिरिक्तं नास्त्येव यदि स्याद

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सर्वेषां मनसो नेता मनोरूपश्चिबोधनः ।
तद्वशाः सर्वदेवाश्च तेनैव सुखदुःखिनः ॥
नियन्ता तस्य च प्राणस्ततोऽपि वनचरः ।
तन्नियन्ता हरिः साक्षात्परमानन्दलक्षणः ॥
इति वाक्यमुक्तार्थे प्रमाणम् ॥ ५८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सुखेत्यात्मन्यविद्ययारोपितमेवेत्यर्थः ॥ ५३ ॥ —५५ ॥
यतोऽसौ तदात्मकः कालात्मक एव आत्मनो ह्यंशांशत्वा-
त्कालस्य तयोरैक्यादिति भावः ॥ ५६ ॥ ५७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आत्मा जीवात्मैवेति महीप्रकाशोष्ठादिकं केन चिद्दुःखयितुं
शक्यमतो जीवात्मनश्चेतनत्वमेव दुःखानुभवहेतुरिति चेत्तर्हि
किमन्यत इति। अन्यः कथं दूषणीय इत्यर्थः। तत्र आत्मनि निज-
स्वभावश्चेतन्यमेव सुखदुःखहेतुरित्यर्थः। नहि तच्चैतन्यमात्मनः
सकाशादन्यत् यदि च ततोऽन्यदेव तदिति मतं तर्हि तन्मतं
मृषा मिथ्यैवाज्ञानकल्पितमित्यर्थः। तथा सत्यात्मनो लोष्टादीना-
मिव न सुखं नच दुःखं स्यादित्यतः कस्माद्धेतोः क्रुध्यते ॥ ५३ ॥
ग्रहपक्षेऽप्यजस्याजन्मनः आत्मनः किं यतो जन्यत इति
जनो देहस्तस्यैव ते जन्मलग्नापेक्षया द्वादशाष्टमादिराशिस्था
तद्दुःखनिमित्तं भवन्ति किञ्चान्तरिक्षस्थितैर्ग्रहैरन्यत्रस्थस्य ग्रहा
स्यैव पादार्धदृष्ट्यादिभेदैः पीडां वदन्ति ज्योतिर्विदः ननु ग्रह
कोणादिस्थितस्य तद्दृष्टिगोचरस्य पुरुषस्यातो ग्रहणैव पीडा-
तत्कर्मात्पक्षे देह भवतीति पुरुषस्त्वात्मा तु ततो देहादन्यः ॥५४॥
कर्म हेतुश्चेदस्तु इत्यभ्युपगमः कर्मैव न सम्भवेत् कुतस्तद्धेतुत्व-
मित्याह तत् कर्म हि यस्मादेकस्य जडाजडत्वे सति सम्भवेत्
अजडत्वाद्विकारित्वोपपत्तेरजडत्वाद्धितानुसंधानतः प्रवृत्तिसम्भवात्
वाचित् जडो देहः पुरुषस्तु सुपर्णः शुद्धचैतन्यरूपः नच शुद्ध-
चैतन्यस्य जडदेहेन शुद्धेनजमस्तमस्येव साहित्यं स्यात् अतः
कस्मै क्रुध्येत हि यतः कर्मैव नास्ति यत् सुखदुःखयोर्मूलम् ॥५५॥
कालपक्षेऽप्यात्मनः किं यतोऽसौ जीवात्मा तदात्मकः
जीवात्मनो ह्यंशांशत्वात् कालब्रह्मणोरैक्यात् अंशस्यांशिनः
सकाशात् पीडा नाऽस्तीत्यत्र दृष्टान्तः अग्नेर्हेतोरतदंशस्य ज्वाला
देस्तापो नास्ति हिमस्यापि तत् शैत्यं हिमकणस्य न स्यात्
अतः कस्मै क्रुध्येत नद्वत् परस्य स्वरूपतो मायातीतस्य
जीवात्मनः द्वन्द्वं सुखदुःखादिकं नास्तीति पक्षे हेतवो
निरस्ताः ॥ ५६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

आत्मा भगवान् यः अंशभूतेन मुमुक्षुणाभिन्नेनाप्यभिन्न-
तया गृहीतः येनदात्म्यमिदं सर्वं सर्वं खल्विदं ब्रह्मेत्यादिश्रुति
वेद्यः यदि सुखदुःखहेतुः स्यात्तत्रापि पक्षे निजस्वभाव एव सर्वं
कारणकारणत्वात् किमन्यतः न किमपि तदन्यत्स्वरूपत एव
नास्तीत्याह। नाड्यात्मनोऽन्यादिति। यदि च वादिभिः प्रधान-
परमाण्वादिकं प्रकल्पितं तन्मृषा मिथ्या स्वबुद्धिकल्पितत्वात्
तत्रात्मनि न सुखं न दुःखम् प्राकृतसुखदुःखसंबन्धशून्य-
त्वात् अतः कस्माद्धेतोः क्रुध्येत ॥ ५३ ॥

ग्रहाः सुखदुःखयोर्निमित्तं चेत्तत्राप्यजस्य जन्मादिदोषशून्य-
स्वरूपस्य परात्मकांशं प्राप्तस्यात्मनः किं न किमपि यतस्ते
ग्रहाः जनस्य जन्यते इति जनो देहस्तदात्माभिमानवतः सुख-
दुःखयोर्निमित्तं भवति किञ्च ग्रहैरन्तरिक्षस्थैरन्तरिक्षस्थग्रह-
स्यैव पीडां दैवज्ञाः वदन्ति ततो जनाद्देहात्मवादिनः सका-
शात्पुरुषो ज्ञातरवोऽन्यः कस्मै क्रुध्येत ॥ ५४ ॥

सुखदुःखयोर्हेतुः कर्म वै निमित्तमिति चेत्तदपि जडाजडत्वे
देहात्मत्वे तद्विषयेऽस्तु तद्देहात्मत्वं कर्ममूलं तत्रैव कर्मणः
सुखदुःखहेतुत्वं घटते आत्मनः आत्मज्ञस्य किं न किमपि हि
यस्मात् देहस्तु अचित् नायं पुरुषः अचित् किन्तु सुपर्णः
सुष्ठुः पर्णं पतनं पूर्वदेहाद्विगमनमुत्तरदेहप्रवेशश्च यस्य सः
चेतन इत्यर्थः। अतः कस्मै क्रुध्येत ॥ ५५ ॥

सुखदुःखयोर्हेतुः कालश्चेत्तत्रापि आत्मनः परमाणं स्यात्मनः
किम् यतोऽसौ कालस्तदात्मकः परात्मकः परमात्मस्थानेन
प्राप्तस्य परांशभूतस्य ह्यदो न भवतीति दृष्टान्तद्वयेन स्पष्टयति
यदग्नेरंशभूतं विस्फुलिङ्गं तत्तस्मादग्नेस्तापो नास्ति यच्चिमस्य
शैत्यं तांशस्य शैत्यं न स्यात् तद्वत् परस्य श्रीकृष्णस्यां-
शत्वात्तदनतिरिक्त एवाहमिति भावयतः न द्वन्द्वं सुखदुःखा-
दिकमस्ति अतः स कस्मै क्रुध्येत ॥ ५६ ॥

---

भाषा टीका ।

अपना आत्मा यदि सुखदुःख का हेतु होवे तो दूसरे से क्या प्रयोजन है वह तो अपना स्वभावही है यदि दूसरे के निमित्त से है तो तो वह झूठ होगा इसमे न सुख है न दुख है फिर किसके ऊपर कोप करेगा ॥ ५३ ॥

नवग्रह सूर्यादिक जो सुखदुःख के हेतु होवें तो उससे आत्मा को क्या है वह तो देहका है एक ग्रह से दूसरे ग्रहकी पीडा ज्योतिषी लोग कहते हैं आत्मा तो उससे अलग है फिर किसपर कोप करेगा ॥ ५४ ॥

कर्म यदि सुख दुःख का हेतु होवै तो आत्मा को क्या है क्योंकि जड अजड दोनों के योग में सुख दुःख होते हैं तिनमें देह तो जड है तो उसके कर्म नहीं है आत्मा तो शुद्ध है तो उसके भि कर्म नहीं होना चाहिये फिर कर्म का कोई कारण नहीं है तो किसको क्रोध करेगा ॥५५॥

काल यदि सुख दुःख का हेतु होवै तो आत्मा को उससे क्या है क्योंकि काल तो परमात्मा का अंश ही है जैसे कि अग्नि को ताप नहीं होता है शीतल को शीत नहीं होता है आत्मा तो भिन्न है तो उसको तो सुखदुःखादि द्वन्द्व नहीं होता है ॥ ५६ ॥

न केनचित्क्वापि कथञ्चनास्य द्वन्द्वोपरागः परतः परस्य।
[1]यथाऽहमः संसृतिरूपिणः स्यादेवं प्रबुद्धो न बिभेति भूतैः ॥ ५७ ॥
एतां स[2]आस्थाय परात्मनिष्ठामध्यासितां पूर्वतमैर्महर्षिभिः।
अहं तरिष्यामि दुरन्तपारं तमो मुकुन्दाङ्घ्रिनिषेवयैव ॥ ५८ ॥

श्रीभगवानुवाच ॥

निर्विद्य नष्टद्रविणो गतक्लमः प्रव्रज्य गां पर्यटमान इत्थम्।
निराकृतोऽसद्भिरपि स्वधर्मादकम्पितोऽमूं[3]मुनिराह गाथाम् ॥ ५९ ॥
सुखदुःखप्रदो नान्यः पुरुषस्याऽऽत्मविभ्रमः।
मित्रोदासीनरिपवः संसारस्तमसः कृतः ॥ ६० ॥
तस्मात्सर्वात्मना तात ! निगृहाण मनो धिया।
मय्यावेशितया युक्त एतावान् योगसंग्रहः ॥ ६१ ॥
य एतां भिक्षुणा गीतां ब्रह्मनिष्ठां समाहितः।
धारयन् श्रावयन् शृण्वन् द्वन्द्वैर्नैवाभिभूयते ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्।
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
त्रयोविंशोऽध्यायः ॥ २३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तदेवं षडेते हेतवः प्रसिद्धा निरस्ताः यदि कश्चिदन्यस्त- दनुभावकस्तदपि वस्तुमहिमापेक्षायां न सम्भवतीत्याह। न केनचिदिति। नन्वपरोऽक्षः कथमपह्नूयते तत्राऽऽह। यथेति। संसृतिमविद्यमानामेव रूपयति प्रकाशयतीति तथा तस्य अहमोऽहङ्कारस्य यथा स्वाप्न तथा परतः प्रकृतेः परस्याऽऽत्मनो द्वन्द्वसम्बन्धः महङ्कारनिमित्तोऽसौ न वास्तव इत्यर्थः। एवं प्रबुद्धो यः स भूतैः कृत्वा न बिभेति ॥ ५७ ॥

अतोऽहमपि तथैव परमात्मनिष्ठतया तरिष्यामीत्याह। एतामिति। सोऽहमित्यन्वयः नन्वियं निष्ठैव कथं भवेत्तदाह। मुकुन्देति ॥ ५८ ॥

प्रस्तावेन सह गाथार्थं संक्षेपतो दर्शयति द्वाभ्याम्। इत्थं नष्टद्रविणो निर्विद्य गतक्लमः प्रव्रज्य गां पर्यटमानः निराकृतोऽपि स्वधर्मादकम्पितः सन्मुनिरमूं गाथामगायते- त्यन्वयः ॥ ५९ ॥

मित्रोदासीनारिपवः सर्वोऽपि संसारस्तमसोऽज्ञानत आत्मनो मनसो विभ्रममात्रः कृतो न तात्त्विक इत्यर्थः ॥ ६० ॥

उक्तं द्वन्द्वसहनोपायमुपसंहरति। तस्मादिति ॥ ६१ ॥

मनोनिग्रहाशक्तोऽप्येतच्छ्रवणादिनिष्ठस्तत्फलं प्राप्नोतीत्याह। य इति। द्वन्द्वैः सुखदुःखादिभिः ॥ ६२ ॥

भिक्षुगीतं मिषं कृत्वा भक्तचित्तगतं हरिः।
मोहं निघ्नन्निहाभाति परमानन्दरूपतः॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी।

तदपि हेत्वन्तरोद्भावनमपि। अपरोक्षः सर्वप्रत्यक्षः द्वन्द्वोपरागः ॥ ५७ ॥

अतः प्रबुद्धस्य भयाऽभावात्। सोऽहमित्यन्वयाऽभिधानात् स आस्थायेत्येव स्वामिसम्मतः पाठो नतु समास्थायेति। अन्याभेदापरित्यागाय तस्या निष्ठाया आस्थामात्रं तमस्तरणन्तु मुकुन्दाङ्घ्रिनिषेवयैव तां विना तस्याः सोपद्रवत्वादित्युपसंहारे भक्तिरेव पर्यवसायिता ॥ ५८ ॥

द्वाभ्यां गाथार्थस्य संक्षिप्तत्वाद्दशाद्यश्लोकीमित्युक्तम्। अकम्पितोऽचलितः सन् ॥ ५९ ॥

१ यथाऽऽत्मनः २ समास्थाय ३ असौ इतिवि०पाठः

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

फलमाह । य इति । ब्रह्मनिष्ठां ब्रह्मोत्कर्षज्ञानपूर्वकमनोनि-ग्रहलक्षणाम् ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

परस्य स्वरूपतो मायातीतस्य ॥ ५७ ॥

तदेषा च मनःपरमात्मनिष्ठा श्रीमन्मुकुन्दाङ्घ्रिनिषेवां विना सोपद्रवैव जाता यदीदृशो नानाविचारोऽपि तन्निष्ठायामुपद्रव एवेत्यन्ते तन्निषेवामयमङ्गऽपैव विविनक्ति । एतामिति । तस्माद्भवता सात्त्वतोक्तम् ऋते स्वधर्मनिरतानिति श्रीभगवतो भावः ॥ ५८ ॥ ५९ ॥

मित्रोदासीनरिपुरूपः सुखदुःखप्रदः पुरुषस्य सर्वोऽपि संसारो नान्योऽस्ति किन्तु तमसस्तमसा अज्ञानेन कृतोऽयमात्मनो मनसो विभ्रमस्तद्रूप एवेत्यर्थः ॥ ६० ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यदि कश्चिद्वेत्वन्तरमुद्भावयेत्तदपि वस्तुमहिम्ना न सम्भव-तीत्याह । नेति । परतः अन्यस्मात्सकाशात् यतः परस्य मायातीतस्य ननु तर्ह्यपरोक्षस्य दुःखानुभवस्य को हेतुस्तत्र पूर्वोक्तमनोऽध्यास एवेत्याह । यथाहमहंतामनःप्रधाने लिङ्गदेहेऽयोऽहङ्कारस्तस्मादेव नान्यस्मात् यथाशब्द एवार्थे संसृतिं संसारबन्धं निरूपयितुं यदि वस्य तस्मात् एवं प्रबुद्धो यः स भूतैः कृत्वा न बिभेति जीवात्मा हि स्वरूपतः शुद्ध एव न तस्य कालकर्मादयो दुःखहेतवः किं त्वविद्यया देहेऽहङ्कारादेहस्य अध्यास एव स च देहो मनः प्रधानस्तस्मान्मन एवास्य तदेव दुःखहेतुरिति प्रकरणार्थः देहा-ध्यासे सति तु जीवात्मनः शुद्धस्वेऽपगते अध्यासानुगाः षडपि हेतवो यथा योगमुपपद्यन्तीति निर्गलितार्थः ॥ ५७ ॥

ततश्च तस्य विदग्धस्यागिना प्राग्भवीया शुद्धा मद्भक्तिर्मनसि प्रादुर्भूता प्रादुर्भूतायां च तस्यां स्वस्य संन्यासं दुष्टमहनोपा-यमुक्तलक्षणमेतावन्तं विचारं चावधारयन्मद्भक्त्यानिश्चयाऽमृत-सिन्धुनिमग्न उच्चैर्नृत्यन् सहर्षाटोपमाह । एतामिति । सोऽहमित्यन्वयः परमात्मनिष्ठां देहदैहिकाभिमानेभ्यः परः शुद्धो य आत्मा जीवस्तस्य निष्ठां विचारितलक्षणां स्वरूपं केवलमास्थायेति पर-मात्मनिष्ठायामेतस्यां मम मा ईषत् स्थितिमात्रमेव तमः संसारं तु सेवयैव तरिष्यामि मदवन्धेत्यर्थः एवकारालुप्यते ननु तर्हि परात्मनिष्ठायां स्थितिमात्रमपि किं करोषि तत्राह । पूर्वतमैः प्राचीनैरध्यासितामिति ॥ ५८ ॥

कदर्योपाख्यानं तस्याख्यानोत्थापनप्रयोजनं चाह श्लोकद्वयेन निर्विद्येति ॥ ५९ ॥

आत्मविभ्रम इति पञ्चम्यर्थे प्रथमा आत्मविभ्रमादन्यो नेत्यर्थः । तत एव तमसो अज्ञानस्वरूपात् मित्रादिरूपः संसारः ॥ ६० ॥

उक्तं दुष्टसहनोपायमुपसंहरति । तस्मादिति । एतावान् मनोनिग्रहपर्यन्त एवेत्यर्थः ॥ ६१ ॥

मनोनिग्रहयाशक्तोऽप्येतच्छ्रवणादिना तत्फलं प्राप्नोती-त्याह । य इति ॥ ६२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

एकादशे त्रयोविंशः सङ्गतः सङ्गतः सताम् ॥ २३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

फलितार्थमाह । नेति । यथाहमः देहाद्यात्मभावं प्राप्तस्य संसृतिरूपिणः कर्मभिरुत्तरोत्तरतः संसृतिं रूपयतीति संसृतिरूप-मनस्तद्दृश्यान्यनीति तस्य द्वन्द्वानि तथास्य परतः प्रकृतेरपि परस्य देहाद्यात्मभ्रान्तिं त्यक्त्वा अब्रह्मात्मकलक्षणां भ्रान्तिं च त्यक्त्वा परानन्यतया स्थितस्य द्वन्द्वानां तु का कथा तदुपरागोऽपि न स्या-देहाद्यात्मभ्रान्तिं स्वातन्त्र्यभ्रान्तिं च त्यक्त्वा परमेश्वरांशत्वे-न भिन्नोऽप्यहं तन्निरपेक्षस्थितिप्रवृत्त्याद्यभावात्तदभिन्न एवा-स्मीत्येवं प्रबुद्धस्तत्त्वमस्यादिवाक्यार्थज्ञानात् ज्ञाततत्त्वो भूतै-र्नैवं बिभेति ॥ ५७ ॥

स्वकर्तव्यतामाह । एतामिति । परे श्रीवासुदेवे आत्मनिष्ठां तदंशत्वात्तदनतिरिक्तोऽस्मीत्येवं भूतां "ममैवांशो जीवलोके जीव-भूतः सनातनः । क्षेत्रज्ञं चापि मां विद्धी"ति श्रीमन्मुखप्रोक्त-पूर्वतमैः श्रीकुमारादिभिरध्यासितां सम्यगास्थाय मुकुन्दाङ्घ्रिसे-वयैव ननु ज्ञानमात्रेण दुरन्तपारन्तमः दुस्तरं संसारं तरि-ष्यामि ॥ ५८ ॥

अध्यायार्थं संक्षेपतो दर्शयति । निर्विद्येत्यादिना । नष्टद्रविण-प्रक्षीणधनः निर्विद्य निर्वेदं प्राप्य प्रव्रज्य गृहाश्रमं त्यक्त्वा गतक्ले-नष्टक्लेशः गां भूमिं पर्यटमानः असद्भिर्निराकृतोऽपि स्वधर्मान्मुकु-न्दाङ्घ्रिसेवातोऽकम्पितः सन् मुनिरमूं गाथामगायतेत्यन्वयः ॥ ५९ ॥

सुखदुःखप्रदः अन्यः जनदेवतादिरूपः न कस्तर्हि आत्म-विभ्रमः आत्मनो मनसः यो देहाद्यहमिति गेहादौ ममेति स्वरूपे अब्रह्मात्मकत्वरूपश्च एवं त्रिविधो भ्रमः सुखदुःखप्र-दइत्यन्वयः किञ्च मित्रोदासीनरिपवः सर्वोऽपि संसारश्च पुरुषस्य तमसस्ताद्रूप्यात्मविग्रहतो निमित्तादेव परमेश्वरेण पुरुषक-फलदात्रा कृतः ॥ ६० ॥

पूर्वोक्तं दुष्टसहनोपायमुपसंहरति । तस्मादिति । मां आवेशितया धिया मनो निगृहाण एतावान् योगस्योप-जातस्य संग्रहः सूत्रम् ॥ ६१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मनोनिग्रहासमर्थोऽध्येतच्छ्रवणादिभिस्तत्फलं प्राप्नोतीत्याह । य इति । द्वन्द्वैः सुखदुःखादियुगलैः ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रयोविंशाध्यायार्थप्रकाशः ॥ २३ ॥

---

भाषा टीका ।

सब से पर अलग रहने वाले इस आत्मा को किसी ठिकाने किसी हेतु से किसी प्रकार से सुख दुःख द्वन्द्व नहीं होता है जैसा वह होता है वह अहङ्कार के आवेश से संसार होता है ऐसा जो ठीक जान लेता है वह इन देही प्राणियों से नहीं डरता है ॥ ५७ ॥

इस प्रकार से पूर्व काल के महर्षियों ने धारण करी हुई निष्ठा को धारण कर के उस संन्यासी ब्राह्मण ने निश्चय कर लिया कि मैं मुकुन्द भगवान् की चरण सेवा से ही इस कठिन अपार अन्धकार संसार को तर जाऊंगा ॥ ५८ ॥

श्रीभगवानुवाच ।

जिसके कि धन नष्ट होगया था फिर वैराग्य से सुखी होकर संन्यासी होकर इस पृथिवी में घूमता रहा फिर जब असत्पुरुषों ने तिरस्कार किया तब अपने धर्म मे से चलायमान न होकर उस भिक्षु मुनि ने इस गाथा का गान किया है ॥ ५९ ॥

सुख दुःख देने वाला दूसरा कोइ नहीं है यह केवल पुरुष को अपना भ्रम मात्र है जो कि किसी को मित्र किसी को शत्रु किसी को उदासीन मान लेता है इसी तमोगुण अज्ञान से उसको संसार होता रहता है ॥ ६० ॥

तिस से हे तात ! उद्धव ! सब प्रकार से मन को बुद्धि से रोक रखो मेरे में उस बुद्धि को ठीक लगावो इतना ही सब योग का सार है ॥ ६१ ॥

जो पुरुष भिक्षु की गाई हुई इस ब्रह्म निष्ठा वाली गाथा को सावधान होकर धारण करेगा या सुनेगा वा सुना- वेगा वह पुरुष सुख दुःख द्वन्द्वों से छूट जावेगा ॥ ६२ ॥

इति श्रीमद्भागवत महापुराण एकादशस्कन्ध
तेवीस में अध्याय की पं० लक्ष्मणाचार्यकृत
भाषा टीका समाप्त ॥ २३ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे त्रयोविंशोऽध्यायः २३ ॥



# अथ चतुर्विंशोऽध्यायः ।

———:*:———

श्रीभगवानुवाच ॥

अथ ते सम्प्रवक्ष्यामि सांख्यं पूर्वैर्विनिश्चितम् ।
यद्विज्ञाय पुमान् सद्यो जह्याद्वैकल्पिकं भ्रमम् ॥ १ ॥
आसीज्ज्ञानमथो अर्थ एकमेवाविकल्पितम् ।
यदा विवेकनिपुणा आदौ कृतयुगेऽयुगे ॥ २ ॥
तन्मायाफलरूपेण केवलं निर्विकल्पितम् ।
वाङ्मनोऽगोचरं सत्यं द्विधा समभवद्बृहत् ॥ ३ ॥
तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ।
ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्विंशे तु सांख्येन मनोमोहो निवार्यते ।
आत्मनः सर्वभावानामागमापायचिन्तया ॥
स्वपदप्रच्युतभक्तानामप्युत्थानाय संयमम् ।
चित्तस्योक्त्वा पुनः कृष्णः सांख्यमत्राऽऽह तत्कृते ॥

अद्वितीयात्परमात्मनो मायया प्रकृतिपुरुषद्वारा सर्वं द्वैतमुदेति पुनस्तत्रैव लीयत इत्यनुसन्धानस्य द्वन्द्वभ्रमो निवर्तत इति वक्तुं सांख्यं प्रस्तौति । अथेति । पूर्वैः कपिलादिभिर्विनिश्चितम् वैकल्पिकं भेदनिमित्तम् भ्रमं सुखदुःखादिरूपम् ॥ १ ॥

अथोशब्दः कार्त्स्न्ये ज्ञानं द्रष्टा तेन दृश्यः कृत्स्नोऽप्यर्थश्चाविकल्पितं विकल्पशून्यमेकमेव ब्रह्मरूपेण लीनमासीदित्यर्थः । कदेत्यपेक्षायामाह । अयुगे युगेभ्यः पूर्वं प्रलय इत्यर्थः । तथा आदौ कृतयुगं तस्मिंश्चान्यदापि यदा विवेकनिपुणा जना भवन्ति तदाऽपि तेषां भेदास्फूर्तेः ॥ २ ॥

तद्बृहद्ब्रह्म वाङ्मनोऽगोचरं यथा भवति तथा माया दृश्यं फलं तत्प्रकाशस्तद्रूपेण मायाविलासरूपेण वा द्विधाऽभूत् ॥ ३ ॥

तयोर्द्विधाभूतयोरंशयोर्मध्ये उभयात्मिका कार्यकारणरूपिणी ॥ ४ ॥

———

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी

आत्मनो जीवस्य मनोमोहो भगवता सांख्येनात्माऽनात्मविवेकेन निवार्यते । सर्वभावानां प्रकृत्यादिस्तम्बपर्यन्ततत्त्वानां तत्कृते चित्तसंयमनार्थम् अत्रास्मिंश्चतुर्विंशेऽध्याये मयाया निमित्तशक्त्या प्रकृतिर्गुणत्रयसाम्यमुपादानशक्तिः । तत्रैव परमात्मन्येव लयेति सांख्याऽधिकारे ॥ १ ॥

द्रष्टा जीवः अर्थश्च प्रपञ्चः । ब्रह्मरूपेण । भगवत्येव वा । बृहति बृंहयन्तीति श्रुत्या बृहत्त्वाद्बृंहणत्वाच्च यद्ब्रह्म परं विदुरिति स्मृत्या च तच्छब्दस्य तत्रैव मुख्यवृत्तेः । उपसंहारे परावरदृशा मयस्यैतेन तद्रूपेणावकल्पितेः वर्णयिष्यमाणत्वाच्च अत एव लीनमासीदिति व्याख्यानम् । तेषां विवेकनिपुणानाम् ॥ २ ॥

तेन ब्रह्मणा यद्दृश्यं वस्तु तन्माया तस्य ब्रह्मणो यः प्रकाशविशेषः स फलमित्यर्थः । द्वितीयपक्षे मायास्वरूपशक्तेराभासरूपा बहिरङ्गा निमित्तशक्तिः तस्या विलासः प्रकृतिः पुरुषाविर्भावक्रीडनविशेषस्तेन रूपेणेत्यर्थः ॥ ३ ॥

अंशयोरिति प्रकृतेस्तद्बहिरङ्गशक्तित्वादंशत्वं पुरुषस्य तत्तटस्थशक्तित्वादंशत्वमिति ज्ञेयम् । कार्यमाकाशादि कारणं महदादि तद्रूपिणी अत्र पुरुषशब्देन जीव एव विवक्षितष्टीकाकृद्भिः । विष्णोः स्वरूपात् परतो हि तेऽन्ये रूपे प्रधानं पुरुषश्च विप्रेति विष्णुपुराणवाक्ये । तथैव टीका च । परतो निरुपाधेर्विष्णोः स्वरूपात् ते प्रागुक्ते प्रधानं पुरुषश्चेति द्वे रूपे अन्ये मायाकृते इति ॥ ४ ॥

———

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वैकल्पिकं भ्रमम् अज्ञानम् ॥ १ ॥

ज्ञानं परमात्मस्वरूपम् एकं समाभ्यधिकरहितं अविकल्पितं

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गोचरत्वादध्यामुत्पाद्यमानत्वेन च कल्पितमिति शेषः यद्वा तच्छ-ब्दार्थात्मकमगुणम् बृहत्तरमिति यस्मात्तस्माद्वाङ्मनसयोरगोचर-त्वाच्च द्विधाभूदिति ॥ ३ ॥

सम्यग्विषयविषयिकरणमन्तरेण ज्ञानार्थैकमत्र नोच्यत इति भावेन ज्ञानार्थाभिमानिदेवतास्वरूपं तावदाह । तयोरिति तयोर्ज्ञानार्थयोरेकतरो योऽसौ विषयलक्षणः स प्रकृतिर्गायत्री-नाम्न्या प्रकृत्याभिमन्यमान इत्यर्थः । सापि न स्वतन्त्रेत्याह । सेति । सा प्रकृतिरुभयात्मिकाम्भोजविष्णुसंज्ञयोरात्मयोरात्मा देहः प्रयत्नश्च यस्याः सा तथा मया श्रिया च सृष्टानुग्राह्या चेत्यर्थः अन्य-तमो भागो ज्ञानं यस्सोऽपि पुरुषः पुरुषनामा ब्रह्मणाभिमन्य-मानमित्यर्थः । सोऽप्युभयात्मक इत्यनुसन्धेयं मया श्रिया सं सृष्टः अनुग्राह्यश्चेत्यभिप्रायेण—

> ज्ञानाभिमानी पुरुषः स ब्रह्मा समुदाहृतः ।
> अर्थाभिमानी प्रकृतिर्गायत्री सा प्रकीर्तिता ॥
> तयोर्नियामको विष्णुः श्रीश्चानुग्राहिका स्मृता ।
> वायुस्तु ब्रह्मणः पुत्रः प्रकृतौ समजायत ॥
> त्रिगुणात्मा समुद्दिष्टः प्रायः सत्त्वात्मकस्तथा ।
> गायत्री चैव सावित्री तथैव च सरस्वती ॥
> एवं त्रिरूपा प्रकृतिरेका सत्त्वादिभेदतः ।
> तासु वीर्यं समुत्सृष्टं ब्रह्मणैकत्वमागतम् ॥
> स सूत्रात्मा समुद्दिष्टो वायुर्लोकप्रणायकः ।
> तस्यापि सूत्रं भगवान् धारणाद्विष्णुरव्ययः ॥
> सूत्रपुत्रस्त्वहङ्कारः स रुद्रः समुदाहृतः ।
> सूत्रात्मना महांश्चैव सह जातश्चतुर्मुखः ॥
> तामसोऽनन्तजश्चैव स एको गुणभेदतः ।
> इति स्मृतिसूचकेन हिशब्देन किमत्र

प्रमाणमिति शङ्कापरिहरति ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथेति तैः तत्र प्रधानपर्यायः प्रकृतिशब्दः ॥ १ ॥

आसीदिति तैः तृतीयस्कन्धे भगवानेक आसीदमग्र आत्मात्मनां विभुरित्यादौ यद्भगवत्त्वेन शब्द्यते तदेवात्र ब्रह्म-त्वेन शब्द्यते इति वदन्तीत्यादिमद्भगवत्त्रैकमेव वस्तुप्रतिपाद्य-मस्तु एव साङ्ख्यविधिः प्रोक्त इत्यादौ परावरदृशा मयेत्यनेन भगवद्रूपेणाप्यवस्थितिः स्पष्टैव । कदेत्यपेक्षायामाह । यदा आदौ कृतयुगे विवेकनिपुणा जना भवन्ति तस्मिन् अयुगे तत्पूर्व-स्मिन् प्रलयकाल इत्यर्थः यद्वा ज्ञानमत्र जीवतत्त्वम् ॥ २ ॥

तदिति तैः तत्र मायाद्वयमिति फलं तत्प्रकाश्य इति छेदः तेन ब्रह्मणा यदृद्दृश्यं वस्तु तन्माया तस्य ब्रह्मणो यः प्रका-शविशेषः स फलमित्यर्थः। यद्वा प्रकृतिर्यस्येत्यादौ ब्रह्मरात्रिं सहस्र-मिति वक्ष्यमाणात् तद्बृहत् महत्तत्त्वं ब्रह्मरूपेण स्थितेन मायया निजशक्तिविशेषस्य यत्फलं स्वरूपं वस्तु तद्रूपेण ॥ ३ ॥

तयोरिति तैः । प्रकृतिः प्रधानं पुरुषो जीवः एवं श्रीविष्णुपु-राणे विष्णोः स्वरूपात्परतो हि तेऽन्ये रूपे प्रधानं पुरुषश्च विप्रेत्यत्र तेषामेव टीका च परतो निरुपाधेर्विष्णोः स्वरूपात् ते प्रागुक्ते प्रधानं पुरुषश्चेति द्वे रूपे अन्ये मायाकृते इति ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

> चतुर्विंशतु सूत्राद्या हेतवोऽस्य यतोऽभवन् ॥
> पुनस्तद्वद् विविशुरेतत् सांख्यं निरूपितम् ।

मनः प्रधानलिङ्गदेहेऽहं बुद्धिरनात्मनो दुःखकारणमिति भिक्षु-गीतादवगत सा चानात्मन्यात्मबुद्धिरात्मानात्मविवेके सति निवर्तेते स चात्मानात्मविवेकः सांख्यज्ञानमूल इत्यतस्तं साङ्ख्यमुपदिश-न्नाह । अथेति । विकल्पो देहस्तद्बुद्धयध्यासरूपं भ्रमं त्यजेत् ॥१॥

ज्ञानं ब्रह्म परमात्मभगवच्छब्दवाच्यं वास्तवमित्यर्थः । वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ब्रह्मेति परमात्मेति भगवानिति शब्द्यत" इतिसूतोक्तेः अथोशब्दः कार्त्स्न्ये अविकल्पितं विकल्पशून्यमेकमेव ज्ञानं ब्रह्मैवाग्रे वस्त्वासीत् कदेत्यपेक्षायामाह । अयुगे युगेभ्यः पूर्वं प्रलय इत्यर्थः तथा आदौ यत् कृतयुगं तस्मिश्च अन्यदापि यदा विवेकनि-पुणा ज्ञानिनो भवन्ति तदापि तेषां मत्स्फूर्तेः ॥ २ ॥

तदेव केवलमेकमपि बृहद्ब्रह्म माया बहिरङ्गा स्वरूपशक्तिः फलं फलभोक्तृ स्वीयांशस्फुरणरूपतटस्थशक्तिश्च तद्रूपेण द्विविधं समभवत् द्विविधमपि तद्विशिनष्टि । निर्विकल्पितं ब्रह्मणो निर्भेदं तयोस्तच्छक्तित्वात् वाङ्मनसयोरगोचरं माया या मत्स्वरूप-त्वात् जीवस्यातिसौक्ष्म्यात् सत्यं द्वयोरेव नित्यत्वात् ॥ ३ ॥

तयोर्द्विधाभूतयोरंशयोर्मध्ये एकतरो मायाख्यो ह्यर्थः प्रकृतिः साचोभयात्मिका कार्यकारणरूपिणी अन्यतमोऽर्थः ज्ञानं ज्ञानस्वरूपः स च पुरुषो जीवः ॥ ४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वानर्थहेतुरात्मविभ्रमश्चेत्तर्हि कस्तन्निवृत्त्युपाय इत्याकाङ्-क्षायां परमेश्वरतच्छक्तिभूतप्रकृतिपुरुषविवेकशीलितपरमेश्वर-भजनजन्यतत्कृपाकटाक्षेण तन्निवृत्तिरित्याह । अथ त इति । विकल्पः देहगेहादौ यो भ्रमः पूर्वाध्यायान्ते दर्शितोऽहमिति ममेति स्वाधीनोऽस्मीत्येवं भूतस्तम् ॥ १ ॥

अयुगे युगेभ्यः प्राक् प्रलये ज्ञानं जीवः अर्थोऽर्थः प्रकृतिश्च अविकल्पितमविभक्तमेकं कारणं ब्रह्मैवासीत् यत आत्म-मन्ताविवेकनिपुणाः आदौ कृतयुगे ध्यायन्तीति शेषः । प्रकृति-पुरुषाविशक्तिमद्ब्रह्मासीदित्यर्थः ॥ २ ॥

तद् ब्रह्म मायाफलरूपेण प्रकृतिपुरुषरूपेण द्विधा समभवत् ॥३॥

एतयोः मायाफलयोरेकतरः अर्थः प्रकृतिः या उभयात्मिका कार्यकारणरूपिणी सा अन्यतमो भागः ज्ञानं जीवः पुरुषः अभिधीयते सः ॥ ४ ॥

---

### भाषा टीका ।

श्रीभगवान् उवाच इसके अनन्तर पूर्वाचार्यों के निश्चय किये हुवे सांख्य शास्त्रको मैं कहूंगा जिसके जानने से

तमो रजः सत्त्वमिति प्रकृतेरभवन्गुणाः ।
मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन च[1] ॥ ५ ॥
तेभ्यः समभवत्सूत्रं[2] महान्सूत्रेण संयुतः ।
ततो विकुर्वतो जातो योऽहङ्कारो[3] विमोहनः ॥ ६ ॥
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत् ।
तन्मात्रेन्द्रियमनसां कारणं चिदचिन्मयः ॥ ७ ॥
[4] अर्थस्तन्मात्रिकाज्जज्ञे तामसादिन्द्रियाणि च ।
तैजसाद्देवता आसन्नेकादश च वैकृतात् ॥ ८ ॥

भाषा टीका ।

पुरुष की नाना प्रकार की भेद भ्रम की बुद्धि दूर होती है ॥ १ ॥

पूर्व काल मे युगों के होने के पहिले ही तथा सत्य युग मे जिस वखत की ज्ञान मे प्रवीण मनुष्य थे तब एक अर्थ तथा एक भेद रहित ब्रह्म रूप ज्ञान ये दो पदार्थ थे ॥ २ ॥

वह जो भेद रहित केवल वाणी मनके अगोचर सत्य वृहत् पदार्थ है वही तथा फल रूप मे दो प्रकार का होगया ॥ ३ ॥

उन दोनों मे एक पदार्थ तो दो प्रकार की प्रकृति है दूसरा पदार्थ ज्ञान है जोकि पुरुष कहा जाता है ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

समभवन्नभिव्यक्ता बभूवुः मया परमेश्वरेण पुरुषानुमतेन तत्र पुरुषस्य कः सम्बन्धः जीवादृष्टोपयुक्तत्वात्सृष्टेः पुरुषानुमतत्वम् यद्वा स्वस्यैव प्रकृतीक्षणरूपा या पुरुषावस्था तदनुमतेन तद्द्वारेणेत्यर्थः ॥ ५ ॥

सूत्रं क्रियाशक्तिमान् प्रथमो विकारः ततो महान् ज्ञानशक्तिः तत्त्वतः महानेव प्रथमो विकारः प्रसिद्धस्तत्राऽऽह स च ज्ञानक्रियागर्भत्वात्सूत्रेण संयुतो न पृथक् एकमेव तत्त्वं क्रियाज्ञानशक्तिभ्यां द्विधोच्यत इत्यर्थः । विमोहनो जीवस्य भ्रमहेतुः स जातः ॥ ६ ॥

सच तन्मात्रादीनां कारणम् मनःशब्देन देवानामप्युपलक्षणम् चिदचिन्मयः चिदाभासव्याप्तत्वात् जडग्रन्थिरूप इति जीवोपाधित्वं दर्शितम् यद्यपि "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यादिश्रुतेस्तमसं हित्वैव मन इत्यादिश्रुतेश्च प्रथमं भूतानि जायन्ते तेभ्यश्चापञ्चीकृतेभ्यः प्राणादिकमण्डं समष्ट्यात्मकं लिङ्गशरीरं पञ्चीकृतेभ्यश्च ब्रह्माण्डं तस्मिन् वैराजस्तदन्तर्यामी लीलाविग्रहः क्षीराब्धिशायी श्रीनारायणस्तन्नाभिपद्मे च वैराजस्य भोगविग्रहश्चतुराननस्ततो यथाऽवसरमन्येषां जीवानामाविर्भाव इति प्रक्रिया तथाऽपि चिदाभासव्याप्तिपूर्वकोऽहङ्कारस्ततो भूतेन्द्रियादिव्यवहार इत्येतावता महदादिक्रमेण सृष्टिरुच्यते तथाचोक्तम् —

मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा ।
उपायः सोऽवतारय नास्तिभेदः कथञ्चनेति ॥ ७ ॥

तन्मात्रिकात्तामसाहङ्कारान्निरूप्यमाणपञ्चात्मकार्यं दर्शयति । अर्थ इति । तन्मात्रिकात्तद्द्वारादितन्मात्रकारणात्तामसाहङ्कारात् अर्थो महाभूतरूपो जज्ञे बभूव भूतानामावरणस्वभावत्वात् इन्द्रियाणि दश तैजसात्राजसात् तेषां प्रवृत्तिस्वभावत्वात् वैकृतात्सात्त्विकाद्देवताः दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः । चन्द्रश्चेत्येकादश चशब्दान्मनश्च तेषां प्रकाशस्वभावत्वात् ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता—

दीपिकादीपिनी टिप्पणी ।

मया महत्स्रष्टृमहापुरुषरूपेण । पूर्वार्धे भवेत्यस्मदुक्तस्य स्वांशे पुरुषावतारे लक्षणा अनुमतशब्दस्यार्थे सत्यपि रतीषायप्रीति समभवन् व्यक्ता बभूवुः चेति समुच्चयार्थः ॥ ५ ॥

संयुतं सह ततः सूत्रात् । भ्रमहेतुर्देहाध्यासहेतुः ॥ ६ ॥

त्रिवृत्त्वे हेतुः यत इति तन्मात्रहेतुत्वात्तामसः इन्द्रियहेतुत्वात्तैजसः । मनोदेवताहेतुत्वाद्वैकारिकः विगतः कारो विक्षेपो यस्मात् स विकारः सत्त्वं तत्प्रधानत्वात् सात्त्विक इत्यर्थः । जीवोपाधित्वं जीवस्य सुखदुःखादिहेतुत्वम् । वेदान्तसांख्ययोः सृष्टिप्रक्रियायां विरोधमाशङ्क्य समाधत्ते । यद्यपीति । सप्तमे पृथिवी कार्यम् अपञ्चीकृतेभ्यः पञ्चीकरणात्स्वाम्पातेभ्यः पञ्चीकरणञ्च वृद्धमतम् । द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः । स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते इति । लिङ्गशरीरं सप्तदशतत्त्वात्मकम् । तदुक्तं शङ्कराचार्यैः । पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनमिति । तस्मिन् ब्रह्माण्डे । क्षीराब्धिशायीत्यत्र गर्भोदशायीति पाठः प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितमित्यत्र तथोपगमात् । वैराजस्य स्थूलब्रह्मणः । भोगार्थं विग्रहः सूक्ष्मो हिरण्यगर्भः । ततो ब्रह्मणः । चिदाभिव्यक्तिः महत्तत्त्वापरपर्यायचित्तस्य ज्ञानरूपपरिणामः । एतावता व्यवहारमात्रप्रदर्शनेन । तथाचोक्तं नास्तिकवृद्धैः । मृल्लोहेति । मृदादिभिर्दृष्टान्तरूपैर्या भेदान्ते सृष्टिस्ततोऽन्यथा वा सांख्यसृष्टिरुक्ता सा चित्तस्यावतारायः भवतु कथञ्चन नास्ति यथैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृन्मयं विज्ञातं यथैकेन

१ चेति । २ महत्सूत्रेणाच संयुतम् । ३ विमोहकः । ४ अर्थस्तन्मात्र को जज्ञे इतीति प्र० पाठः ।

वनं तु सात्त्विको वासो ग्रामो राजस उच्यते ।
तामसं द्यूतसदनं मन्निकेतं तु निर्गुणम् ॥ २५ ॥
सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः ।
तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥ २६ ॥
सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी ।
तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा ॥ २७ ॥
पथ्यं पूतमनायस्तमाहार्यं सात्त्विकं स्मृतम् ।
राजसं चेन्द्रियप्रेष्ठं तामसं चार्तिदाशुचि ॥ २८ ॥
सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् ।
तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् ॥ २९ ॥
द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकः ।
श्रद्धाऽवस्थाकृतिर्निष्ठा त्रैगुण्यः सर्व एव हि ॥ ३० ॥
सर्वे गुणमया भावाः पुरुषाव्यक्तधिष्ठिताः ।
दृष्टं श्रुतमनुध्यातं बुद्ध्या वा पुरुषर्षभ ! ॥ ३१ ॥
एताः संसृतयः पुंसो गुणकर्मनिबन्धनाः ।
येनेमे निर्जिताः सौम्य ! गुणा जीवेन चित्तजाः ॥ ३२ ॥

भाषा टीका ।

ऊपर ऊपर के लोकों में जाते हैं तमोगुण से नीचे नीचे स्थावरों तक जाते हैं रजो गुण से मध्य में विचरते हैं ॥२१॥

सत्वगुण में मरने से स्वर्ग को जाते हैं रजोगुण में मरने वाले पुरुष मनुष्य लोक में रहते हैं तमोगुण में मरने से नरक में जाते हैं निर्गुण पुरुष तो मेरे को ही प्राप्त होते हैं ॥ २२ ॥

मेरे में अर्पण करके निष्काम जो निजकर्म किया वह सात्विक कर्म है फल के संकल्प से जो किया सो राजस है हिंसा प्रायादि जो कर्म सो तामस है ॥ २३ ॥

केवल आत्म विषयक जो ज्ञान सो सात्विक है देहादि [illegible]द से जो ज्ञान सो रजो गुण का है बालकादिकसदृश का जो ज्ञान सो तामस है मेरी निष्ठा वाला ज्ञान निर्गुण है ॥२४॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

वनं विविक्तत्वात्सात्त्विको वासः मन्निकेतनं तु साक्षा-त्तदाविर्भावान्निर्गुणं स्थानम् ॥ २५ ॥

कारकः कर्ता असङ्गी अनासक्तः रागान्धोऽत्यभिनिवेशवान् स्मृतिविभ्रष्टोऽनुसन्धानशून्यः मदपाश्रयो मदेकशरणः स हि निरहङ्कारत्वान्निर्गुणः ॥ २६ ॥

अधर्मे धर्म इति या श्रद्धा ॥ २७ ॥

पथ्यं हितम् पूतं शुद्धम् अनायस्तमनायासेन प्राप्तम् आहार्यं भक्ष्यभोज्यादि इन्द्रियाणां प्रेष्ठं भोगकाले सुखदं कटु[illegible] यत्नादि आर्तिदाशुचि दैन्यकरमशुचं च यथा[illegible] निर्गुणमित्यभिप्रेतम् ॥ २८ ॥

आत्मोत्थं सुखम् मदपाश्रयमित्यपि त्वम्पदार्थविषय-त्वेन ज्ञानवदेव द्रष्टव्यम् ॥ २९ ॥

उक्तं संसारहेतुभूतं त्रैगुण्यमुपसंहरति द्वाभ्याम् । द्रव्यं पथ्यपूतादि देशो वनग्रामादिः फलं सात्त्विकं सुखमित्यादि कालो यदा भजेत मां भक्त्या [illegible] जाग्रदित्यादिना बोध्यः [illegible] ज्ञानं कैवल्यं सात्त्विकं ज्ञानमित्यादि कर्म मदर्पणमित्यादि [illegible] सात्त्विकः कारकोऽसङ्गीत्यादिः श्रद्धा सात्त्विक्याध्यात्मिकीत्यादि अवस्था सत्त्वाज्जागरणमित्यादिः आकृतिस्तदनुसारेण [illegible] त्यादिनोक्ता देवत्वादिरूप निष्ठा सत्त्वे प्रवीणाः [illegible] दिनोक्तः स्वर्गादिः एवं सर्वोऽप्ययं भावस्त्रैगुण्यस्त्रिगुणा-त्मकः ॥ ३० ॥

न केवलमेत एव किं तु यावन्तः पुरुषाव्यक्ताधिष्ठि[illegible] ते सर्वे भावा गुणमया एव तत्प्रपञ्चः । दृष्टमिति ॥ ३१ ॥

इदानीमुक्तं त्रैगुण्यस्य संसारहेतुत्वमनुवदन्[illegible] हरति । एता इति सार्धेन । येन निर्जिताः स पश्चात्[illegible]

भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते ।
तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञानसम्भवम् ॥ ३३ ॥
गुणसङ्गं विनिर्धूय मां भजन्तु विचक्षणाः ।
निःसङ्गो मां भजेद्विद्वानप्रमत्तो जितेन्द्रियः ॥ ३४ ॥
रजस्तमश्चाभिजयेत्सत्त्वसंसेवया मुनिः ।
सत्त्वं चाभिजयेद्युक्तो नैरपेक्ष्येण शान्तधीः ॥ ३५ ॥
सम्पद्यते गुणैर्मुक्तो जीवो जीवं विहाय माम् ।
जीवो जीवविनिर्मुक्तो गुणैश्चाशयसम्भवैः ॥
मयैव ब्रह्मणा पूर्णो न बहिर्नान्तरश्चरेत् ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम् ।
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्माद्विवेकिनामिदमेव युक्तमित्याह । तस्मादिति । ज्ञानविज्ञानयोः सम्भवो यस्मिंस्तमिमं नरदेहम् ॥ ३३ ॥

भजनप्रकारमाह । निः सङ्ग इति सार्धेन ॥ ३४ ॥

सत्त्वसंसेवया सात्त्विकान्येव सेवेत पुमान् सत्त्वविवृद्धये इति प्रागुक्तया नैरपेक्ष्येणोपशमात्मकेन सत्त्वेनैव ॥ ३५ ॥

एवं च सति मां प्राप्नोतीत्याह । सम्पद्यत इति । जीवं जीवत्वकोशं लिङ्गशरीरम् मां प्राप्तश्च न पुनः संसरतीत्याह । जीव इति । न बहिर्विषयभोगेन नान्तरस्तत्स्मरणेन ॥ ३६ ॥

गुणकृतामनुर्व्यसनव्यथामजितपुण्यकथाकथनादिभिः ।
धुनुत भक्तिरसेन विवेकिनो न हि पुनः सुलभं अनुरीहयम ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

तस्मात्तत्त्वेन गुणत्रयजयात् । इदमेव भजनमेव । भक्त्या गुणसम्बन्धं दूरीकृत्य भजन्तु भक्तिमेव कुर्वन्तु इति भक्तेः साधनत्वं साध्यत्वं च स्वीकृतम् ॥ ३३ ॥ ३४ ॥

निःसङ्ग इत्यर्धकम् । अप्रमत्तः सेवानामापराधाऽनवधान-शून्यः यतो जितेन्द्रियः अतएवान्यत्रानासक्तो विद्वान् भक्ति-रेव परमपुरुषार्थ इति जानन् सन् मां भजेत अवयवाभिरि-च्छुर्णायेव इति तत्प्रतिकर्त्तव्यताभिहिता ॥ ३५ ॥

उपशमात्मकेनान्तःकरणनियमनेन । सर्वत्र हेतुः शान्ता भगवन्निष्ठबुद्धिः । सम्पद्यत इत्यर्धकम् । विषयभोगेनेति विषयभोगं न कुर्यादित्यर्थः । तत्स्मरणेनेति विषयस्मरणं न कुर्यादित्यर्थः । एवं संसरणरूपायां बहुजन्ममरणादि-भोगं दुःखम् । तस्मिन्नपि कश्चित्पाठे देहोपाधिकां जन्मा-दिसंसाररूपां हे विवेकिनः । कथाकथनादिभिर्यो भक्तिरस-स्तत्प्रतिपत्तिविषयकस्तेनान्वयः इदं भजनोपयोगि नरजन्म ॥ ३६

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ज्ञानविज्ञानसम्भवं शास्त्रजन्यबोधजन्यज्ञानयोर्हेतुम् ॥ ३३ ॥

नैरपेक्ष्येण गुणवान्तर्गतस्य सत्त्वस्याप्यन्ते हातव्यत्वबुद्ध्य-त्यर्थः ॥ ३४ ॥

अजीवं शरीरं विहाय मां सम्पद्यत इत्यन्वयः ॥ ३५ ॥

अजीवेन शरीरेण विनिर्मुक्तो मया पूर्णः स्वाप्तः अहम-र्थोचितकार्यं साक्षात्कुर्वन् भक्तिरसिकश्चरः न बहिर्नान्तरश्चरेत् चरेत् संसारनिमित्तकं कर्म न करोति नान्तरं चरेत् मो-साधनं नाचरेदिति मुक्तिदशायां शास्त्रवश्यो न भवे-त्यर्थः ॥ ३६ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
पञ्चविंशोऽध्यायः ॥ २५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ज्ञानविज्ञानयोः सम्भवो यस्मिन् तमिमं देहं लब्ध्वा गुणसङ्गं विनिर्धूय मां भजन्ति सेवन्ते ॥ ३३ ॥

गुणजयपूर्वकं भजनप्रकारमाह । निःसङ्ग इति सार्द्धेन । सात्विकान्येव सेवेत पुमान् सत्वविवृद्धये इत्युक्तया रजस्तमश्च सभिनः बाह्याऽभ्यन्तरतो जयेत् नैरपेक्ष्येण सत्वफलभूते देवादिभावे निरपेक्षतया सत्वमपि अभिजयेत् एवं निःसङ्गः सर्वतो विरक्तः विद्वान् ज्ञानवान् अत एव युक्तः भजनयोग्यः शान्त उपासीतेति श्रुतेः शान्तधीः मां भजेत् ॥ ३४ ॥ ३५ ॥

एवंभूतेन भजनेन मां प्राप्नोतीत्याह । सम्पद्यते इति सार्द्धेन । जीवं लिङ्गशरीरं विहाय मां सम्पद्यते ननु मुक्तो जीवस्त्वत्तो भिन्नोऽभिन्नो वाऽवतिष्ठते इत्यत आह । जीव इति । आशयसम्भवैरन्तःकरणोद्भवैः रागद्वेषादिभिः जीवेन लिङ्गशरीरेण च निर्मुक्तः न बहिः न भिन्नः नान्तरः नाभिन्नः मान्तराभिन्नश्चरेद्विलक्षणः । अतो भिन्नाभिन्नत्वे हेतुमाह । मयैव ब्रह्मणा सर्वात्मना पूर्णः सम्पन्नः वृक्षेण पत्रमिव सूर्येण प्रभेव अग्निना विस्फुलिङ्गमिव ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
पञ्चविंशाध्यायार्थप्रकाशः ॥ २५ ॥

---

भाषा टीका ।

जो पुरुष भक्तियोग से मेरे मे निष्ठा करता है वह मेरे को प्राप्त होता है तिससे ज्ञान विज्ञान को पैदाकरने वाले इस देहको प्राप्त होकर मेरे को भजे ॥ ३३ ॥

चतुर पुरुष गुणों की आसक्तिको छोड़कर मेरे को भजते हैं इसी से विद्वान् पुरुष निःसङ्ग होकर जितेन्द्रिय होकर मेरे को भजे ॥ ३४ ॥

मुनि पुरुष सत्व गुणकी सेवा करने से रजोगुण तमो गुण को जीतलेता है शांत बुद्धि होने से युक्त होने से निरपेक्ष होनेसे सत्व को भी जीत लेता है ॥ ३५ ॥

इस प्रकार जीवात्मा गुणों से मुक्त होकर लिंग शरीर को छोड़कर मेरे को प्राप्त होता है जब जीव अन्तःकरण मे उत्पन्न होने वाले देहगुणों से छूटजाता है फिर बाहर वा भीतर विषयों को नहीं स्मरण करता है तबतो केवल ब्रह्म मेरे ध्यानहीं मे मग्न हो रहता है ॥ ३६ ॥

इति श्रीमद्भागवत महापुराण एकादशस्कन्ध
पचीस में अध्याय की पं० लक्ष्मणाचार्यकृत
भाषा टीका समाप्त ॥ २५ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे पञ्चविंशोऽध्यायः ॥ २५ ॥



## अथ षड्विंशोऽध्यायः ।

——:*:——

श्रीभगवानुवाच ॥

मल्लक्षणमिमं कायं लब्ध्वा मद्धर्म आस्थितः ।
आनन्दं परमात्मानमात्मस्थं समुपैति माम् ॥ १ ॥
गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया ।
गुणेषु मायामात्रेषु दृश्यमानेष्ववस्तुतः ॥
वर्तमानोऽपि न पुमान् युज्यतेऽवस्तुभिर्गुणैः ॥ २ ॥
सङ्गं न कुर्यादसतां शिश्नोदरतृपां क्वचित् ।
तस्यानुगस्तमस्यन्धे पतत्यन्धानुगाऽन्धवत् ॥ ३ ॥
ऐलः सम्राडिमां गाथामगायत बृहच्छ्रवाः ।
उर्वशीविरहान्मुह्यन्निर्विण्णः शोकसंयमे ॥ ४ ॥
त्यक्त्वाऽऽत्मानं व्रजन्तीं तां नग्न उन्मत्तवन्नृपः ।
विलपन्नन्वगाज्जाये घोरे ! तिष्ठति विक्लवः ॥ ५ ॥
कामानतृप्तोऽनुजुषन्क्षुल्लकान् वर्षयामिनीः ।
न वेद यान्तीर्नायान्तीरुर्वश्याकृष्टचेतनः ॥ ६ ॥

ऐल उवाच ॥

अहो मे मोहविस्तारः कामकश्मलचेतसः ।
देव्या गृहीतकण्ठस्य नायुः खण्डा इमे स्मृताः ॥ ७ ॥
नाहं वेदाभिनिर्मुक्तः सूर्यो वाभ्युदितोऽमुया ।
मुषितो वर्षपूगानां बताहानि गतान्युत ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

षड्विंशे योगनिष्ठाया विघातो दुष्टसङ्गतः ।
साधुसङ्गेन तन्निष्ठा परा काष्ठेति वर्ण्यते ॥
योगिनो योगविध्वंसः सङ्गतः स्यादवेदिति ॥
सर्वथा तन्निवृत्त्यर्थमैलगीतं वितन्यते ॥

निःसङ्गो मां भजेद्विद्वानप्रमत्तो जितेन्द्रिय इत्युक्तं तत्र विपक्षेऽनर्थं कथयिष्यन् जीवन्मुक्तस्यापि तर्हि सङ्गो दुर्वार इत्यनर्थः स्यादित्याशङ्क्य ... पूर्वकं परिहरति साधा- र्ध्याम् । मल्लक्षणं मत्स्वरूपं लक्ष्यते येन तमिमं नरदेहं लब्ध्वा मद्धर्मे भक्तिलक्षणे आस्थितः सन्नात्मस्थमात्मन्येव नित्यत्वेन स्थितं परमानन्दरूपमात्मानं मां समुपैति सम्यक्प्राप्नोति ॥ १ ॥

न चैवंभूतस्य विषयसङ्गो नामास्तीत्याह । गुणमय्येति । गुणमयी या जीवयोनिर्जीवोपाधिस्तया विमुक्तो गुणेषु वर्तमानोऽपि नैव युज्यते सङ्गं न प्राप्नोति । अत्र हेतुः अवस्तुभिः नश्वरवस्तुभिरत्यन्तं युज्यमाना दृश्यन्ते तत्राऽऽह । अवस्तुत्वेन दृश्यमानेषु ॥ २ ॥

तथाऽपि सङ्गं वर्जयेदित्याह । सङ्गमिति । असतां लक्षणमाह । शिश्नोदरे तर्पयन्तीति । शिश्नोदरतृपस्तेषां कस्यचित्कदाचिदपि आस्तां तावद्बहूनां सङ्गः किं तु तदेकस्यापि तदनुगोऽनुवर्ती अन्धमनुगच्छति योऽन्धस्तद्वत् ॥ ३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं क्रमानुरोधात्पतिक्रम्यैव योज्यम् । तावदुर्वश्या आकृष्टो वशीकृतो चेतसा चैतन्यं यस्य सः अनेन तस्याऽत्यन्तमोहप्रीत्याऽऽज्ञाया तेऽभावो वक्ष्यते अत एव सर्वयामिनी रात्रीः याम्तीगंच्छन्तीमूर्निमा रात्रिः यावत् आयान्तीरागामिरूपात्मनीश्च न वेद किं तु क्षुल्लकान् कामान् विषयान्तृप्तो जुषमाणोऽयमिति शेषः । एवं स्थितो नृप ऐलः कदाचिदात्मानं त्यक्त्वा प्रजग्मीं तामुर्वशीमन्वगादिति सम्बन्धः कथंभूत उन्मत्तवदाः अये ! जाये तिष्ठ तिष्ठेति विलपन्निति विह्वलः नग्नः उर्वशीविरहान्मुह्यन् अत्र पश्चात्कुरुक्षेत्रे तां समागत्य गन्धर्वदत्तनाग्निना देवानिष्ट्वा पुनरुर्वशीलोकं प्राप्य बहुकालमुर्वशीभोगानन्तरमिति नवमस्कन्धोक्तकथानुगुण्यायाधीनो द्रष्टव्यः । ततः शोकसंयमे शोकापगमे सति निर्विण्णः विषयाणामनर्थहेतुत्वानुसन्धानेन आत्मवैराग्यः । इमां वक्ष्यमाणां गाथामगायतेति सम्बन्धः । जाये घोरे तिष्ठेति पाठान्तरं तदा घोरे इत्यस्य मनसेति शेषः । अये जाये ! मनसा तिष्ठ घोरे इति पुनरनुरोधात् हे मनसा घोरे कठिनचित्ते इत्यर्थः ॥४—६॥

गाथामेवाहाबहुशाश्लोकीरूपामाह । अहो इत्यादिना । मे मम कथम्भूतस्य कामेन कश्मलं क्षुभितं चेतो यस्यात एव देव्या देवस्त्रियोर्वश्या गृहीतः कण्ठो यस्य नित्यं तदालिङ्गनदृढस्येत्यर्थः । आयुषः खण्डा इमेऽहोरात्ररूपा न स्मृताः न ज्ञाताः ॥७॥

विस्मृतिमेव प्रपञ्चयति । नाहमिति । अमुया उर्वश्या मुषितः अपहृतविवेकः सन्नहमभ्युदितमिति सूर्ये मयि रममाणे अस्तङ्गतो चाभ्युदितो न वेद न ज्ञातवानस्मि उतापि च वर्षपूगानामहान्यपि गतानि न वेद वेत्ति खेद ॥ ८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनन्तराध्यायेऽत्यन्तः सर्वतः सङ्गमुत्सृज्य मां सेवेत कार्यमित्युक्तम् । तमेवार्थमितिहासपूर्वकं प्रपञ्चयत्यस्मिन्नध्याये तत्राद्यामुक्तमपि ब्रह्मध्यानफलं विश्वासजननाय पुनराह । मल्लक्षणमिति । मां लक्षयतीति मल्लक्षणा मुद्रा यस्य स तथा तं मद्धर्म भागवतधर्मं आत्मस्थं समुपैति दर्शनेनेति शेषः पश्यतीत्यर्थः ॥ १ ॥

इदमतरस्य भक्तस्य यावद्देहपातं स्थितिप्रकारमाह । गुणमयैरिति । पुमान् स ज्ञानी अवस्तुभिरसद्भिः गुणैः शब्दादिभिर्न युज्यते न सम्बध्यते योग्यताऽतिरेकाणामेषणात् तत्र कारणमाह । ज्ञानेति । परतत्त्वाद्यंशसमर्पणपरोक्षज्ञाननिष्ठया गुणमय्या सत्त्वादिगुणरूपया जीवयोन्या लिङ्गशरीरावस्थया विमुक्तः देहाभिमानरहित इत्यर्थः । मायामात्रेषु प्रकृतिनिर्मितेष्ववस्तुतोऽनात्मस्वेषु दृश्यमानेषु गुणेषु शरीरेषु वर्तमानोऽपि वस्तुत्वानन्यमुद्दिश्य अनन्यमवस्तु चेति वचनादवस्तुत इत्यनेन न मिथ्यात्वमुच्यते तन्निवृत्त्यर्थं साधनसामग्रीविधानवैयर्थ्यापत्तेः ॥ २ ॥

ज्ञानिना योग्यतातिरेकेण विषयनिषेवा न कार्येत्युक्तं किमुत ज्ञानार्थिनेत्यत्र कैमुत्यमाह । सङ्गमिति । शिश्नोदरे एव तर्पयन्तीति शिश्नोदरतृपः तेषामसतां सङ्गं स्नेहलक्षणं न कुर्यात् ॥ ३ ॥



कथयो बाधकमाह । तस्येति । तद्यासत इति जातावेकवचनम् । अनेन विषयसङ्गो न कर्तव्य इति किं वक्तव्यमित्युक्तं भवति ॥ ४ ॥

सङ्गात्कथमनर्थः कस्य च सुखकरो निर्वेदश्चाभूदिति जायमानस्य मानसीं शङ्कां परिहर्तुमेवोपाख्यानमाह । ऐल इति गाथां शिक्षाकरं वचनम् ॥ ५ ॥

जाये घोरे तिष्ठेत्यनेन "अयि जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै नु" इति सूचयति ॥ ६ ॥

सर्वयामिनाः सर्वरात्रीः उद्दिश्य यान्तीः गतानां न वेद अज्ञाने हेतुमाह । उर्वशीति ॥ ७ ॥

मोहादिस्तारः अज्ञानविस्तारः आयुःखण्डाः अहोरात्रविभागाः ॥ ८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अन्यस्तु तथा तत्सङ्गं न कुर्यादित्याह । सङ्गं तेनेति ॥ १—५ ॥

सर्ववामिनीरित्यादिक पृथगेकत्वावस्थापेक्षया ॥ ६—२३ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्त्रीसङ्गं मोहलोकं साधुसङ्गः प्रबोधयेत् ।

इत्याहैलकथाचित्रे षड्विंशे हरिरुद्धवम् ॥

निःसङ्गो मां भजेद्विद्वानित्युक्तं तत्र च "तपायं चिरमवन् प्राप्तो ह्युपायमपि चिन्तये" इति न्यायेन स्त्रीसङ्गः खलु तत्र महानन्तरायकस्तमाद्य जीवन्मुक्तेनापि त्यक्तव्य इति वक्तुं पूर्वप्रकान्तं जीवन्मुक्तत्वमाह साङ्ख्याभ्याम् । मल्लक्षणं मत्स्वरूपं लक्ष्यते येन तमिमं नरदेहं लब्ध्वा मद्धर्मे भक्तिलक्षणे आस्थितः सन् आत्मन्येव निवृत्तत्वेन स्थितं परमानन्दस्वरूपमात्मानं मां समुपैति साक्षात् प्राप्नोति ॥ १

स च गुणमयी या जीवयोनिर्जीवोपाधिस्तया विमुक्तो अत एव गुणेषु विषयेषु मायामात्रेषु प्राकृतेषु तत्तदध्यासाध्यासेनापि रहितेषु इत्यर्थः वर्तमानोऽपि तैर्गुणैरवस्तुभिरवस्तुतुल्यैर्वस्तुभिरपि वा न युज्यते यथा जीव इव नासक्तो भवति कुतः अवस्तुतः न वस्तुतो दृश्यमानेषु वस्तुतो दृश्यमानस्यापि परमात्मन्येवेति भावः ॥ २ ॥

एवम्भूतोऽप्यसत्सङ्गं न कुर्यात् किं पुनरेतदभूत इत्याह । सङ्गमिति । असतां लक्षणमाह । शिश्नोदरं तर्पयन्तीति तथा तेषां किं च तेषां बहूनां सङ्ग आत्मनोऽपि कस्यापि तस्यानुगः अनुवर्ती पतति ॥ ३ ॥

अत्रेतिहासमाह । ऐलः पुरूरवाः प्रथमं मूढस्ततः कुरुक्षेत्रे तां समागत्य गन्धर्वदत्ताग्निना देवानिष्ट्वा पुनरुर्वशीलोकं प्राप्य शोकसंयमे भोगाच्छोकापगमे सति विरक्त्यागमभक्त्याद्युदितं भक्तिज्ञानवैराग्यं प्राप्य गाथामगायतेति नवमस्कन्धकथानुसारेण द्रष्टव्यम् ॥ ४ ॥

तस्य प्राक्तनीं मोहावस्थामाह । त्यक्त्वेति । हे जाये मत्प्राणहरणाद् हे घोरे तिष्ठेति विलपन् अन्वगात् ॥ ५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वैक्लव्ये कारणमाह । कामानिति ॥ ६ ॥

कामग्रस्तचेतसो मम इमे आयुःखण्डा इमान्यायुःख-ण्डानि ॥ ७ ॥

असम्भावनामेवाह । नाहमिति । अभिनिर्मुक्तः सूर्य्येऽस्ते अति स्वपन् अभ्युदितः सूर्ये उदिते सत्यपि स्वपन्नहं सूर्यः अर्यो न वेद नाज्ञासिषं सूर्यं इति द्वितीयार्थे प्रथमा वेदेति भूतेऽपि लट् प्रथमपुरुषश्चार्षः—

सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ।

अंशुमानभिनिर्मुक्ताऽभ्युदितौ तौ यथा क्रममित्यमरः ॥

कुतो नाज्ञासीरत आह । अमुया उर्वश्या मुषितआत्मविवेकसर्वस्व इत्यर्थः । वर्तेति खेदे वर्षपूगानां वर्षसमूहानाम् अहान्यपि न वेद ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निःसङ्गो मां भजेद्विद्वानप्रमत्तो जितेन्द्रियः ॥

इत्युक्तं तदेव प्रपञ्चयति षड्विंशे । मल्लक्षणमिति । मदीयं रूपादिकं लक्ष्यते येन तमिमं कायं लब्ध्वा मद्विषयके ज्ञान-वैराग्यसहिते भक्तियोगे आस्थितः आत्मानं क्षेत्रज्ञं परमात्मावि-र्भावगुणमानन्दं मां च समुपैति अञ्जसा प्राप्नोति जानाती-त्यर्थः । यद्वा । "यद्विज्ञानेन सर्वं विज्ञातं भवति" इति श्रुतेः परमा-त्मानं मामित्यन्वयः ॥ १ ॥

एवं सुज्ञानतत्त्वस्य विषयाभिनिवेशो न भवतीत्याह । गुण-मय्येति सांख्येन ज्ञाननिष्ठया मायामभूतया विद्यया जीवयोन्या जीवस्य देहद्वारा जन्ममरणप्रवाहहेतुभूतया गुणमय्या तमो-गुणकार्यभूतया विद्यया प्रमादमोहौ तमसो भवतोऽज्ञानमेव चेति वचनादज्ञानेनेत्यर्थः । विमुक्तः अत एवान्तरतः वस्तुशब्दः तत्तत्स्वरूपवाचकत्वादुभयत्वेन अहं ममाभिमानविषयत्वेनेत्यर्थः । दृश्यमानेषु गुणेषु मायामात्रेषु प्रकृतिकार्येषु देहे आहारादिषु वर्तमानोऽपि वस्तुभिः सत्तुपादानकत्वात्सद्रूपैर्गुणैर्न युज्यते अहन्तां ममतां च न प्राप्नोति ॥ २ ॥

तत्सङ्गं वर्जयेदित्याह । सङ्गमिति । शिश्नोदरे तर्पयन्तीति शिश्नोदरतृपस्तेषां क्वचिदपि सङ्गं न कुर्यात् विपक्षे दोषमाह । तस्य सङ्गकर्तुः अनुगोऽपि तमस्यन्धे नरके अज्ञानबहुले तिर्य-गादियोनौ वा पतति किं पुनः स पततीति वक्तव्यम् । तत्र दृष्टान्तमाह । अन्धानुगश्चासावन्धश्च अन्धानुगान्धस्तद्वत् ॥ ३ ॥

अत्रेतिहासमाह । ऐल इति । नवमस्कन्धोक्तप्रकारेण प्राप्तायाः उर्वश्याः विरहात् वियोगात् प्रथमं मुह्यन् पुनः कुरुक्षेत्रे प्राप्तायाः प्रोक्तेनोपायेन तल्लोकं प्राप्य शोकस्य सयमे अप-गमे ततो निर्विण्णः सन्निमां गाथामगायतेति बोध्यम् ॥ ४ ॥

तन्मोहं दर्शयति । त्यक्तवेति । आत्मानं नृपम् निकृष्यः सन् नृपः हे घोरे ! तिष्ठ्याति विलपन्नन्वगात् ॥ ५ ॥

वैक्लव्ये मूलमाह । कामानिति । वर्षाणां यामिनीः रात्रीः आकृष्टा चेतना यस्य सः ॥ ६ ॥

गाथामगायदेत्युक्तम् तां गाथामाह । अहो इत्यादिपञ्चभिः इमे अहोरात्ररूपाः आयुःखण्डाः न स्मृताः ॥ ७ ॥

तदेवाह । नाहमिति । अमुया मुषितो वञ्चितोऽहं सूर्योऽभिनि-र्मुक्तोऽस्तंगतोऽभ्युदितो वा इति वर्षपूगानां महान्त्यहानि च अपि न वेद न ज्ञातवानस्मि ॥ ८ ॥ ९ ॥

---

भाषा टीका ।

श्री भगवान् उवाच मेरेको प्राप्त करने वाले इस मनुष्य शरीर को प्राप्त होकर प्राणी मेरे धर्म मे स्थिर रहै तब अपने हृदयमे स्थित परमानन्द स्वरूप परमात्मा मेरे को प्राप्त होजाता है ॥ १ ॥

ज्ञानमे निष्ठा के होने से त्रिगुण मय इस देवादि जीव योनि से छूट जाता है फिर दृश्यमान क्षणिक शब्दादि गुणों मे वर्तमान रहै तोभी अनित्य होने से उन शब्दा-दिक गुणों मे बंधता नहीं है ॥ २ ॥

शिश्न तथा जीभ इंद्रिय के तृप्त करने वाले असत् पुरुषों का कभी संग न करै जो पुरुष उस दुष्टका संग करता है वह तो जैसे अन्धे के पीछे चलने वाला अन्धा कभी गढ्ढे मे गिरजाता है तैसे वहभी नरक मे गिर पड़ता है ॥ ३ ॥

उर्वशी के विरह से मोहित होकर शोकके शांति होने पर वैराग्य के होने से बड़ी कीर्ति वाले चक्रवर्ती पुरूरवा महा-राजने इस गाथा का गान किया है ॥ ४ ॥

पुरूरवा राजाको जब उर्वशी छोड़कर चली तब राजा पागल सरीका नंगा होकर उसके पीछे दौड़ा और बड़ा अधीरज होकर विलापकर बोला हे क्रूर मेरी भार्ये ! ठाड़ा वाढ़ी रह ॥ ५ ॥

फिर जब ज्ञान भया तब बोले कि मै क्षुद्र कामों सेभी तृप्त न होकर सेवन करता रहगया मैन उर्वशी के मारे चित्तके खिच जाने मे कईवर्षों की जाती आती हुई रातोंको नहीं जाना ॥ ६ ॥

ऐल उवाच अहो काम मे मेरा चित्त मोहित होगया है मेरे मोहके विस्तार को देखो इस उर्वशी देवीके कण्ठको ग्रहण कर रहने से मैंने ए अपने अवस्था के खण्ड रातदिना के बीतते नहीं स्मरण किये ॥ ७ ॥

इस उर्वशीने मेरे मनको चुरा लिया तब मेरेको सूर्यका उदय तथा अस्त होना नहीं मालूम पड़ा अनेक वर्षों के अनेकदिन चले गये सो बड़े खेदकी बात होगई है ॥ ८ ॥

---

अहो मे आत्मसम्मोहो येनाऽऽत्मा योषितां कृतः ।
क्रीडामृगश्चक्रवर्ती नरदेवशिखामणिः ॥ ९ ॥
सपरिच्छदमात्मानं हित्वा तृणमिवेश्वरम् ।
यान्तीं स्त्रियं चान्वगमं नग्न उन्मत्तवद्रुदन् ॥ १० ॥
कुतस्तस्यानुभावः स्यात्तेज ईशत्वमेव वा ।
योऽन्वगच्छं स्त्रियं यान्तीं खरवत्पादताडितः ॥ ११ ॥
किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा ।
किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् ॥ १२ ॥
स्वार्थस्याकोविदं धिङ्मां मूर्खं पण्डितमानिनम् ।
योऽहमीश्वरतां प्राप्य स्त्रीभिर्गोखरवज्जितः ॥ १३ ॥
सेवतो वर्षपूगान्मे उर्वश्या अधरासवम् ।
न तृप्यत्यात्मभूः कामो वह्निराहुतिभिर्यथा ॥ १४ ॥
पुंश्चल्यापहृतं चित्तं कोऽन्वन्यो मोचितुं प्रभुः ।
आत्मारामेश्वरमृते भगवन्तमधोक्षजम् ॥ १५ ॥
बोधितस्यापि देव्या मे सूक्तवाक्येन दुर्मतेः ।
मनोगतो महामोहो नापयात्यजितात्मनः ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

येन सम्मोहेन आत्मा देहः क्रीडामृगवदधीनः ॥ ९ ॥

ननु प्रणयकुपितायाः अनुनयार्थमधीनता युक्तैव सत्यम् मम तु न तदस्तीत्याह। सपरिच्छदं राज्यादिसहितमीश्वरं चक्रवर्तिनं तृणमिव त्यक्त्वा यान्तीमप्यन्वगाममनुगतोऽस्मि ॥ १० ॥

किञ्च मम प्रभावाद्यभिमानो वृथैवेत्याह। कुतस्तस्य मे तेजोबलम् खरो यथा पादताडितोऽपि खरीमनुगच्छति। तद्वत् ॥ ११ ॥

एवम्भूतस्य सर्वं साधनं व्यर्थमित्याह। किमिति। त्यागेन सन्न्यासेन विविक्तेन एकान्तसेवया मौनेन वाङ्नियमेन ॥ १२ ॥

अनुतप्तः सन्नात्मानं निन्दति द्वाभ्याम्। स्वार्थस्येति। अकोविदमज्ञातारं गोखरवत् गौरिव खर इवेति ॥ १३ ॥

अधरासवं सेवमानस्याऽऽत्मभूर्मनसिजः पुनःपुनरुद्भवन् ॥ १४ ॥

एवमष्टभिर्निर्वेदो निरूपित इदानीं तस्य विवेकमाह द्वाभ्याम्। पुंश्चल्येति। अयं भावः कर्मभिर्देवानिष्ठा दुःखमेव प्राप्तोऽस्म्यतः परमेश्वरमेव भजेयमिति ॥ १५ ॥

परमेश्वरप्रसादं विना देवैरुपदिष्टादपि वेदवाक्यान्मोहो न निवर्तत इत्याह। बोधितस्यापीति। देव्या उर्वश्या सूक्तवाक्येन यथार्थवचनेन। "पुरूरवो मा मृथा माप्रपप्तो मा त्वा वृकासो अशिवास उक्षन्। न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता" इत्यनेन ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता [illegible]
दीपिकादीपिनी टिप्पणी।

आत्मसंमोहो मनोमोहः। योषितां क्रीडामृगः कृत इत्यन्वयः ॥ ९ ॥

अत्र उर्वश्यां नतु प्रणयकुपितत्वम् ॥ १० ॥

ईशत्वं नियन्तृत्वम् ॥ ११ ॥

एवंभूतस्य स्त्रैणस्य। विद्यया शास्त्रार्थज्ञानेन तपसा स्वधर्मेण। श्रुतेन शास्त्रश्रवणेन ॥ १२ ॥

स्वार्थस्य मुक्तिलक्षणस्य ईश्वरतां राजराजताम् ॥ १३ ॥ १४ ॥

भगवन्तमृते इति भगवानेव भक्तस्य चित्तं मोचयितुम् प्रभुर्नान्ये देवा इत्यर्थः। अत एव परमेश्वरमेव भजेयमिति भावार्थोल्लेखः ॥ १५ ॥

हे पुरूरवस्त्वं ! मा मृथा मा म्रियस्व मा प्रपप्तः अद्रिरहेया मा प्रपतो भव अशिवासः अशिवा अमङ्गला वृकास इन्द्रियवृकरूपा वृकाः त्वा त्वां मा उक्षन् मा भक्षयन्तु इन्द्रियवशो मा भवेत्यर्थः। स्त्रैणानि स्त्रीसम्बन्धीनि सख्यानि विश्वासा न

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कामश्च योगे नानाविधसिद्धिलक्षणो ऽलौकिकः वार्तायां दण्डधा-रणे च नानाविधलौकिकश्चार्थ इति चतुर्विधत्वं ज्ञेयम् ॥ ३३ ॥

आस्तां तव वार्ता मर्त्यमात्रोऽपि त्वयैतां विलक्षणां गतिं ददामीत्याह । मर्त्य इति ॥ ३४ ॥

एवमात्मस्वरूपदर्शितो योगस्य येन मार्गो यस्मै सः ॥ ३५ ॥

बहु मन्यमान इति । मुकुन्दकर्णाव्यथोगदुःखापहरणाय तादृश । तदुपदेशप्रसादस्य ममयस्य भाग्यभावनयात्मानमुल्लासयितुमिच्छन्नित्यर्थः ॥ ३६ ॥

मोहः पुनस्त्वत्प्राप्त्यसम्भावनादिमयः तद्रूपो योऽन्धकारो मयाश्रितः स तव सन्निधानात् कृपावलोकादिवर्षिसान्निध्य-प्रभावादेव अयं विद्रावितो ऽभूत किमुत तादृशोपदेशा-दित्यर्थः ॥ ३७ । ३८ ॥

किञ्च सृष्टिविवृद्धये स्वमायया यः स्नेहपाशस्त्वया प्रसारितः स मया त्वदुक्तेनात्मसुबोधहेतिना वृक्णः किन्तु भवत्सम्बन्धेनैव पुत्र स मया स्वीकृत इत्यर्थः । यद्वा मे मया दाशार्हादिषु स्वसम्ब-न्धात्पूर्वं स्नेहपाशो वृक्ण इत्युक्तोऽपि सम्बन्धादनन्तरं स्वयमेव स्वमायया भक्तविषयकृपया सृष्टिविवृद्धये जगतः स्वस्मिंस्तादृश-स्नेहविवृद्धये प्रसारितः कीदृश्या स्वमायया आत्मसुबोधस्य प्रज्ञानुभवस्यापि हेतिना छेदकरूपयेत्यर्थः । ततः स कथं मया त्यज्यतामिति भावः ॥ ३९ ॥

तथापि परमाभीष्टं तव कृपयैव सम्पत्स्यत इति पुनः सकाकु प्रणमन् प्रार्थयते । नमोऽस्त्विति । मां प्रपन्नमनुशाधि सम्पा-दयेत्यर्थः । तस्याश्च प्रपत्तेर्वैशिष्ट्याय स्पृहयन्नाह । यथेति ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु यदि कस्यचिद्भक्तस्य ज्ञानकर्मादिफलेऽपि लिप्सा स्यात्तदा तेन ज्ञानादिकमभ्यसनीयमेवेति तत्राऽऽस्त्वं वक्ष्यीकृत्य नैवेत्याह । ज्ञाने इति । ज्ञानादौ यावान् अर्थः फलं मोक्षादिकश्चतु-र्विधः तावान् सर्वोऽपि तव भक्तस्याहमेव भवामि तं तमर्थं सर्वमेव ददामीत्यर्थः । ततश्च किं ज्ञानाद्यभ्यासेनेति भावः तत्र ज्ञाने मोक्षः कर्मणि विहिते धर्मः योगेऽणिमादिसिद्धिलक्षणः कामः वार्तायां कृष्यादौ दण्डधारणे चार्थः यदुक्तं—

या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये ।
तया विना तदाप्नोति नरो नारायणाश्रयः ॥

इति ॥ ३३ ॥

ननु मया सर्वमतान्यवगतानि किन्तु त्वदुक्तानां किं मतं तत् त्वं ब्रूहीत्यपेक्षायां भोः प्रणाश्यन्नुद्धव ! चतुर्विंशेऽध्याये सत्कार्यवादिनां मतमष्टाविंशे तथैवासत्कार्यवादिनां च मतमुक्तं मद्भक्तास्त्वविवादिनः सत्यवादिनः सन्तो वस्तु तत्तु तदुभयमतमध्यवर्तिनो नैव भवन्तीत्याह । मर्त्य इति । अनुष्य यदा यादृच्छिकमद्भक्तकृपाप्रभावात् त्यक्तानि समस्तानि नित्य-नैमित्तिककाम्यानि कर्माणि येन सः निवेदितात्मा मत्स्वरू-पभूताय मन्मन्त्रोपदेशकाय गुरवे "योऽहं ममास्ति यत् किञ्चि-दिह लोके परत्र च । तत् सर्वं भवतो नाथ ! चरणेषु सम-र्पितमिति" वचसा मनसा च समर्पिताहन्ताममतास्पदो भवति तदा तत्क्षणमारभ्यैव स मर्त्यो मे मया विचिकीर्षितः विशिष्टः कर्तुमिष्टः मत्प्रतिपाद्यमानेन भक्त्याभासेन योगिज्ञानि-प्रभृतिभ्योऽपि विलक्षण एव कर्तुमीप्सितः स्यादिति तेन गुणको न मायाकार्यः सत्यभूत एव नाप्यविद्याकार्यो मिथ्याभूत एव किन्तु मत्कार्यो गुणातीत एव सत्यभूतत्वं भूतं साध-नत्वमाभवत्त्वं प्रतिपद्यमानः मया सहैव आत्मभूयाय [illegible] कल्पते योग्यो भवति यकारेणातत् फलमनुद्दिष्टं फलं तु प्रेम-वत्पार्षदत्वमिति ॥ ३४ ॥ ३५ ॥

प्रयाणेन अवघूर्णमवगतघूर्णात्मकं महाश्चर्यं चित्तं धैर्येण विष्टभ्य तद्वृत्तान्तत्र्यैव यत्नैवंमभूत्तेव बहुमन्यमानः ॥ ३६ ॥

यो मे मया मोहमहान्धकारः आश्रितः सर्वयादवविराजि-तमत्प्रभुसहिता द्वारकेयं परित्यक्तव्येव सम्प्रत्ति स्वयंति विचार-मयः स त्वया विद्रावित इति । तृतीयस्कन्धवर्णितोद्धवप्रश्ना-नन्तरमनन्यमेयस्त्रीर्यासञ्जात्तरकृत्य प्रदीपम् [illegible] आत्मनः परमां स्थितिमिति वचनवर्णितमुद्धवावादात्तस्त्कथा एतदुक्तप्राप्त्यैवोक्ता ज्ञेया अतः कालवयोक्तं श्रीवराहस्य वीर्यत्रमेकत्रैवाह मैत्रेय इतिवत् ॥ ३७ ॥

प्रत्यर्पित इति । मया तुभ्यमात्मबुद्धीन्द्रियादिसहितं शरीरं समर्पितं त्वया तु विज्ञानमयः स्वानुभवमयः प्रदीपः प्रत्यर्पितः अतोऽहं प्रतिक्षणमेव सर्वदेशकालवर्तिनः सपरिकरविशिष्टस्य तव माधुर्यानुभवेन त्वया पूर्णीकृत एव सम्प्रतिबन्धे मच्छरी-रेणानेन यदत्र चिकीर्षसि तत्कुरु यत्र कापि प्रस्थापयितुमि-च्छसि तत्र प्रस्थापय मैत्रेयवाक्यापयेति भावः अतः कृतज्ञ-स्त्वद्भक्तस्तव पादमूलं हित्वा अन्यत् स्ववीयमपि स्वयं शरण्यं स्वगृहमपि को नाम समीयात् गच्छेत् यदि च तत्रापि वर्त-मानस्य तव भास्वदनुभवः स्यात्तदा गच्छेदपि न कापि क्षतिः प्रत्युत स्वाश्रितशासनं चेति भावः ॥ ३८ ॥

ननु तर्हि यादवादिषु स्नेहं हित्वा कथं गन्तुं प्रभविष्यसि तत्राह । वृक्ण इति । प्रथमतः दाशार्हादिषु मे द्विविधः स्नेह पाशः तत्र यः स्वमायया त्वया सृष्टिविवृद्धये प्रसारितः दाशा-र्हादयः स्वपुत्रपौत्रादिरूपेण पुनरप्यभाक्ष्या वर्धन्तां ततश्चा-स्मत्समृद्धिः सदैवाकल्प सर्वविश्वदशाव्यापिनी भूयादित्यभिमा-निकः स्नेहपाशः स मया आत्मसुबोधशास्त्रेण वृक्ण एव यस्तु त्वद्रूपगुणकथापरिचर्यामाधुर्यास्वादनियन्धनकस्तु स्नेहपाशः स तु मे भूषणभूतो वर्तत एव त्वया ज्ञानदीपार्पणात् यत्रैव यास्यामि तत्रैव वृष्णयादिसहितत्वामभिव्यक्तं द्वारकां साक्षा-द्द्रक्ष्यामि तत्र कृतकार्यैस्त्वया आनेष्यमाणान् एष्यास्यपीति ॥ ३९ ॥

हे महायोगिन् । महायोगबलेन सर्वत्रैव मां स्वानुभावमय्या आनन्दयितुं प्रवृत्त ! ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्च ज्ञानादौ यावान् चतुर्विधार्थः पुरुषार्थः नृणामधि-कारिणामस्ति स चतुर्विधोऽपि ते मद्भक्तशरणस्याहमेवास्मि तत्र ज्ञाने मोक्षः कर्मणि धर्मः वार्तायां कृष्यादौ दण्डधा-रणे च अर्थः अर्थतः कामः योगेऽणिमादयः सिद्धयस्तासां

श्रीभगवानुवाच।

गच्छोद्धव ! मया दिष्टो बदर्याख्यं ममाश्रमम्।
तत्र मत्पादतीर्थोदे स्नानोपस्पर्शनैः शुचिः ४१॥
ईक्षयाऽलकनन्दाया विधूताशेषकल्मषः।
वसानो वल्कलान्यङ्ग वन्यभुक्सुखनिस्पृहः ४२॥
तितिक्षुर्द्वन्द्वमात्राणां सुशीलः संयतेन्द्रियः
शान्तः समाहितधिया ज्ञानविज्ञानसंयुतः॥ ४३॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

कामेऽन्तर्माव: त्वद्विधानां भागवतानामहमेव सर्वपुरुषार्थनिर्वाहक इति फलितोऽर्थः॥ ३३॥

यत: यदा मर्त्यः निवेदितात्मा निवेदित: मय्यर्पितः आत्मा येन सः अत एव त्यक्तानि मत्सम्बन्धवर्जितानि समस्तानि कर्माणि येन सः तदा स मे विचिकीर्षितो विशिष्टं कर्तुमिष्टो भवति ततश्च मया अमृतत्वं मोक्षं प्रतिपद्यमानः आत्मभूयाय मद्भावाय कल्पते योग्यो भवति वै निश्चितम्॥ ३४॥

एवं सर्वमुक्तितः दर्शितः योगमार्गः अज्ञानध्वान्तमार्गो यस्मै सः॥ ३५॥

बहु मन्यमानः आत्मानं श्रीकृष्णकृपापात्रं मन्यमानः प्रश्रयेण प्रणयपूर्णितं व्याकुलं चित्तं धैर्येण विष्टभ्य प्राह॥ ३६॥

हे अज हे आद्य ! सर्वकारणकारण ! यो मे मया आश्रितः मोहः देहादावहङ्कारादिरूपः आत्मस्वरूपाज्ञानरूपश्च स एव महान्धकारः महद्ध्वान्तम् स तव सन्निधानाद्विद्रावितो गतः किन्तु प्रभवन्ति प्रभावं कुर्वन्ति नैव प्रभवन्ति॥ ३७॥

यद्यपि तव सन्निधानाद्विद्रावितस्तथापि प्रदीपः प्रत्यर्पितः कृतज्ञः भवदनुग्रहाविद्॥ ३८॥

आत्मसुबोधहेतिना। सुकथः अविवक्षकस्तु ज्ञानशस्त्रेण छिन्नः॥ ३९॥

अनुशाधि अनुशिक्षय॥ ४०॥

---

भाषा टीका।

ज्ञान में कर्म में योग में कृष्यादि वृत्ति में नीति शास्त्र में इन सबों में मनुष्यों को जितना प्रयोजन है वह सब धर्म अर्थ काम रूप पुरुषार्थ तो तुमारे वास्ते हमहीं हैं॥३३॥

जिस समय मनुष्य संसार के सब कर्मों को छोड़ देता है और मेरेको आत्मनिवेदन करदेता है तब मैं उस को कृतार्थ करने चाहता हूं तब वह मोक्ष को प्राप्त होने योग्य होता है तब मेरे सदृश ज्ञानादि ऐश्वर्य को प्राप्त हो जाता है॥ ३४॥

श्री शुकदेवजी बोले इस प्रकार से योग मार्ग के उपदेश करने से वे उद्धवजी भगवान् उत्तम श्लोक के वचनको श्रवण करने से प्रीति के मारे कण्ठ रुकगया तब हाथ जोड़ कर आंसुओं को भरलाये और फिर कुछभी नहीं बोल सके॥ ३५॥

फिर प्रेमके मारे चञ्चल चित्त को बड़े धैर्य से रोककर हे राजन् ! श्री कृष्णकी कृपा तथा अपने भाग्यका बहुत सन्मान करके फिर हाथ जोड़कर मस्तक से श्रीकृष्ण चरण कमलको स्पर्श करके यदुप्रवीर भगवान् से यह वचन बोले॥ ३६॥

उद्धवजी बोले हे प्रभो ! जो मेरे हृदय में अन्धकार रहाथा सो आप के समीप में बैठते ही सब भागगया है अज हे आद्य जो पुरुष अग्नि के समीप जाता है उस को क्या ठण्ड अंधेरा भय कुछ फिर रह सकते हैं नहीं रहते हैं॥ ३७॥

तो भी आप कृपालु ने मेरे भृत्य के अर्थ विज्ञानमय दीपक देदिया है अब ऐसे आप की कृपाको जाननेवाला जो पुरुष सो आप के चरण कमल के मूल को छोड़कर और किस के शरण जायगा किसी के नहींजायगा॥ ३८॥

अभीतक दाशार्ह वृष्णि अंधक सात्वतों में जो मेरा लौकिक देह संबंधी स्नेहरूपी पाश सो तो कटगया जिसको कि आपुने सृष्टि के बढाने के वास्ते फैलाया था अपनी माया से उसको आत्मज्ञानरूपी खड्ग से छेदन करदिया है॥ ३९॥

हे महायोगिन् मेरा आप को नमस्कार है मैं आप के शरणागत हूं अब आप मेरे को ऐसा शिक्षा और कृपा करो कि जिस से मुक्ति आदि समय मेंभी नष्ट नहीं होनेवाली आप के चरणारविंद में परम भक्ति होवे॥ ४०॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तदुक्तमोमित्यङ्गीकृत्य तथाऽपि मयाऽऽदिष्टो लोकसंग्रहार्थमेतावत्कुर्वित्याह। गच्छेति। आदिष्टो नियुक्तः॥ ४१॥

स्नानादेः पूर्वमेव मत्पादतीर्थोदकभूताया अलकनन्दाया गङ्गाया ईक्षया वसानः परिदधानः॥ ४२॥

---

मत्तोऽनुशिक्षितं यत्ते विविक्तमनुभावयन् ।
मय्यावेशितवाक्चित्तो मद्धर्मनिरतो भव ।
अतिक्रम्य गतीस्तिस्रो मामेष्यसि ततः परम् ॥ ४४ ॥
श्रीशुक उवाच ।
स एवमुक्तो हरिमेधसोद्धवः प्रदक्षिणं तं परिसृत्य पादयोः ।
शिरो निधायाश्रुकलाभिरार्द्रधीर्न्यषिञ्चदद्वन्द्वपरोऽप्यपक्रमे[1] ॥ ४५ ॥
सुदुस्त्यजस्नेहवियोगकातरो न शक्नुवंस्तं परिहातुमातुरः ।
कृच्छ्रं ययौ मूर्धनि भर्तृपादुके बिभ्रन्नमस्कृत्य ययौ पुनः पुनः ॥ ४६ ॥
ततस्तमन्तर्हृदि संनिवेश्य गतो महाभागवतो विशालाम् ।
यथोपदिष्टां जगदेकबन्धुना ततः समास्थाय हरेरगाद्गतिम् ॥ ४७ ॥
य एतदानन्दसमुद्रसंभृतं ज्ञानामृतं भागवताय भाषितम् ।
कृष्णेन योगेश्वरसेविताङ्घ्रिणा सच्छ्रद्धयासेव्य जगद्विमुच्यते ॥ ४८ ॥
[2]भवभयमपहन्तुं ज्ञानविज्ञानसारं [3]निगमकृदुपजह्रे भृङ्गवद्वेदसारम् ।
[4]अमृतमुदधितश्चापाययद्भृत्यवर्गान् पुरुषमृषभमाद्यं [5]कृष्णसंज्ञं नतोऽस्मि ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे उद्धवनिर्याणं नाम
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

दम्भमायायाः शीतोष्णादिविषयायाम् सुधीश आर्जवादि-क्षमावः ॥ ४३ ॥

ते त्वया विविक्तं सुविचारितम् तिस्रस्त्रिगुणात्मिका गती-रतिक्रम्य ॥ ४४ ॥

हरिर्मेधसा संसारं हरति मेधा यस्य तेन श्रीकृष्णेन [illegible]द्वन्द्वपरोऽपि सुखदुःखविनिर्मुक्तोऽपि अपक्रमे निर्गमनसमये ॥ ४५ ॥

किंच सुदुस्त्यजः स्नेहो यस्मिन्स्तेन वियोगात्कातरो-भीतोऽत एव तं परिहातुमशक्नुवन्नातुरोऽतिविह्वलः सन् कृच्छ्रं कष्टं ययौ प्राप ततश्च भर्तृपादुके तेनैव कृपया दत्ते मूर्ध्नि बिभ्रदिति निर्बन्धरूपया तदाज्ञया तत्पुनः पुनर्नमस्कृत्य ययौ अत्र च 'पृष्ठतोऽन्वगमं भर्तुः पादविश्लेषणाक्षम इत्यादितृती-यस्कन्धोपक्रमोक्तानुसारेण बदरिकाश्रमं गच्छन् भगवतः प्रभा-सयात्रामुपश्रुत्य शनैः पृष्ठतो गतः स्वमुपसंहृतनिजकुलं भग-वन्तमेकान्ते दृष्ट्वा तत्कालप्राप्तेन मैत्रेयेण सह पुनः कृपया भगवतोपदिष्टं तत्त्वमाकर्ण्य तदाज्ञातो ययाविति द्रष्टव्यम् ॥ ४६ ॥

विशालां बदरिकाश्रमं गतः स्वन्दर्गतिमगात् कथंभूतां तेनैव जगदेकबन्धुना यथोपदिष्टाम् " तदाऽमृतत्वं प्रतिपद्यमानो मयात्मभूयाय च कल्पते वै अतिक्रम्य गतीस्तिस्रो मामेष्यसि ततः परम् " इत्येवमुक्तप्रकाराम् ॥ ४७ ॥

आनन्दसमुद्रो भगवत्साक्षात्कारस्तस्मात्संभृतमेकीकृतमेतद्यः सकृच्छ्रद्धया आसेव्य ईषदपि संसेवितवान् वर्तते स विमुच्यते इति किं वक्तव्यं तत्सङ्गाज्जगदपि विमुच्यत इत्यर्थः ॥ ४८ ॥

एवं कृतोपदेशं जगद्गुरुं प्रणमति । भवभयमिति । भवः संसारो भयं च जरारोगादिनिमित्तं तदुभयं निवृत्तानां प्रवृत्तानां च भृत्य-वर्गाणां यथायोग्यमपहन्तुं योऽमृतद्वयमुपजह्रे यद्भूतवान् तदेवा-ऽऽह । वेदसारमेकम् किंतत् ज्ञानविज्ञानरूपं च तत्सारं श्रेष्ठं भृङ्गवत् भृङ्गो यथा पुष्पमकोपयन्मधुमृतमुपहरति तथा स्वयं स्वकृतवेदानुसारेणैवोद्धृतमर्थं तदमृतं यथायथं भृत्यव-र्गानपाययत्तं नतोऽस्मीति ॥ ४९ ॥

येनानुकम्पितं विश्वमुद्धवप्रश्ननिर्णयैः ।
तं वन्दे परमानन्दं नन्दनन्दनरूपिणम् ॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम् ।
एकोनत्रिंशोऽध्यायः २९

---

१ यद्वन्द्वमयानुचक्रमे इति वि० पाठ   २ भवहन्तुं   ३ निगमकृन्मुखवद्भृङ्गवद्वेदसारम्   ४ अमृतमुदधितश्चपं
५ विष्णुसंज्ञ   इतिवि०पाठः

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनीटिप्पणी ।

यद्यपि सिद्धस्य तव न साधनापेक्षा तथापि ॥ ४१—४३ ॥

त्रिगुणात्मिका इति । प्रकटाविद्यायाः प्रपञ्चप्रपञ्चाभिमानत्वात् । तत्र प्रसिद्धा गतीः स्थानानि तुच्छतया परित्यज्येति यौक्तिकोक्तिः । पञ्चमपुरुषार्थतुरीयातीतगतिकत्वात् ॥ ४४ । ४५ ॥

अत्र च मैत्रेयोक्तवाक्ये । इत्थं विरोधाभावाच्च समुच्चयेन व्याख्येयम् ॥ ४६ ॥

हरेर्गतिं तदीयनित्याप्रकटप्रकाशद्वारकाख्यं धाम ॥ ४७ ॥

भक्तिमार्गे ज्ञानामृतस्यैकाङ्गतत्वं सर्वत्र कृष्णैकस्फूर्त्या तद्भावभावित्वम् ॥ ४८ ॥

भवभयमित्यर्धेन कृष्णावतारचरितमुद्दिश्यते अमृतमित्यर्धेन तु अजितावतारचरितम् एवं यद्यप्युभयमपि नमनीयं तथापि कृष्णसंज्ञं नतोऽस्मीत्युक्त्या तस्यैव स्वयं भगवत्त्वेन सोपास्यत्वमभिव्यञ्जितम् । तदेव अमृतद्वयमेव । आद्यं सर्वावतारावतारि मूलरूपम् । श्रीस्वामिपादा अपि तस्यैव सोपास्यत्वं दर्शयितुं तथैव मङ्गलमासञ्जयन्ति । येनेति । नन्दनन्दनरूपिणमित्येव सार्वत्रिकः पाठः । श्रीकृष्णं, नररूपिणमिति तु मत्सरकल्पितः

येनानुकम्पितं विश्वं कीर्तनामृतसंप्लवैः ।
तं वन्दे कृष्णचैतन्यं पामरोद्धारतत्परमिति ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अलकनन्दात्र गङ्गा ॥ ४२—४३ ॥

तिस्रो गतीः सात्त्विकराजसतामसीः ऊर्ध्वं गच्छन्ति सत्त्वस्था इत्युद्युक्ताः ॥ ४४—४६ ॥

विद्यानां वहरीम् अनात्मकामिति पाठे अगात् मनुष्यादिरित्यर्थः ॥ ४७ ॥

य एतदिति । यः कश्चिदित्यर्थः यद्वा यः श्रद्दते स मासेव्य मुच्यते इत्यन्वयः ॥ ४८—४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धव्याख्याने
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथानुगृह्य यावत्प्रारब्धं कार्यमुपादिशति । गच्छेति । आदिष्टोऽनुज्ञातः तत्र बदर्याश्रमे मत्पादतीर्थोदे मत्पादप्रभवगङ्गाख्यतीर्थविशेषजले स्नानैरुपस्पर्शनैराचमनैश्च शुचिः ॥ ४१ ॥

अलकनन्दाया गङ्गाया ईक्षया दर्शनेन विधूतमशेषं कल्मषं यस्य सः वल्कलानि वसानः परिदधानः अङ्ग हे उद्धव ! वन्यानि वनप्रभवाणि कन्दमूलादीनि भुङ्क्ते इति तथा सुखेनात्मानुभवसुखेन निस्पृहः विषयाभिलाषरहितः ॥ ४२ ॥

द्वन्द्वमायायां शीतोष्णादिविषयायां तितिक्षुस्सहमान इत्यर्थः सुशील आर्जवादिस्वभावयुक्तः संयतेन्द्रियः जितबाह्येन्द्रियः शान्तः जितान्तरिन्द्रियः ज्ञानं तत्त्वयाथात्म्यविषयज्ञानात्मकं विज्ञानं अङ्गोपासनात्मकं ताभ्यां संयुतः ॥ ४३ ॥

मत्तो मत्सकाशादनुशिक्षितं विविक्तं विविच्य ज्ञापितं च तदनुभावयन् चित्ते दृढीकुर्वन् मय्यावेशिता वाक् चित्तं च येन सः तत्र आवेशो नाम मद्गुणानुकीर्तनं मद्ध्याननिरतः कायेन मदाराधनं कुर्वन्नित्यर्थः एवं मनोवाक्कायवृत्तयोऽभिहिताः एवंभूतो भवान् प्रारब्धान्ते तिस्रः ऊर्ध्वं गच्छन्ति सत्त्वस्था इत्यादिनोक्ताः सात्त्विकराजसतामसगतीरतिक्रम्य ततः परं प्रकृतिमण्डलात्परास्थितं नित्यमुक्तोपभोग्यं मामेष्यसि प्राप्स्यसि ॥ ४४ ॥

स इति । हरिमेधसा हरति यद्विषया मेधा बुद्धिः संसारमिति तथा तेन भगवतेत्थमुक्तः स उद्धवः तं भगवन्तं प्रदक्षिणं तथा परिसृत्य परिक्रम्य पादयोः शिरो निधायाश्रुपरः प्रियसंयोगवियोगप्रयुक्तहर्षशोकरहितोऽप्युपक्रमे निर्गमसमयेऽश्रुकलाभिरश्रुबिन्दुभिर्न्यषिञ्चत् तत्र हेतुरार्द्रधीर्भगवदनुरागातिशयक्लिन्नहृदयः ॥ ४५ ॥

सुदुस्त्यजः स्नेहो यस्मिंस्तस्य भगवतो वियोगेन समनन्तरभाविना कातरो भीतः अत एवातुरो दीनः अत एव तं भगवन्तं परिहातुं त्यक्तुं तावदशक्नुवन्नसमर्थः कृच्छ्रं सकष्टं भर्तुः पादुके पुनः पुनर्मूर्ध्नि शिरसि बिभ्रत्पूर्ववन्नमस्कृत्य कृच्छ्रं सकष्टं यथा तथा ययौ ॥ ४६ ॥

कथं ययौ गत्वा च किं तत्राकरोदित्यत आह । तत इति । तं भगवन्तं हृदि सन्निवेश्य ध्यानेन हृदिस्थं कृत्वा विशालां बदर्याश्रमं गतः तत्र जगदेकबन्धुना यथोपदिष्टं तथा तपः समास्थाय हरेर्गतिमगात् अतिक्रम्य गतीस्तिस्रो मामेष्यसि ततः परमिति भगवत्सङ्कल्पस्य दृढतरत्वज्ञापनायागादिति भूतनिर्देशः अन्यथा नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः । अतो मद्वयुनं लोकं ग्राहयन्निह तिष्ठतु इति तृतीयेन सह विरोधापत्तेः ॥ ४७ ॥

भगवदुद्धवसंवादश्रवणफलमाह । य एतदिति । योगीश्वरैः संसेवितावङ्घ्री यस्य तेन भगवता आनन्दसमुद्रात्संभूतं निरतिशयानन्दपरब्रह्मस्वरूपावेदकनिगमान्तसमुद्रात्समुद्धृतं ज्ञानामृतं ज्ञानामृतवर्धकं भागवतायोद्धवाय भाषितमेतद्यः पुमानासेव्य वर्तते तत्सम्बन्धाज्जगदपि मुच्यते किं पुनः स विमुच्यते इत्यर्थः ॥ ४८ ॥

इत्थमुपदेशेन महोपकर्तारं भगवन्तं प्रणमति मुनिः भवभयमिति । यो निगमकृद्वेदकृत् "तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतदृग्वेद" इति श्रुत्युक्तरीत्या निःश्वसितमुखेन निखिलनिगमानिष्कर्ता भगवान् ज्ञानविज्ञाने एव सारः प्रधानप्रतिपाद्यो यस्मिंस्तममृततुल्यं वेदसारमुदधितः वेदान्तोदधेरुद्धृतवान् भृत्यवर्गमपाययच्च तमाद्यं जगत्कारणं श्रीकृष्णसंज्ञं परमपुरुषं नतोऽस्मि ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

भगवानुद्धवायेत्युक्तं विवृणोति गच्छेति। ईक्षया ज्ञानेन भक्त्यादतीर्थादिः मिश्रितत्वेन प्रवृत्ताशेषपापावध्वंससामर्थ्यकियुक्ताया भयकलमषायाः अकल्मषोपदर्शनैः शुकः ॥ ४१-४२—४३ ॥

तिस्रः गतीः आप्रारब्धकर्मसुखदुःखिलक्षणाः ॥ ४४ ॥

हरिमेधसा विष्णुना आत्मनो हरित्वं मेधयतीति वा हरिमेधाहरेतेन ॥ ४५ ॥

अनुचक्रम इत्युक्तं स्वाभिप्रायं विवृणोति सुहृत्त्यजेति ॥ ४६ ॥

विशालां बदरीं ॥ ४७ ॥

न केवलमेतज्ज्ञानमुद्धवस्यैव फलप्रदं निषेवमाणानामितरेषामपीत्याह। यएतदिति। आसेव्य ॥ ४८ ॥

भगवतो भक्तानुकम्पितां विस्मयमानः शुकः उत्तरग्रन्थानुवर्तनार्थं भगवत्प्रसादमाकाङ्क्षमाणो भगवन्तं नमति। भवभयमिति। महं तमाद्यं सर्वज्ञं पुरुषर्षभं पुरुषोत्तमं नतोऽस्मीत्यन्वयः यो भवभयमपहर्तुमुन्मूलयितुं निजवचोऽमृतं भृत्यवर्गाय पाययामास ते कीदृशं ज्ञानविज्ञाने एव सारं वरं वरणीयं यदाद्यहिमवत्तया निगमकुसुमेषु वेदलक्षणकुसुमेषु करस्थासितत्वेन वेदानामनन्तत्वेऽपि तत्सारोद्धारयोगेन सारग्राहिणा मत एव वेदसारं वेदेषु ज्ञातव्येषु सारं श्रेष्ठं ननु वेदैकदेशसिद्धं बोद्धापेक्षितत्वामन्यमात्रासिद्धमुपादेयमिति तत्राह। वन्दे ब्रह्मरूपामिति। योग्यताविशेषाद्धिकारिणां पूर्णत्वेन समुद्रसमानं भृङ्गवत् यथा भृङ्गो भृङ्गीं मधु पाययति तथेति ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

यद्यपि तव प्रार्थिता मत्पादरतिः सिद्धैव सा च मद्विरहेण अत एव वृद्धिमभ्युपैष्यति ततो न तदर्थं साधनान्तरमपेक्ष्यते तथापि मद्विरहेण यदत्यन्तदुःखं कष्टं करिष्यसि तल्लोकशिक्षार्थं साधनानुरूपेणैव कुरु नतु हठाद्युपवासादिना ततश्च लोकशिक्षार्थकसाधनमथ भीष्टसम्पादने कृते स्वयमीष्टमपि सेत्स्यतीत्याशयेनाह। गच्छेति। मदाज्ञावतुष्कमत्र गच्छत्येवाज्ञावचनम् स्वतु तत्र गतत्वेन समाधेन च स्वतः सेत्स्यतीत्यनुवादमात्रं मत्पादेत्यादिचतुष्टयं गतत्वेन सुखनिस्पृहत्वादिकं स्वभावेनेति वेदं वहन्यायमिति दुरेः संस्थापनमत्र मम सुदुर्लीलाचभूमावस्व वियोगजस्व विपतौ कृच्छ्रातिशय एव स्यादित्यभावात् ईक्षया हेतुना अकलमषाया विधूतमशेषकलमषदर्शनादिजं दुःखं येनेति तु वास्तवार्थः विविक्तं सुविचारितं या स्वचरणाम्भोज इत्येतत्पर्यवसानं यत्तदेवेत्यर्थः तिस्रः त्रिगुणमय्योत्तमत्वेन प्रसिद्धास्ता गतीरतिक्रम्य नतत्त्वाद्यः सिद्धाख्योऽपि परामुत्कृष्टामेष्यसि तां कामिनि शङ्कुष्यतेऽयतीति कृपया स्वयमेवाह। मामिति। यथैवोक्तं श्रीमदर्जुनं प्रति वैगुणतममिवाद्यो मामेवैष्यसि सत्यं त इति ॥ ४१—४८ ॥

एकोऽपतारस्तावद्गुणमयामित्यादिवचसा अन्यरसममृतादिकम्ः यदप्येवमेवं गुणत्वेन हृदयमपि नमनीयं तथाप्याद्यं प्रथममद्यं यतोऽस्मीति वदा तदादरो दर्शितः शुकमेव च तस्य तादृशि तं विशिनष्टि। पुरुषं वयोविशिष्टः पूर्वमेवाहमिहासं तत्पुरुषस्यामिति पुरुषत्वाति श्रुतेः ऋषभं श्रेष्ठं चेति ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

भो उद्धव! सर्वयादवेषु मत्परिकरेषु मध्ये मदुद्धवत्वादेव मत्प्रतिमूर्तिरसि—

नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः।
अतो मद्वयुनं लोकं ग्राहयन्निह तिष्ठतु ॥

इति मदुक्तेरतो यत्तद्वाञ्छितं येन साधयामि मत्तत्वापि साधयितुं शक्तोऽसत एव पूर्वं व्रजभूमिं प्रति त्वमेव प्रस्थापितो यथा तथैव सम्प्रति त्वां बदरिकाश्रमं प्रस्थापयितुमिच्छामि तत्र हि मदंशनरनारायणादिमहामुनीन्द्रा मां दिदृक्षन्ते मिथिलादिभूतलप्रदेशस्थनववैकुण्ठादीन् पूर्वं गतवता मया तत्र तत्रत्या भूतलेभ्यः कुलाश्वविवेकुण्ठनाथाद्या मां दिदृक्षवः स्वदर्शनदानेन स्वीयज्ञानापूपदेशेन च ते कृतार्थीकृतास्तथाधुना बदरिकाश्रमो गन्तुं न शक्यते सपादशतवर्षरूपाक्षतारमर्यादासमयस्य सम्प्रति समाप्तीभूतत्वादतोऽधुना प्रपन्नमनुध्याचे मामिति यदि मां प्रार्थयसे तर्हीयमेव सम्प्रति ममाज्ञेति मनसा मनसैव संकल्प्य प्रकटमाह। गच्छेति। हे उद्धवेति त्वमन्वर्थसंज्ञत्वात् सदैव सर्वजनोत्सवप्रदो भवस्त्वमधुना तु ज्ञाननिष्ठज्ञानवैराग्यादिसर्वप्रदानेनापि त्वं तत्रत्यजनोत्सवविशेषप्रदोऽपि भवाचिन इतिभावः ॥ ४१ ॥

ईक्षया स्वकर्तृकावलोकनेनैव भयकलमषायाः विधूतं अशेषतमशेषकलमषं येन सः तेष्वादने ज्ञानभिर्दारिरिति नवमांकोद्धवस्य सर्वत्रैव्याचामगवत्वादशेषमिति पदमुपन्यस्तम् ॥ ४२ ॥ ४३ ॥

मत्तः सकाशात् यत् भक्तिज्ञानवैराग्यादिकमनुशिक्षितं तत् एव विवेकं विवेकेनैव अनुभावयन् तत्रत्यश्रीनरनारायणादीकेभ्यो पृच्छत इति शेषः मच्चापि विद्यतचार्कार्यत्वादेव मत्समां मामश्रावे बुद्धिः प्रतिमासमस्तसर्वश्रावणार्थाकित्वाद्धस्तात्त्वनयुक्तो अयोहितत्समाधानयोग्यतार्थमाशीर्वादः कृतः ततश्च निस्त्रिगुणात्मिका गतीरतिक्रम्य तत्रत्यान् मुनीन् गुणत्रयगतीरतिक्रान्तान् कृत्वेत्यर्थः निष्पादितमदादिज्ञा मा गेष्यवि योगबलेन मदेवानन्तमायामस्वमत्रैव मत्समीपमागमिष्यसीत्यर्थः ॥ ४४ ॥

हरिमेधसा प्रेम्णा मनो हरन्ती मेधा यस्य तेन अपक्रमे ततोऽपसृतिसमये महाश्रुपरोऽपि प्रेममूलकशोकमोहादिद्वन्द्वविशिष्टोऽभूदित्यर्थः ॥ ४५ ॥

ततश्च मत्पादुके तेनैव कृपया दत्ते मूर्ध्नि बिभ्रत् भावनिरन्धरूपया तदाज्ञया तं पुनः पुनर्नमस्कृत्य ययौ अत्र गच्छन्नपि तृतीयस्कन्धोपक्रमोक्तकथानुसारेण पुनरपि परावृत्य भगवन्तमेकान्ते दृष्ट्वा संदिग्धमर्थान् पृष्ट्वा तदुत्तराधिगतसमस्तमगवल्लीलातत्त्वाभिज्ञस्तो विद्याविनो मोहमहान्धकार इव प्रकाश्य पुनरपि तदाज्ञया ययाविति द्रष्टव्यम् ॥ ४६ ॥

विशालां बदरिकाश्रमं दुर्लक्ष्यतादेव गतिमगात् द्वारकां प्रति गमनमाप ॥ ४७ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आनन्दसमुद्रो भगवद्भक्तियोगस्तेन सम्भृतं सञ्चकं घृतमेतत् यः सच्छ्रद्धया आसेव्य ईषदपि सेवित्वा वर्तते स विमुच्यत इति किंवक्तव्यं तत्संगेन जगदपि विमुच्यते इत्यर्थः ॥ ४८ ॥

सर्वान्ते जगद्गुरुं प्रणमति । भवभयमिति । वेदेभ्यः सारं उपजह्रे उद्धृतवान् नन्वन्ये मुनयो दर्शनकर्त्तारो वेदसारमुपजीव्य रचयन्ते दुर्गमस्य वेदस्य तात्पर्य्यं न सम्यगभिजानन्तीति न तद्वाक्यं विश्वस्यते एवं भगवांस्तु न तथेत्याह । निगमकृदिति । योहि यच्छास्त्रस्य कर्त्ता स एव तस्यातिदुर्गमस्यापि तस्यार्थं जानात्येवेति भावः । भृङ्गवदिति वेदपुष्पोद्यानस्य मकरन्दमित्यर्थः भृत्यवर्गान् अपाययत् अभक्तानसुरांस्तु वञ्चयामासेति दृष्टान्ताभिप्रायेणाह । अमृतमुदधितश्च उदधिसारमित्यर्थः । मोहिनीरूपेण भृत्यवर्गान् देवानेव अपाययत् असुरांस्तु वञ्चयामासेव तं नतोऽस्मि ॥ ४९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशस्योनत्रिंशः सङ्गतः सङ्गतः सताम् ॥ २९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आदिष्टो नियुक्तः ॥ ४१ ॥

वसान॰ परिदधानः ॥ ४२ ॥

द्वन्द्वमात्राणां शीतोष्णादिविषयाणाम् ॥ ४३ ॥

तिस्रस्त्रिगुणात्मिकाः गम्यन्ते इति गतयः प्राकृताः भूम-व्यता अर्चिरादिमार्गेणातिव्रज्य अतिक्रम्य मां मुक्तोपसृ-प्यमेष्यसि प्राप्स्यसि ॥ ४४ ॥

संसारं हरति मेधा यस्य चरणारविन्दानुसक्ता तेन श्रीकृ-ष्णेन अपक्रमे निर्गमनसमये ॥ ४५ ॥

छुदुस्त्यजः स्नेहो यस्मिन् तेन श्रीकृष्णेन यो वियोग-स्तस्मात्कातरो भीतः कृच्छ्रमतिसङ्कटं यथा तथा ययौ ॥ ४६ ॥

विशालां बदरिकाश्रमं गतः सन् अतिव्रज्य गतीस्तिस्रो मामेष्यसीत्युपदिष्टां गतिमगात् ॥ ४७ ॥

आनन्दसमुद्रो वेदस्ततः सारांशेन सम्भृतम् एतच्छ्रद्धया सेव्य जगत् यः कश्चित् अङ्गममात्रोऽपि विमुच्यते किम्पुनर्वि-शिष्टो जन इत्यर्थः ॥ ४८ ॥

सर्वमुमुक्षावोपदिष्टं भगवत्प्रोक्तं तत्त्वं राजर्षिं प्रत्युपदिश्याथ सर्ववेदैकवेद्यं सर्वोपास्यं सर्वोपकारिणं श्रीकृष्णं श्रीशुकः प्रणमति । भवभयमिति । अहं पुरुषं नतोऽस्मि न तु बहवः पुरुषाः सन्ति तत्र कस्तवाभिप्रेतः इत्यत आह । ऋषभं सर्वश्रेष्ठं सर्वे-श्वरमित्यर्थः । सर्वेश्वरत्वमाह । आद्यमिति । परमकारणमित्यर्थः कारणं तु ध्येयमिति श्रुतेः तमेव प्रकटमाह कृष्णसंज्ञमिति। कृष्ण एव परो देवस्तं ध्यायेदिति श्रुतेः मत्तः परतरं नान्य-दिति श्रीमुखोक्तेश्च तस्यैव सर्वकारणत्वमुपपादयन् मुमुक्षुबु-भुक्षुहितकारित्वं दर्शयति । निगमकृदिति । यः सृष्ट्यादिनिर्वाहकं निगममपि स एव कृतवान् "अस्य महतो भूतस्य निश्वसितमेत-दृग्वेदः" इत्यादिश्रुतेः एतावता निगमस्य नित्यत्वं न गतम् प्रसु-प्तोत्थितन्यायेन तदभिव्यक्तिदेः सर्वकारणत्वन्तु तिन्नाव्यं नास्तीति बोध्यं "जन्माद्यस्य यत" इति जिज्ञास्यवाक्योक्तेः भवभय-मित्यत्र उच्छेदयन् यः मुमुक्षूणां भवं जन्ममरणप्रवाहसंसारमप-हन्तुं ज्ञानविज्ञानसारं ज्ञानं सर्वकारणसर्वशक्तिपरमात्मविषयकं विज्ञानं तदन्तर्गतचिदचिदपदार्थविषयकं विविधं ज्ञानं तयो-र्विस्तरतो निगमप्रोक्तयोः सारम् आधुनिकशक्त्यां धारयति । निग-मसारमुपजह्रे उद्धृतवान् बुभुक्षूणां भवमपहन्तुमुदधितश्चा-मृतमुपजह्रे तदुभयं भृत्यवर्गान्तुभयविधान् यथायथमपाययत् तं नतोऽस्मीति सम्बन्धः ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे ।
एकोनत्रिंशाध्यायार्थप्रकाशः ॥ २९ ॥

---

भाषाटीका ।

श्री भगवान् बोले हे उद्धव ! मैं तुमको आज्ञा देता हूं सो तुम मेरे निवास बदरी का श्रम को जाओ उहां पर मेरे चरण के जल श्री गङ्गाजी के स्नान आचमनादिकों से पवित्र हो जाओगे ॥ ४१ ॥

वहीं अलक नन्दा नामक गङ्गा के दर्शन के होने मात्र मे सब पापों के नष्ट हो जाने से निर्मल हो जाओगे फिर उहां पर वृक्ष के वकला को वस्त्र बनाकर पहरना जङ्गली कन्द मूलादिकों का भोजन करना सब संसारी देह सुखों की इच्छा को छोड देना ॥ ४२ ॥

शीत उष्ण आदिक इन्द्रियों के द्वंद्व विषयों का सहन करना सुन्दर शील स्वभाव को धारण करना बाहेर भीतर की दोनों प्रकार की इन्द्रियों को निग्रह करके रखना शान्त चित्त होकर रहना चित्त को सावधान रखना बुद्धि से शास्त्र ज्ञान तथा अनुभव ज्ञान योग शक्ति से जो ज्ञान तिससे संयुक्त रहना ॥ ४३ ॥

मेरे से जो कुछ ज्ञान तुमने शीखा है तिस ज्ञान को एकान्त मे शुद्ध भाव से विचार करते रहना फिर मेरे मे वाणी तथा चित्त इनके सहित सब इन्द्रियों की वृत्तियों को अर्पण कर देना इस प्रकार से मेरे ही धर्म मे निरत होजाना इस प्रकार के अनुष्ठान करके रहने से फिर तुम सत्व गुण रजो गुण तमो गुण तीन गुणों के फल से जो लोक मिलते हैं तिनको न जाकर निर्गुण मेरे धाम को प्राप्त हो जाओगे ॥ ४४ ॥

श्रीशुकदेव जी बोले सब संसार के सब दुःखों के हरण करने की जो बुद्धि तिस के समर्थ श्री कृष्ण भगवान् के ऐसे कहने से उद्धवजी ने श्री कृष्ण चन्द्र की प्रदक्षिणा किया फिर चरणमें गिर कर के चरणो मे शिर-रख कर आंसुओ के समूह से चरणों का अभिषेक करा दिया और अत्यन्त अधीरज हो गये यद्यपि रागद्वेषादि के द्वन्द्वो से रहित थे तथापि श्रीकृष्ण चरण को छोड कर जाने मे दुःखित हो गये ॥ ४५ ॥

भाषा टीका।

कभी भी नहीं छोड सकने योग स्नेह से वियोग होना जान कर दुखित हो गये श्रीकृष्ण के संग को छोड कर रहने को असमर्थ होने से कातर हो गये तब कृपा कर के भगवान् ने अपने चरण कमल की जो पादुका दीनी उनको मस्तक मे धारण कर के वारंवार लोट पोट कर नमस्कार कर कर के किसी तरह से चले गये ॥ ४८ ॥

तिस के अनन्तर उन श्रीकृष्ण जी को अपने हृदय मे ध्यान से स्थापन कर के वे महाभाग भक्त उद्धव जी बदरी विशालापुरी को गये वहां आ कर जगत के निर्हेतुक एक बन्धु श्रीकृष्णजी ने जो कहा था तिस अनुष्ठान को कर के निवास कर के अन्त मे भगवान की परमगती को प्राप्त हो गये ॥ ४७ ॥

जो कोई पुरुष आनन्द समुद्र को मन्थन कर के श्री हरि कृष्णचन्द्र के गाये हुवे ज्ञान रूप अमृत जिस को कि श्री उद्धव भागवत के अर्थ जो श्रीकृष्ण सब योगीयों द्वारा चरण मे से वित हैं तिनने कहा है इस को भी श्रद्धा से श्रवण करे तो सब ही संसारी मुक्त हो जावे ॥ ४८ ॥

सब संसार के भय के दूर करने के वास्ते साधुओं के बनाने वाले भगवान ने भ्रमर की नांई ज्ञान विज्ञान रूपी इस वेदसार का उद्धार किया है और मोहिनी रूप मे समुद्र मे से अमृत को निकाल कर भृत्यों को पिलाया है आद्य पुरुष श्रेष्ठ उन श्री कृष्णचन्द्र को मैं नमस्कार करता हूं ॥ ४९ ॥

इति श्री भागवत एकादश स्कन्ध उन्तीस में अध्याय की

भाषा टीका समाप्त ॥२९॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे एकोनत्रिंशोऽध्यायः ॥ २९ ॥



## अथ त्रिंशोऽध्यायः ।

——:*:——

राजोवाच ।

ततो महाभागवत उद्धवे निर्गते वनम् ।
द्वारवत्यां किमकरोद्भगवान् भूतभावनः ॥ १ ॥
ब्रह्मशापोपसंसृष्टे स्वकुले यादवर्षभः ।
प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत् ॥ २ ॥
प्रत्याक्रष्टुं नयनमबला यत्र लग्नं न शेकुः कर्णाविष्टं न सरति ततो यत् सतामात्मलग्नम् ।
यच्छ्रीर्वाचां जनयति रतिं किं नु मानं कवीनां दृष्ट्वा जिष्णोर्युधि रथगतं यच्च तत्साम्यमीयुः ॥ ३ ॥

। ऋषिरुवाच ।

दिवि भुव्यन्तरिक्षे च महोत्पातान् समुत्थितान् ।
दृष्ट्वाऽऽसीनान् सुधर्मायां कृष्णः प्राह यदूनिदम् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रिंशे तु प्रागुपाक्षिप्तमौसलव्याजतो हरिः ।
स्वधाम गन्तुमन्विच्छन् सञ्जहार निजं कुलम् ॥
विरागाय पुराघोरमुपाक्षिप्तं हि मौसलम् ।
कथावसाने तत्रैव विशेषं परिपृच्छति ॥

तत इति त्रिभिः ॥ १ ॥

ब्रह्मशापोपसंसृष्टे कुले सति अयं भावः भगवति नहि शापः प्रभवति यादवत्वानुकरणाच्च सोऽपि कथञ्चिन्मान्यः अतः किमकरोदिति । तदेतदुक्तं कथमत्यजदिति । सर्वनेत्राणामिति । सर्वेन्द्रियोपलक्षणम् ॥ २ ॥

तत्प्रपञ्चयति । प्रत्याक्रष्टुमिति । यस्मिन् रूपे लग्नं नयनं प्रत्याक्रष्टुं परावर्तयितुमबला न शेकुः यच्च कर्णाविष्टं कर्णरन्ध्रेण प्रविष्टं सत् सतामात्मनि लग्नं लिखितमिव तिष्ठति । ततो न निर्गच्छति । यस्य श्रीः शोभा सङ्कीर्त्यमाना कवीनां वाचां रतिमुल्लासविशेषं जनयति । तेषां मानं जगत्पूज्यतां जनयतीति किन्तु वक्तव्यम् यच्च विष्णो रूपं जिष्णोरर्जुनस्य रथे स्थितं दृष्ट्वा युधि मृतास्तत्साम्यं सारूप्यमीयुः प्राप्तास्तत्कथं रूपमत्यजदित्यन्वयः ॥ ३ ॥

दिवि सूर्यपरिवेषादीन् भुवि भूकम्पादीनन्तरिक्षे दिग्दाहादीन् महोत्पातान् स्वयमेवोत्पादितत्वादन्यैर्दुष्प्रतीकारान् ॥ ४ ॥

——

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी

संजहार संहारमुद्रयान्तर्धापितवान् । उपक्षिप्तमुपक्रान्तम् । तत्रैव मौसलवृत्त एव ॥ १ ॥

श्लोकद्वयोक्तप्रश्नस्य व्याख्यायार्थमाह । अयं भाव इति । कथमत्यजत् । वस्तुतस्तु नात्यजदेव किन्तु लौकिकदृष्ट्या मायिकचरित्रं किमप्यकरोदेव तद्बुभुत्सितार्थः ॥ २ ॥

तत्तनोः सर्वेन्द्रियप्रियत्वं प्रपञ्चयति त्यागासम्भवे हेत्वभिधानेन विस्तारयति अबला अत्र गोप्यः । गोपीनां परमानन्द आसीद्गोविन्ददर्शने । क्षणं युगशतमिव यासां येन विना भवेदित्यादिभिस्तासामेव तथा प्रसिद्धेः । तद्रूपं कथमन्यथा स्यात् प्रणयरसनया धृताङ्घ्रिपद्म इत्यादि विरोधादित्येको हेतुः । सतामात्मारामगुरूणां सनकादीनामात्मनि ब्रह्मानन्दनिमग्नेऽपि मनसि इति तत्रापि सम्भवति चित्तं ब्रह्मसुखस्पृष्टं नैवोत्तिष्ठत कर्हिचिदिति न्यायेन तत्र तस्यापात्र चित्तं न लग्नं स्यादिति द्वितीयो हेतुः कीर्त्यमाना इत्यत्र व्याहृतं किन्तु मानमित्येव पाठः भग्ने तथा व्याख्यानात् । कवीनां व्यासादीनामित्यन्यथा तेषां नश्वरकीर्तनेऽकवित्वं प्रसज्येत इति तृतीयो हेतुः । सर्वतोऽपि गरिष्ठं तुरीयं हेतुमाह । यच्च विष्णो रूपमित्यादिना तत्साम्यस्य मत्सेवया प्रतीतं ते सालोक्यादिचतुष्टयम् । नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविप्लुतमित्यादिनाऽकालविप्लुतत्वाभिधानात् तद्रूपस्य

विधिरेष ह्यरिष्टघ्नो मङ्गलायनमुत्तमम् ।
देवद्विजगवां पूजा भूतेषु परमो भवः[1] ॥ ९ ॥
इति सर्वे समाकर्ण्य यदुवृद्धा मधुद्विषः ।
तथेति नौभिरुत्तीर्य प्रभासं प्रययू रथैः ॥ १० ॥
तस्मिन् भगवतादिष्टं यदुदेवेन यादवाः ।
चक्रुः परमया भक्त्या सर्वश्रेयोपबृंहितम् ॥ ११ ॥
ततस्तस्मिन् महापानं पपुर्मैरेयकं मधु ।
दिष्टविभ्रंशितधियो यद्द्रवैर्भ्रश्यते मतिः ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यमस्य केतवः ध्वजा इव मृत्युसूचका इत्यर्थः ॥ ५ ॥

प्रत्यक् पश्चिमवाहिनी ॥ ६—७ ॥

ब्राह्मणांश्च पूजयिष्यामः ॥ ८ ॥

---

भाषा टीका ।

श्रीभगवान् बोले द्वारिका में ए बडे भारी घोर उत्पात दीख पडते हैं आकाश में यमके ध्वजा दीखते हैं सो हे यदु श्रेष्ठो हो हम लोगों को इहां पर मुहूर्त भर भी नहीं रहना चाहिये ॥ ५ ॥

स्त्री बालक वृद्ध ए सब इहां से शंखोद्धार पर चले जावें हम सब लोक प्रभास को जावेंगे जहां की पश्चिम-वाहिनी सरस्वती नदी का संगम समुद्र में है ॥ ६ ॥

वहां हम सब लोग स्नान करके पवित्र होकर सावधानता से उपवास करेंगे फिर अभिषेक चंदन लेपन भेट भोग प्राम आदि से देवतों की पूजा करेंगे ॥ ७ ॥

महाविद्वान् ब्राह्मण पूजित होने पर हमारा स्वस्ति वाचन करेंगे फिर हम उनको गउ सुवर्ण वस्त्र हाथि घोडा रथ घर ग्रामादि देकर संतुष्ट करेंगे ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विधिः प्रकारः मङ्गलायनं च किञ्च देवद्विजगवां पूजा भवः उद्भवहेतुः देवलोके परम उद्भवो भविष्यतीति भावः ॥ ९ ॥

मधुद्विषो वाक्यमाकर्ण्य तथेत्यभिनन्द्य उत्तीर्य समुद्रम् ॥ १० ॥

सर्वश्रेयोपबृंहितमित्यत्र सन्धिरार्षः भगवतानुक्तैरपि सर्वैः श्रेयोभिः सहितं चक्रुः ॥ ११ ॥

पीयत इति पानम् मैरेयकं मदिराविशेषम् मधु सुरसम् दिष्टेन दैवेन विभ्रंशितधियः महापानवशात् तस्मिन् पाने सक्ताः आसन्निति भावः । यद्द्रवैर्येषां द्रवैः रसैः ॥ १२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनीटिप्पणी ।

देवलोके देवस्य मम लोकेऽप्रकटप्रकाशे इति वास्तवोऽर्थः परोक्षवादत्वात् ॥ ९ ॥ १० ॥

आदिष्टमुपदिष्टमभिषेकादि । अनुक्तैः पूर्तादिभिः ॥ ११ ॥

तत आदेशानुष्ठानानन्तरम् । तस्मिन् प्रभासे । दैवेन भगवदिच्छारूपेण कृष्णमायावृतात्मनामित्यग्रोक्तेः । अन्यथा भगवदिच्छाविरहे । तन्मदिरापाने । वस्तुतस्तु भा [illegible] सम्पत्तिः तत्प्रतिपादिका इरा सरस्वती यस्मिन् देवो नित्य-लीलानुरक्तो भक्तव्यापीति वधूमतं भवत् भविष्यत्केवलादि-ध्वनिरूपा भेरा तस्याः सकाशाज्जातं निष्पादितं वस्तुलीलाख्य नित्यत्वं तन्मैरेयं स्वार्थे कन् तदेव मधु नित्यलीलानुभाव-कत्वेन पपुः निभमादकत्वात् तत् पपुरास्वादितवन्तः लीलावान्ते दैवेन प्रकटलीलावशेन कालेन विभ्रंशिताः नित्यलीलानुभव-तत्परायत्ता धियो येषां ते तथा । दिष्टं दैवे च काल इत्यादि विश्वः । किमर्थं पपुरित्यपेक्षायां मैरेयकं विशिनष्टि । यस्य नित्यत्वस्य द्रवैरास्वादनैर्मतिर्वियोगात्मिका भ्रश्यते नित्यसंयोगः प्रकाशत इत्यर्थः ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एषः तत्रासिनिषिक्तस्नानादिलक्षणः विधिः उत्तमं मङ्गलायनं मङ्गलावहः तथाहि देवादीनां पूजा भूतेषु आराधकेषु परमो दया मानिनामप्युद्भवो हीत्यर्थः ॥ ९ ॥

इतीति । मधुद्विषो भगवतो वच इति शेषः तथेत्यभिनन्द्य रथैः प्रभासं प्रययुः ॥ १० ॥

---

1 भूतेषु परमोदया इति वीरराघव विज० पाठः ।

ता वज्रकल्पा ह्यभवन् परिघा मुष्टिना भृताः ।
जघ्नुर्द्विषस्तैः कृष्णेन वार्यमाणास्तु तं च ते ॥ २१ ॥
प्रत्यनीकं मन्यमाना बलभद्रं च मोहिताः ।
हन्तुं कृतधियो राजन्नापन्ना आततायिनः ॥ २२ ॥
अथ तावपि संक्रुद्धावुद्यम्य कुरुनन्दन ! ।
एरकामुष्टिपरिघौ चरन्तौ जघ्नतुर्युधि ॥ २३ ॥
ब्रह्मशापोपसृष्टानां कृष्णमायावृतात्मनाम् ।
स्पर्धा क्रोधः क्षयं निन्ये वैणवोऽग्निर्यथा वनम् ॥ २४ ॥
एवं नष्टेषु सर्वेषु कुलेषु स्वेषु केशवः ।
अवतारितो भुवो भार इति मेनेऽवशेषितः ॥ २५ ॥
रामः समुद्रवेलायां योगमास्थाय पौरुषम् ।
तत्याज लोकं मानुष्यं संयोज्याऽऽत्मानमात्मनि ॥ २६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ये चान्ये निशठादयः तेऽपि मुकुन्देनस्वमायया विमोहिता मतव्यमद्राक्षे मदेनतमसा बलात्कारिताः अन्योऽन्यमासाद्य जघ्नुर्हत वन्तः ॥ १७ ॥

तथा दाशार्हादयोऽपि दुर्धरदोषाः सौहृदं परित्यज्य मिथो जघ्नुः ॥ १८ ॥

सौहृदं परिहृत्येतदेव विशदयति । पुत्रा इति । भ्रात्रादिभिस्सह पतितसम्बन्धिन इत्यध्याहारः तथा ज्ञातयो ज्ञातीन् जघ्नुः सखिवत् सखिवत् परस्परहितैषित्वं मित्रत्वं तद्वाचे तत्वं सुहृत्त्वमिति भेदः ॥ १९ ॥

शरेष्वतिहीयमानेष्वपगतेषु मरत्सु मुष्टिभिरेरकाः विप्रशापाव-लेनवोद्वज्रवृक्षमभवान् दुर्गाविशेषान् जहुर्घ्नन्तः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अश्वबुद्रा इति केचिद्यादवविशेषाः ॥ १८ । १९

एरकाः समुद्रतीरदहः सूचीमुखतृणानि जन्मुरुत्पाटयन् ॥ २० ॥
२१—२२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मदेनमदमनसा मर्षेयत कारिताः यद्वा मंधकारमिता अन्धकारः सञ्जातो येषां ते तारकादि ॥ १७—१९ ॥

जहुर्जगृहुः ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मद्यात्मेन मदमनसा बलात्कारिताः ॥ १७ ॥

मधुरा माथुराः सूरसेनाश्च तत्तद्देशीयाः ॥ १८ ॥

भ्रातृभिश्च भ्रातरः इत्यादिशेयम् ॥ १९ ॥

धन्वसु धनुःषु जग्मुः जगृहुः ॥ २० ॥

---

भाषा टीका ।

और भी जो निशठ उल्मुकादिक सहस्रजित शतजित भानु आदिक सब मद से अंध होकर मुकुंद की इच्छा से मोहित होने से एक को एक मारने भये ॥ १७ ॥

दाशार्ह वृष्णि अंधक भोज सात्वत मधु अर्बुद माथुर सूरसेन विसर्जन कुकुर कुंति ए सब आपस में मित्रता छोड़कर युद्ध करते भये ॥ १८ ॥

पुत्रतो पिता के साथ भ्राता भ्राता के साथ बहनोई भैयता काका मामा इनके साथ सब लड़े मित्र मित्रों के साथ सुहृद सुहृदों के साथ ज्ञाति ज्ञातियों के साथ सब मोहित होकर सबको सब मारने भये ॥ १९ ॥

जब बाण चुक गये तथा धनुष टूट गये और भी सब शस्त्रहीन होगये तब उन सबों ने मुठियों से एरका का घांस उखाड़ा ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

परिघा लोहदण्डाः भृताः धृताः तञ्च श्रीकृष्णमपि ॥ २१ ॥

प्रत्यनीकं प्रतिपक्षम् एरकामुष्टिरूपौ परिघौ युद्धस्य ॥ २२—२३ ॥

स्पर्धानिमित्तः क्रोधः कुलं क्षयं निन्ये ॥ २४—२५ ॥

पौरुषं योगं परमपुरुषध्यानलक्षणम् तमथाऽऽह । संयोज्येति । मानुष्यं लोकं भूर्लोकं मनुष्यरूपतां वा ॥ २६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

एरकायुक्तमुष्ट्यायुधपरिघैः ॥ २३—२५ ॥

पौरुषं पूर्णषड्गुणभगवद्विषयं योगं ध्यानं समास्थाय सर्वगोत्कृष्टमविचलत्वेन कृत्वा योगं योगमात्मानं विष्णुमाविश्यात्मानं आन्तर्यामिणमात्मनि ध्यायते भगवद्रूपे संयोज्यैकीभवतीति संश्लिष्य देहं तत्याजे इत्यन्वयः। आत्मने पदप्रयोगेण सुखेन देहत्यागं सूचयति ॥ २६—२७ ॥

भगवता देहं त्यक्त्वा दिवं न गतं नरप्रदर्शनमसुरजनमोहनार्थं कृतमिति ज्ञापयन् शुको हरेस्तदानींतनस्वरूपप्रकारं ब्रूते बिभ्रदिति ॥ २८—३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

ब्रह्मण्यापेति स्वयं नित्यं धामेति पादतयोऽर्थः इत्यन्ते च भवनं तद्गोलोकव्यतिरिक्तमागन्तुकं मनुष्यादिकं विद्राव्य तन्निवासमेव प्रापयति तथा ॥ २३ ॥ २४ ॥

भुवो भार इति ध्यायन्तमेवाहित तांस्त्यक्त्वा स्वयमन्तर्धानं कुर्वन्निति पृथिव्या धुर्या एव ध्युरिति ॥ २५ ॥

पुरुषस्य श्रीकृष्णस्य योगं नित्ययोगमास्थाय निर्धार्य आत्मानं प्रकटलीलायां प्रकाशमानमात्मनि अप्रकटलीलायां प्रकाशमाने संयोज्य अभिन्नत्वेन विभाव्य भूर्लोकं तत्याज ॥ २६ ॥

रामनिर्याणमिति पाठान्तरे ॥ २७ ॥ ३९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

परिघा इव भूताः भूताः तं कृष्णमपि ॥ २१ ॥ २२ ॥

क्रुध्य उद्यतौ भूत्वा एरकामुष्टय एव परिघा ययोस्तौ ॥ २३—२५ ॥

मानुष्यं भूर्लोकं मनुष्यशरीरं वा ॥ २६ ॥

रामनिर्याणमित्यादिकं स्वमतमेव रामस्य निर्याणं स्वरूपेण महावैकुण्ठं प्रति गमनं स्वांशरूपेण पातालतलगमनं च २७॥२८॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

भूताः भूताः ॥ २१—२२ ॥

एरकामुष्टिरूपौ परिघौ लोहदण्डौ ययोस्तौ ॥ २३ ॥

क्षयेया यः क्रोधः स स्वयं इतरेण कुलमिति शेषः २४ २५

रामः स्वयं सङ्कर्षणांशतः शेषकर्माकिमेव भगवल्लीलावशात् अर्थं प्रविष्टः बहवैकांशेन विभुना जगती जगतः पर्यारित्युक्तत्वात् लीलासमाप्तौ शेषः समुद्रं प्रविश्य स्वस्थानङ्गत इति च लोकप्रसिद्धि प्रसिद्धं सङ्कर्षणस्यांशिनः नित्यशरीरिणः भगवति स्वयंस्वरूपे वासुदेवे श्रीकृष्णे लोकपरित्यागपूर्वकं प्रवेशमाह। राम इति। पौरुषं योगं परमभूतश्रीकृष्णध्यानलक्षणमास्थाय तदेव विधुनोति। आत्मनि। स्वांशिनि वासुदेवे श्रीकृष्णे वासुदेवकलानन्त इत्युक्तत्वात् आत्मानमंशभूतं संयोज्य लोकं नरलोकं तत्याज परेषां लोकानां लोकशिक्षार्थे अग्निवज्रेशस्वधर्मविशेषविशिष्टे लक्ष्मभरणादिकमुपशरीरं ध्यानविशेषं निधापति पाप्यं



एवं प्रद्युम्नाविर्भूतः कामः स्वस्थानं गतः प्रद्युम्नः श्रीकृष्णे प्रविवेश तथानिरुद्धोऽपि श्रीकृष्णावेशेन स्वस्थानं प्राप्त इति ज्ञेयम् ॥ २६ ॥

धरोपस्थे भूतले ॥ २७ ॥

बिभ्रच्चतुर्भुजं रूपमिति। आनन्दवृन्दावनीतलीवककन्दोलकरीलोपदेशं प्राप्यापि भगवति स्नेहातिशयेन मैत्रेयसमीपे पुनर्लीलामाधुर्यरसास्वादनकामनया पुनः प्रायश्चोद्धवस्य मैत्रेयादीनां च विमतिविनाशजननाय द्विभुजेनैव रूपेण भ्राजिष्णु परमज्योतिर्भूतं चतुर्भुजं रूपं बिभ्रत्सत् निषसाद काश्चित्तु चतुर्भुजं रूपं विहाय नैमित्तिकं द्विभुजरूपस्वीकरणं प्रादुर्भावः द्विभुजं नराकारं रूपं विहाय स्वाभाविकचतुर्भुजरूपस्वीकरणमन्तर्धानमिति वदन्ति तेऽनेनैव प्रत्युक्ताः किञ्च तत्र हि। चतुर्भुज इत्यादौ श्रीमाविर्भावितश्रावनाय द्विभुजरूपेण चतुर्भुजरूपप्रदर्शनेऽपि तदुक्तरीत्यैव चतुर्भुजरूपस्यापि द्विभुजरूपकार्यत्वं च पुनः पुनः आविर्भावतिरोभावस्थापयत तस्मात्त उपेक्षणीयाः ॥ २८ ॥

---

भाषा टीका।

वे घास वज्र सरीके होगये भगवन्माया से मुठि में लेते मात्र परिघ आयुध होगये उनहीं से शत्रु होकर मारने लगे श्रीकृष्णजी ने मना किया तो उनको भी वे उन्मत्त मारने लगे ॥ २१ ॥

वे लोग बड़े मोहित होकर रामकृष्ण दोनों को विरोधी समझने लगे और शस्त्र लेकर मारने की बुद्धि करने लगे ॥ २२ ॥

इसके अनन्तर हे कुरु नंदन परीक्षित जी वे भी रामकृष्ण दोनों एरका घास की मूठी को परिघ आयुध बनाकर उन सबों को मारते हुये उस युद्ध में विचरने लगे ॥ २३ ॥

ब्राह्मणों के शाप से युक्त हुये विशेष करके श्रीकृष्ण की माया से मोहित उन यादवों को स्पर्धा क्रोधने क्षय कर दिया जैसे कि बांसों का अग्नि सब वनको नाश कर देता है ॥ २४ ॥

इस प्रकार से अपने सब कुलों के नष्ट होजाने से केशव भगवान् भी समझा की जो पृथिवी का भार बाकी था सो भी उतर गया है ॥ २५ ॥

श्रीबलरामजी ने तो समुद्र के किनारे जाकर परमात्मा का ध्यान रूप योग को धारण करके परमात्मामें मन लगाकर मनुष्य लोक को त्याग दिया ॥ २६ ॥

श्रीबलरामजी का जाना देखकर देवकी सुत श्रीकृष्ण भगवान् भी एक पीपल के पेड़ का आश्रय लेकर मौन होकर पृथिवी पर ही बैठ गये ॥ २७ ॥

उस समय चतुर्भुज रूप को धारण किया और अपनी प्रकाशमान प्रभा के द्वारा सब दिशाओं के अंधिकार को रात्रि में भी दूर करते हुये ऐसे प्रकाशित भये जैसे बिना धुआं का दीप्त अग्नि होवे ॥ २८ ॥

---

श्रीवत्साङ्कं घनश्यामं तप्तहाटकवर्चसम् ।
कौशेयाम्बरयुग्मेन परिवीतं सुमङ्गलम् ॥ २९ ॥
सुन्दरस्मितवक्त्राब्जं नीलकुन्तलमण्डितम् ।
पुण्डरीकाभिरामाक्षं स्फुरन्मकरकुण्डलम् ॥ ३० ॥
कटिसूत्रब्रह्मसूत्रकिरीटकटकाङ्गदैः ।
हारनूपुरमुद्राभिः कौस्तुभेन विराजितम् ॥ ३१ ॥
वनमालापरीताङ्गं मूर्तिमद्भिर्निजायुधैः
कृत्वोरौ दक्षिणे पादमासीनं पङ्कजारुणम् ॥ ३२ ॥
मुसलावशेषायःखण्डकृतेषुर्लुब्धको जरा ।
मृगास्याकारं तच्चरणं विव्याध मृगशङ्कया ॥ ३३ ॥
चतुर्भुजं तं पुरुषं दृष्ट्वा स कृतकिल्बिषः ।
भीतः पपात शिरसा पादयोरसुरद्विषः ॥ ३४ ॥
अजानता कृतमिदं पापेन मधुसूदन! ।
क्षन्तुमर्हसि पापस्य उत्तमश्लोकमेऽनघ! ॥ ३५ ॥
यस्यानुस्मरणं नृणामज्ञानध्वान्तनाशनम् ।
वदन्ति तस्य ते विष्णो मयाऽसाधु कृतं प्रभो! ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवानुवर्णयति । श्रीवत्साङ्कमिति चतुर्भिः ॥ २९ ॥

सुन्दरस्मितं वक्त्राब्जं यस्मिंस्तत् पुण्डरीकवदभिरामे सुन्दरे अक्षिणी यस्मिंस्तत् ॥ ३०—३१ ॥

वनमालापरीतान्यङ्गानि यस्मिंस्तत् निजायुधैश्च परीताङ्गम् पङ्कजारुणं वामं पादं दक्षिणे ऊरौ कृत्वा आसीनं रूपं विभ्राणमिति पूर्वेणान्वयः ॥ ३२ ॥

जरा नाम कश्चिल्लुब्धको मृगयुः मृगास्यमिवाकारो यस्य तं चरणम् ॥ ३३—३७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रूपं विशिनष्टि । श्रीवत्साङ्कमिति। श्रीवत्सः अङ्कश्चिह्नं वक्षसि यस्य तत् घनो नीलमेघस्तद्वत् श्यामं तप्तसुवर्णस्येव वर्चो यस्य तेन कौशेयाम्बरयुग्मेन परिवीतं परितः कटिप्रदेशे उपरि चावृत सुमङ्गलं निरतिशयसुन्दरम् ॥ २९ ॥

सुन्दरस्मितवक्त्राब्जं यस्मिन् पुण्डरीकवदभिरामे सुन्दरे अक्षिणी यस्मिंस्तत् ॥ ३० ॥

कटिसूत्रादिभिर्विराजितं तत्र मुद्रा अङ्गुलीयकं योगमुद्रा वा ॥ ३१ ॥

वनमालया परीतान्यङ्गानि यस्मिंस्तत् मूर्तिमद्भिः स्वासाधारणरूपधरैर्निजायुधैश्चक्रशङ्खादिभिर्विराजितं दक्षिणे ऊरौ पङ्कजवदरुणं पादं वामं कृत्वा निषायासीनं रूपं बिभ्राणमिति पूर्वेण सम्बन्धः ॥ ३२ ॥

तत्र जरा नाम लुब्धकः मृगास्यस्येवाकारो यस्य तं तस्य भगवतश्चरणं मृगोऽयमिति शङ्कया विव्याध मुसलावशेषायःखण्डकृतेषुणा ताडितवानित्यर्थः ॥ ३३ ॥

ततश्च चतुर्भुजं तं कृष्णं परमपुरुषं ज्ञात्वा कृतकिल्बिषः कृतापराधः हन्तुगर्भोऽहम् अतो भीतः असुरद्विषः भगवतः पादयोः शिरसा स्पृशन्पपातेति शेषः ॥ ३४ ॥

उक्तिमेवाह । अजानतेति । हे मधुसूदन ! अजानता तत्र हेतुः पापेन पापात्मना इदमागः कृतं हे उत्तमश्लोक ! हे अनघ पापस्य मे मया कृतं क्षन्तुमर्हसि ॥ ३५ ॥

यस्य तवानुस्मरणमात्रमेवाज्ञानमेवान्धकारस्तस्य नाशकं वदन्ति वृद्धाः तस्य तवाहं विष्णो मयाऽसाधु कृतं हे प्रभो ! ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्र श्रीकृष्णोऽसुरजनमोहकरीं मायां प्रकटयति । जराख्यव्याधेनत्याह । मुसलेति । मुसलावशेषायःखण्डेन कृतं इषुशरो यस्य स मुसलावशेषायःखण्डकृतेषुः चूर्णितमुसलावशिष्टाय:खण्डेन कृतशरवानित्यर्थः । मृगाकार मृगत्वबुद्धिजनकम् ॥ ३३—३४ ॥

अजानता मया ॥ ३५ ॥

आसाध्वनुष्ठितम् ॥ ३६ ॥

तमन्वगच्छन् दिव्यानि विष्णुप्रहरणानि च ।
तेनातिविस्मितात्मानं सूतमाह जनार्दनः ॥ ४५ ॥

गच्छ द्वारवतीं सूत ! ज्ञातीनां निधनं मिथः ।
सङ्कर्षणस्य निर्याणं बन्धुभ्यो ब्रूहि मद्दशाम् ॥ ४६ ॥

द्वारकायां च न स्थेयं भवद्भिश्च स्वबन्धुभिः ।
मया त्यक्तां यदुपुरीं समुद्रः प्लावयिष्यति ॥ ४७ ॥

स्वं स्वं परिग्रहं सर्वे आदाय पितरौ च नः ।
अर्जुनेनाविताः सर्वे इन्द्रप्रस्थं गमिष्यथ ॥ ४८ ॥

त्वं तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः ।
मन्मायारचनामेतां विज्ञायोपशमं व्रज ॥ ४९ ॥

इत्युक्तस्तं परिक्रम्य नमस्कृत्य पुनः पुनः ।
तत्पादौ शीर्ष्ण्युपाधाय दुर्मनाः प्रययौ पुरीं ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे यादवान्तर्धानं नाम
त्रिंशोऽध्यायः ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दारुकः श्रीकृष्णसारथिः अन्विच्छन् अन्वेषयन् ॥ ४१ ॥
तं श्रीकृष्णं पतिं तत्र दृष्ट्वा पादयोर्निपपात ॥ ४२—४३ ॥
उदीक्षतः पश्यतः सतः ॥ ४४—४५ ॥

———

भाषा टीका ।

हे वैकुण्ठ ! जिसमें ऐसे पापी हिंसक लुब्धक मेरे को आप जल्दी से मार दीजिये जिससे की मै फिर इस प्रकार का महापुरुषों का अति क्रमण नहीं करूं ॥ ३७ ॥

जिन आपके आत्म योग से रचित कार्य को ब्रह्मा-रुद्र आदि के जो जो इस जगत् के पति हैं जो वेदों के जानने वाले है वे नहीं जानते हैं उन सबों की दृष्टि आपकी माया से लुप्त हो गई है तब इस आपकी लीला को सहज में खोटे मार्ग वाले हम लोग कैसे जान सकते हैं ॥ ३८ ॥

श्रीभगवान् बोले हे जरा ! तु मत डर यह कार्य सब मैंने किया है अब तु मेरी आज्ञा से धर्मात्मा लोगों के जाने लायक स्वर्ग स्थान को चला जा ॥ ३९ ॥

इच्छा से शरीर धारी भगवान् की ऐसी आज्ञा होते मात्र उस जरा ने भगवान् के चरण पकड़कर प्रणाम किया उसी वख्त आकाश से विमान आया तब उसपर बैठकर वह स्वर्ग को चलागया ॥ ४० ॥

उधर दारुक सारथि भी कृष्ण भगवान् को ढूंढता हुआ नहीं मिलने पर तुलसी की सुगंधी के वायु को सूंघकर भगवान् के सम्मुख चला आया ॥ ४१ ॥

वहां पर उस दारुक सारथी ने देखा कि बड़े तेज वाले आयुधों से भगवान् आवृत हो रहे हैं सो पीपल के पेड़ के नीचे उनने निवास किया है तैसे ही अपने पति को देखकर रथ से उतर कर स्नेह से अत्यन्त उत्कण्ठित होकर आंखों में आंसुओं को भरकर चरणों में गिरपड़ा ॥ ४२ ॥

फिर बोला कि हे प्रभो ! आपके चरण कमल के न देखने से मेरी दृष्टि नष्ट होगई सब अंधेरा हो गया मेरे को कोई दिशा नहीं मालूम पड़ती कहीं शान्ति नहीं मिली जैसे रात्र में चन्द्रमा के डूबने से होता है ॥ ४३ ॥

उस सारथि के ऐसे कहते ही सारथी के आधीन जो गरुड के ध्वजा का रथ था सो शीघ्र ही आकाश को चला गया हे राजेन्द्र ! उसके देखते देखते घोड़ा ध्वजा आदि के सब साथ ही चले गये ॥ ४४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

निर्याणं योगमार्गेण मद्दशामितीच्छाशरीरामिप्रायेण ॥ ४६-४७ ॥
अविता रक्षमाणा इन्द्रप्रस्थं गमिष्यथेति ब्रूहीतिपूर्वेणान्वयः ॥ ४८ ॥
मन्मायारचनामेतां विज्ञायेति निजमूर्तेरन्तर्हितत्वान्मृषा शोकं माकुर्वित्यर्थः ॥ ४९ ॥
कुलक्षय निमित्तत्वाद्दुर्मनाः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रिंशोऽध्यायः ॥ ३० ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनीटिप्पणी ।

तं रथमनु । तेन रथादीनामाकाशगमनेन ॥ ४५ ॥
यदुकुलस्य निधनं नितरां धनम् अप्रकटधामगमनम् ॥ ४६ ॥
प्लावयिष्यति प्रमितः प्लावनेनाऽवरिष्यति ॥ ४७—५० ॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपन टिप्पणे ।
त्रिंशोऽध्यायः ॥ ३० ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धव्याख्याने
श्रीसुदर्शनसूरिकृतशुकपक्षीये
त्रिंशोऽध्यायः ॥ ३० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः विष्णुप्रहरणानि भगवदायुधानि चक्रादीन्यपि तं रथमन्वगच्छन् तेनायुधानामूर्ध्वगमनेनातीव विस्मित आत्मा मनो यस्य तं सूतम् ॥ ४५ ॥
तदेवाह । गच्छेति चतुर्भिः । हे सूत ! मिथो युद्धेन ज्ञातीनां निधनं सङ्कर्षणस्य रामस्य निर्याणं महाप्रस्थानं बन्धुभ्यो ब्रूहि ॥ ४६ ॥
द्वारकायां चेति चरणपूरणे ॥ ४७ ॥
तर्हि किं विधेयं क गन्तव्यमत आह । स्वं स्वमिति । परिग्रहं देहानुबन्धि गोऽश्वमाकं पितरौ देवकीवसुदेवौ चादाय सर्वे यूयमर्जुनेनाविता रक्षिताः सन्त इन्द्रप्रस्थं गमिष्यथ ॥ ४८ ॥
तर्हि मम का गतिरित्यत्राह । त्वमिति । त्वन्तु मद्धर्मं भागवतधर्ममास्थायानुष्ठाय ज्ञाननिष्ठः मद्भक्तियोगनिष्ठः उपेक्षकः सर्वेष्वपि शब्दादिविषय एतां जगतीं मन्मायया रचितां विज्ञाय उपशमं रागाद्यकलुषतां व्रज प्राप्नुहि ॥ ४९ ॥
तं श्रीकृष्णं परिक्रम्य तस्य पादौ शिरस्युपाधाय दुर्मनाः दुःखितमनाः भगवद्वियोगादिति भावः । पुरीं द्वारकां ययौ ॥ ५० ॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रिंशोऽध्यायः ॥ ३० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तेन रथादिगमनेन ॥ ४५—४८ ॥
पुत्राद्यनुपेक्षकः एतां भेसारवृत्तिमन्मायया मदिच्छया रचना प्रकारो यस्याः सा मन्मायारचना ताम् ॥ ४९ ॥
दुर्मनाः दुःखितान्तःकरणः पुरीं द्वारवतीसंज्ञाम् ॥ ५० ॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रिंशोऽध्यायः ॥ ३० ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निधनमिति वास्तवार्थे नितरां धनम् अप्रकटलीलासंवलनाशि देशान्तरप्रयुगतिलक्षणम् ॥ ४६ ॥
समुद्रः प्लावयिष्यतीति यदितः प्लावनमपि तेषां स्वाज्ञमात्रमेव प्लावनमात्रमुक्तम् ॥ ४७ ॥ ४८ ॥
अथ दारुकस्यान्त्वनाय श्रीबलरामार्जुनपरामर्शवर्जिताया आशिषा मायेन्द्रजालवदृष्टिवत्तमुपदिशति । त्वमिति । त्वन्तु दारुको ज्ञाननिष्ठो मदीयलीलातत्त्वज्ञः मद्धर्मे मम अप्रकटप्रति पादकस्वरूपं अनुरूपपरिकरभङ्गिस्वरूपं च आस्थाय अथवा विज्ञाय एताम् अधुना प्रकाशितां सर्वामेव मौसलादिलीलां मम माययैव इन्द्रजालवद्रचितां विज्ञाय उपेक्षको बहिर्दृष्ट्या जाते शोकमुपेक्षमाणः उपशमं चित्तक्षोभनिवृत्तिं व्रज प्राप्नुहि तुल्यत्वेनान्ये तावन्मुह्यन्तु नाम तव तथा मोहो न युक्त एवेति ध्वनितम् अत्र श्रीदारुकस्य चार्थं वैकुण्ठाद्वतीर्णत्वेन सिद्धत्वाद्वैतामिश्रत्वातिसन्निहितार्थमाज्ञामात्रया ध्यानमात्रमेव मया मनतीत्यपि चेत इति विवक्षयं दृश्यते चैवं परिपाटी स्वर्गपर्वणि प्रतीतिः श्रीभीमादिनरकं श्रीयुधिष्ठिरं प्रति धर्मराजवचनम्—
नच ते भ्रातरः पार्थ ! नरकस्था विशां पते ! ।
मायैषा देवराजेन महेन्द्रेण प्रयोजिता ॥ इति ॥ ४९ ॥
तथापि बहिर्दृष्ट्या दुर्मनाः ॥ ५० ॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
त्रिंशोऽध्यायः ॥ ३० ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

गच्छेति रथस्य वैकुण्ठप्रस्थापनेऽपि सारथेस्तस्य वैकुण्ठप्रस्थापनं सर्वत्र तात्कालिकवृत्तज्ञापनार्थं तथा वैकुण्ठादागतस्य तस्येह नित्यपार्षदानामुद्धवादीनां संगतः प्रेक्ष्येति बुद्धिं दृष्ट्वा द्वारकाया अप्रकटप्रकाशगतलीलायामेव प्रवेशनार्थं चेतिगतस्य महत्यामिति ब्रुवन् भाविनीमवस्तुभूतां लीलां सूचयति ॥ ४६—४८ ॥
ननु सच्चिदानन्दात्मकस्य स्वविग्रहस्य रामादिविग्रहस्य चैतादृशः प्रकारोऽयं क इति कृपयामायामावश्यकत्वात आह । मन्मायेति एतां प्रदर्श्यमानां लीलाम् ॥ ४९—५० ॥
इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
त्रिंश एकादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ३० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निधनमुक्तप्रकारम् ॥ ४६—४७ ॥
अविताः रक्षमाणाः इन्द्रप्रस्थं गमिष्यथेति ब्रूहीति पूर्वेण सम्बन्धः ॥ ४८ ॥
एतां प्राकृतविसृष्टिं मन्मायारचनां विज्ञाय शमं शान्तिं । व्रज प्राप्नुहि ॥ ४९ ॥ ५० ॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीय
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रिंशाध्यायार्थप्रकाशः ॥ ३० ॥

भाषा टीका ।

उस रथ के पीछे विष्णु भगवान् के सब दिव्य चक्रादिक आयुध भी चले गये इस चरित्र को देखकर अत्यन्त विस्मित भये अपने सारथि को देखकर जनार्दन भगवान् बोलते भये ॥ ४५ ॥

हे सात्यकी सारथि! तुम अभी द्वारका को जाओ वहां जाकर सब से इन बन्धुओं के आपस से अन्तर्धान न होने का समाचार कहो और सब बन्धुओं से बलदेवजी के जाने का हाल और हमारी भी इस स्थिति को कहो ॥ ४६ ॥

और तुम लोगों को बन्धुओं के सहित किसी को द्वारका में नहीं रहना चाहिये जिस वखत मैं पृथिवी में अन्तर्धान होऊंगा उसी वखत द्वारका को समुद्र डुबादेवेगा ॥ ४७ ॥

तुम सब लोग अपने कुटुम्बों को साथ में लेकर निकसा रक्षा में अर्जुन तुमारी रक्षा करते रहेंगे तब दिल्ली को चलेजाना ॥ ४८ ॥

हे सारथि तुम तो हमारे भागवत धर्मों को आश्रय कर के ज्ञान में निष्ठा रखो संसार की उपेक्षा करो यह सब युद्धादिक होना हमारी इच्छा मात्र जानो इसका कोई शोच मत करो और शांति को प्राप्त होजाओ ॥ ४९ ॥

भगवान् के ऐसे कहने से सारथी ने श्रीकृष्ण भगवान् की प्रदक्षिणा करके बारम्बार नमस्कार किये फिर उन के चरणारविन्द को मस्तक में लगाकर वियोग से दुःखित होकर द्वारका को चले गये ॥ ५० ॥

इति श्री भागवत एकादश स्कन्ध तीस में अध्याय की

भाषा टीका समाप्त ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे त्रिंशोऽध्यायः ॥ ३० ॥



## अथैकत्रिंशोऽध्यायः ॥

—:*:—

। श्रीशुक उवाच ।

अथ तत्रागमद्ब्रह्मा भवान्या च समं भवः ।
महेन्द्रप्रमुखा देवा मुनयः सप्रजेश्वराः ॥ १ ॥

पितरः सिद्धगन्धर्वा विद्याधरमहोरगाः ।
चारणा यक्षरक्षांसि किन्नराप्सरसो द्विजाः ॥ २ ॥

द्रष्टुकामा भगवतो निर्याणं परमोत्सुकाः ।
गायन्तश्च गृणन्तश्च शौरेः कर्माणि जन्म च ॥ ३ ॥

ववृषुः पुष्पवर्षाणि विमानावलिभिर्नभः ।
कुर्वन्तः सङ्कुलं राजन् ! भक्त्या परमया युताः ॥ ४ ॥

भगवान् पितामहं वीक्ष्य विभूतीरात्मनो विभुः ।
संयोज्याऽऽत्मनि चाऽऽत्मानं पद्मनेत्रे न्यमीलयत् ॥ ५ ॥

लोकाभिरामां स्वतनुं धारणाध्यानमङ्गलम् ।
योगधारणयाऽऽग्नेय्याऽदग्ध्वा धामाविशत्स्वकम् ॥ ६ ॥

दिवि दुन्दुभयो नेदुः पेतुः सुमनसश्च खात् ।
सत्यं धर्मो धृतिर्भूमेः कीर्तिः श्रीश्चानु तं ययुः ॥ ७ ॥

देवादयो ब्रह्ममुख्या न विशन्तं स्वधामनि ।
अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिताः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकत्रिंशे स्वकं धाम जगाम भगवानितः ।
तमेवानु ययुः प्रीत्या वसुदेवादयस्ततः ॥
देवान् यदूंस्तथाऽऽवादौ भूयो देवाग्निधाम च ।
श्रीकृष्णः स्वेच्छया धाम स्वतन्वैव समाविशत् ॥

मुनयः सनकादयः प्रजेश्वरा मरीच्यादयः ॥ १ ॥ द्विजा गरुडलोकनिवासिनः पक्षिणः मैत्रेयादयो वा ॥ २ ॥ भगवतो निर्याणं द्रष्टुकामाः सन्तः परमोत्सुकास्तत्रागमन् निर्याणोत्सवकृतं महोत्सवमाह सार्धेन । गायन्तश्चेति ॥ ३—४ ॥

विभूतीरिन्द्रादीन् स्व पद्मनेत्रे न्यमीलयदित्यत्रायं भावः पूर्वं ब्रह्मादिभिः ' सर्वांल्लोकान् लोकपालान् पाहि वैकुण्ठ ! किङ्करान् ' इति प्रार्थितत्वात्तद्विसर्गं च स्वं स्वं लोकं प्रति नेतुमागतत्वात्तेषु च तेषु दाक्षिण्यपात्रत्वमाविर्भावितुं समाधिमिव कुर्वन्नेव न्यमीलयदिति ॥ ५ ॥

योगिनामिव स्वकान्त्यभूत्युपायं दर्शयति । लोकाभिरामामिति । अयमर्थः योगिनो हि स्वदेहत्यागमूलमयः स्वां तनुमाग्नेय्या योगधारणया दग्ध्वा लोकान्तरं प्रविशन्ति भगवांस्तु न तथा किन्तु दग्ध्वैव स्वतनुसहित एव स्वकं धाम वैकुण्ठाख्यमविशत् तत्र हेतुः लोकाभिरामाम् लोकानामभिरामोऽ

मर्त्येन यो गुरुसुतं यमलोकनीतं त्वां चानयच्छरणदः परमास्त्रदग्धम् ।
जिग्येऽन्तकान्तकमपीशमसावनीशः किं स्वावने स्वरनयन् मृगयुं सदेहम् ॥ १२ ॥

तथाप्यशेषस्थितिसम्भवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक् ।
नैच्छत्प्रणेतुं वपुरत्र शेषितं मर्त्येन किं [1]स्वस्थगतिं प्रदर्शयन् ॥ १३ ॥

य एतां प्रातरुत्थाय कृष्णस्य पदवीं पराम् ।
प्रयतः कीर्तयेद्भक्त्या तामेवाप्नोत्यनुत्तमाम् ॥ १४ ॥

दारुको द्वारकामेत्य वसुदेवोग्रसेनयोः ।
पतित्वा चरणावस्रैर्न्यषिञ्चत्कृष्णविच्युतः ॥ १५ ॥

कथयामास निधनं वृष्णीनां कृत्स्नशो नृप ! ।
तच्छ्रुत्वोद्विग्नहृदया जनाः शोकविमूर्च्छिताः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अभिप्रायापरिज्ञानात्प्रथमं परिक्लिष्टान् ततश्च दृष्टान्तेन स्वपदमुक्तं दृढं दृष्ट्वा पुनस्तमेवार्थं प्रपञ्चयति त्रिभिः । परस्य सर्वकारणस्य तनुभृत्सु यादवादिषु जननाप्ययेहाः आविर्भावतिरोभावरूपाश्चेष्टा मायया मनुष्यकरणमात्रमित्याह नटो यथा अविकृत एव नानारूपैर्जन्मादीन्विडम्बयति तद्वत् मायया स्वजन्मादिप्रकाश्य पश्चात्सृष्टिस्थितिनिरोधादिस्वरूपमाविष्कृत एवास्त इत्याह । सृष्ट्वेति । आत्मना स्वयमेवेदं जगत्सृष्ट्वा अन्तर्यामित्वेनानुविश्य आत्ममहिम्ना स्वमहिम्ना उपरत आस्ते ॥ ११ ॥

न पुनरन्यथा मर्त्यवत् यतोऽयमसमर्थः इत्याह । मर्त्येनेति । यमेन स्वलोकं प्रति नीतं गुरुसुतं मर्त्येन तेनैव शरीरेण य आनयत् शरणदः शरणागतरक्षकस्त्वां च ब्रह्मास्त्रदग्धं यो रक्षितवान् यश्चान्तकानामन्तकमपि ईशं श्रीरुद्रं बाणसंग्रामे जितवान् मृगयुं लुब्धकं सदेहं स्वः स्वर्गमनयत् असौ स्वावने स्वरक्षणे अनीशोऽसमर्थः किम् ॥ १२ ॥

ननु यदि समर्थस्तर्हि किञ्चित्कालमत्रैव तेनैव वपुषा किं नातिष्ठत्तत्राह । तथापीति । यद्यप्युक्तप्रकारेणाशेषस्य जगतः स्थावरस्य स्थित्यादिष्वनन्यहेतुर्निरपेक्ष एव कारणं स्वयं यद्यस्मादशेषशक्तिधृक् तथापि यादवान् संहृत्य निजं वपुरत्र शेषितमवशेषितं प्रणेतुं कर्तुं नैच्छत किन्तु स्वमेव लोकमनयत् तत्र हेतुः मर्त्येन देहेन किं न किञ्चित्कार्यमिति स्वस्थानामात्मनिष्ठानां दिव्यां गतिमेव प्रकटां दर्शयन् अन्यथा तेऽपि दिव्यां गतिमनादृत्य योगबलेन देहसिद्धिं विधायात्रैव स्थातुं यतेरन् तन्माभूदित्येतद्दर्शयितुमिति भावः ॥ १३ ॥

य एतामुक्तप्रकाराम् पदवीं गतिम् ॥ १४ ॥

तदैव भगवता स्वलोकं गच्छता वसुदेवादीनामपि तत्प्राप्तये उपायश्चिन्तित आसीदित्याह । दारुक इत्यादिना ॥ १५—१७ ॥

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपनी टिप्पणी ।

मर्त्येनेति विशेषणस्य व्यावर्तकत्वात् देवेनतु सहैव इति व्याख्यातम् एवं परत्रापि अत एवार्थिकार्थत्वादित्यर्थं इत्युक्तम् ॥ ९ ॥ १० ॥

तमेवार्थं नाट्यशालीनाया मायिकत्वरूपार्थं यावता यतो हेतोः स्वमहिम्ना परमानन्दस्वरूपावस्थानेन ॥ ११ ॥

अन्यथा जीववज्जन्मादिप्रकारवत्तया यतो हेतोः । स्वस्य स्वानां यदूनां चावने रक्षणे असमर्थः किम् अपि तु परमसमर्थः तस्मात्तस्येत्थंभावादेव बहिर्मुखानां प्रतारणमात्रमपि किन्तु सशरीरं तेषां स्वस्य च स्वलोकगमनं तत्रापि युक्तमित्यर्थः ॥ १२ ॥

अत्रैव भूलोक एव । यादवांश्च विहारोपयुक्तत्वेन स्वस्कृ-? महाकवान् संहृत्य अप्रकटधाम्नि संगमय्य । अत्र भूलोकेऽव-स्थातुमिच्छाविरहे अन्यथा मर्यादातिक्रमेण बहुकालावस्थाने तेऽपि योगिनोऽपि अत्रैव मर्त्यलोक एव । तत् मर्त्यलोके निजयावेशेन रमणमिति वैराग्यदर्शनं बाह्य प्रयोजनमान्तरी-यन्तु नित्यपरिकरवियोगासहनमेवेति ज्ञेयम् ॥ १३ ॥

उक्तप्रकारां शरीरपरिकरसहिताम् गतिमप्रकटप्रकाश-गमनम् ॥ १४ ॥

दारुक इति सार्धकम् । ततप्रान्तेय? स्वलोकप्रान्तेय? । निधनं तत्तुतत्तु निवर्तनं धन? निजलोकगमनम् ॥ १५ ॥

तच्छ्रुत्वेति सार्धकम् । अत्र वियोगस्य वर्णनात्? ... रोपणमिति ज्ञेयम् ॥ १६-१७ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

जगन्मोहनमेव विवृणोति । राजन् ! परस्येत्यादिना तनुभृज्जनना-प्ययेहा इत्यभूततद्वज्जननाप्ययेहा जन्मना गर्भसम्भवः सापेक्षस्य देहप्रहाणं च मोहनमित्यर्थः ॥ ११-१२ ॥

[1] स्वस्थगतिमिति विज० पाठः ।

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

नैच्छत्प्रणेतुमिति। इतरमर्त्यविलक्षणया प्रकारेण नेतुं नैच्छत् वपुरत्र शायितं वपुरेकदेशतुल्यवपुरन्तरपरिकल्पनेन मोहनं कृतं तस्य प्रयोजनं शरीरस्योपलब्धिगोचरत्वापनमित्याह। मर्त्येनेति। मर्त्येन शरीरेण स्वभक्तप्रियस्वरूपेण तिरोधानमात्रं नतु इतरसजातीयवपुर्देहप्रहाणमित्यर्थः। १३-२७॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अविज्ञातगतिरत्र दृष्टान्तः। सौदामन्या इति। काले वर्षासु आकाश इति पाठान्तरं मेघमण्डलं हित्वा यान्त्याः सौदामन्या विद्युतः पुनर्गतिर्मर्त्यैर्न लक्ष्यते तथा श्रीकृष्णस्य गतिरपि दैवतैर्न लक्ष्यते किन्तु तत्पार्षदैरेव लक्ष्यत इति भावः॥ ९॥

ब्रह्मेति। योगगतिं योगपूर्वकगतिं दृष्ट्वा हे नृप! तां गतिं प्रशंसन्तः स्वं स्वं धाम निवासस्थानमगमन् जग्मुरित्यर्थः॥ १०॥

स्वधामनि विशन्तं भगवन्तं न ददृशुरित्यनेन जगन्मोहनं सूचितं तद्विवृणोति। राजन्निति त्रिभिः। हे राजन्! परस्य परमपुरुषस्य तनुभृज्जननाप्ययेहाः तनुभृत्सु भवदादिषु जननाप्ययेहाः। उत्पत्तिमरणरूपाश्चेष्टा मायाविडम्बनमनुकरणमात्रमित्यवेहि यद्वा इतरतनुभृत्तुल्यजननाप्ययेहाः जन्मतो गर्भसम्बन्धप्रदर्शनमप्ययस्य देहत्यागरूपत्वप्रदर्शनमित्येवं विधाश्चेष्टा मायाविडम्बनं मोहनमात्रमित्यर्थः। ईहाशब्दोऽवस्थापरो वा इतरतनुभृद्वदात्मनो जन्ममरणयोगिभिर्देहसम्बन्धत्यागाभ्यां विडम्बनमात्रं यथा नटस्य तस्य नानाभूमिकापरिग्रहोऽप्येवमात्मनि नानारूपतामोहनमात्रं वस्तुतस्तात्त्विकत्वेनानिर्धारितत्वादुत कियदेतादृतैरलक्ष्यं तस्य गमनमित्याह। स परमपुरुषः इदं चिदचिदात्मकं जगत्सृष्ट्वाऽनुप्रविश्य बहिरवतारैर्विहृत्य च अन्ते द्विपरार्धावसाने कृत्स्नं जगत्स्वस्मिन्संहृत्य चात्ममहिम्ना स्वात्मानुभवविषयभूतेन उपरतः निवृत्तजगद्व्यापार आस्ते एव मिथ्यापरमहिम्नः कियदेतदित्यर्थः॥ ११॥

मर्त्येनाऽस्मान्नयच्च महिमाऽतिमेवावतारे दृष्ट इत्याशयेनाह- मर्त्येनेति यमलोकं प्रति नीतं गुरोः सन्दीपनस्य सुतं मर्त्येन तेनैव शरीरेण युक्तं पुनरानयत् परमास्त्रं ब्रह्मास्त्रं तेन दग्धं त्वां परीक्षितं शरणदः स्वस्मात्तुरीति शेषः। यो रक्षितवान् तथा मृत्योरपि मृत्युमीशं रुद्रं बाणासुरयुद्धे यो जिग्ये जितवान् यश्च मृगयुं सदेहं सशरीरमेव स्वर्गमनयत् सोऽसौ भगवानस्थापित अवनतमालक्ष्यं गमनम अवरक्षणागत्यादीनि अनुशासनात् अशेषः किमसमर्थः किमित्यर्थः॥ १२॥

तर्हि निर्वाणविधिविप्रशंसिभगवानत्रैव किमिति न तस्थावित्यत आह। तथापीति। यत यद्यप्यशेषशक्तिभृगत्- आत्मनः जगतः स्थित्यादिष्वनन्यहेतुरनन्यापेक्षकारणभूतस्यापि मर्त्यत्र शरीरं यथा तथा नैच्छत्किन्तु प्रणेतुमैच्छदित्यर्थः। एकशय्याश्रितेति शत्रुगोहस्थितिरिति शास्त्रैः स्वक्यः स्व आत्मनि स्थितः योगीत्यर्थः। गत्यर्थाः बुद्ध्यर्थाः तस्य गतिं बुद्धिं प्रदर्शयितुमित्यर्थः। एतदर्शनमसामिनीय दर्शयति मर्त्येन किमिति मर्त्येन मरणशीलेन शरीरेण किम् काश्चिदपि पुरुषार्थः उत्पत्तिमरणवत्त्वस्य कालान्तरेऽपि मृत्युमहताऽनेन किमिति भाव॥ १३॥

मंगलस्मृतिकीर्तनफलमाह। य इति। एतामुक्तप्रकारां परां विलक्षणां पदवीं गतिं भक्त्या संकीर्तयेत् ततः संकीर्तनात्तामेव तादृशीमेव गतिं वैकुण्ठगतिमिति यावत्॥ १४॥

एवं भगवद्गतिमुक्त्वा अथ तत्प्रेषितदारुकवचनेन वसुदेवादीनां गतिमाह। दारुक इत्यादिना। एत्य गत्वा वसुदेवोग्रसेनयोः पुरत इति शेषः पतित्वा तयोश्चरणावश्रुभिर्व्यषिञ्चत् तत्र हेतुः कृष्णेन विच्युतः रहितः॥ १५॥

कथयामासेति। तत्रत्याः द्वारकास्थाः तद्वृष्णिनिधनादिकं श्रुत्वाऽतिप्रहृदया भीतमानसाः जग्मुरिति सम्बन्धः॥ १६॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यथा मर्त्यैरभ्रमण्डलं भित्त्वाकाशे यान्त्याः सौदामिन्याः गतिर्न लक्ष्यते तथा कृष्णस्य गतिर्दैवतैर्न लक्ष्यते॥ ९-१०॥

जन्मादिमतो हरेरनुमरणमिति कथं घटत इति तत्राह राजन्निति। परस्य सर्वविलक्षणस्य परमात्मनस्तनुभृज्जननाप्ययस्य ईहा चेष्टा या तां मायाविडम्बनं स्वेच्छानुकरणमवेहि यथा नटस्य राजादिरूपग्रहणविषयचेष्टा—

प्रजा[१]पतिश्चरति गर्भे अन्तःअजायमानो बहुधा विजायते।
अजातो जातवद्विष्णुरनन्तो मतवत्तथा॥
मायया दर्शयत्यसज्जनानां मोहनाय च।

इति प्रमाणाद्बहुलयाशरीरं स्वमायेत्यर्थः। स्वतो देहाद्यभावे हरे सर्जनादिकं कथं युज्यत इति तत्राह। सृष्ट्वेति। स हरिरात्मना स्वरूपशक्त्येदं जगत्सृष्ट्वानुविश्यावतारैर्विहृत्यान्ते प्रलये संहृत्य चात्ममहिमोपरतः स्वमहिम्नि स्थित आस्ते अतः स्वमहिम्नैव सर्वं घटत इत्युक्तं भवति॥ ११॥

एवमपि मृगयुविषयत्वं हरेर्जननादिकमापादयतीत्यत्राह। मर्त्येनेति। यः कृष्णः मर्त्येन शरीरेण सह यमनीतलोकं यमेन नीतो लोकं समुद्दिश्य यः स तथा तं यमेन स्वलोकानीतमित्यर्थः गुरोः सान्दीपनेः सुतं द्रौणेः परमास्त्रदग्धं त्वाऽऽनयत् तथा यो बाणपुरेऽन्तकं रुद्रमपि जिग्ये "रुद्रो मानिशान्त," इति श्रुतेः यद्वा पारिजातहरणे अन्तकं यममपि जिग्ये इति अन्तकान्तकमिति पाठे यमस्याप्यन्तकं रुद्रमित्यर्थः। सोऽनीशो मन्येशरीरिणः श्रीकृष्ण ईशनतो सर्वेशानां रुद्रादीनामपि ईशत्वं तनोतीति ईशतनुस्तस्मिन्देहे मृगयोरनीश्वरः स्यात् किं न स्यादेवेत्यतोऽपि सामर्थ्यप्रकटनाय विप्रशापमनुस्मरन्निमित्तं एव स्वभक्तं व्याधशरीरान्तर्यामित्वेन शरधनुषा विद्ध इव तस्य स्वात्मानं प्रकाश्य तेन प्रसादितस्तस्मै स्वलोकं ददातीत्यर्थः॥ १२॥

तर्हि किमिति बलभद्रादीन् स्वलोकं नानैषीदिति तत्राह। तथापीति। यद्यपि अशेषस्थितिसम्भवाप्ययेषु अनन्यहेतुः स्वयमेव हेतुर्हरिरन्तर्यामिवर्तिना कृष्णाख्येन मृद्दण्डादिशक्त्यपेक्षावत् प्रकृत्यादिशक्त्यपेक्षितत्वेन कथं हेत्वन्तरं नास्तीत्यत उक्तम् अशेषशक्तिभृगिति तथापि बलभद्रादीनां वपुः प्रणेतुं नैच्छत भग-

१ ननु भूतदेहां दर्शयितुं प्रजापतिरिति श्रुतिः अजननादीहां दर्शयितुं अजायमान इति श्रुतिः अव्ययदेहां दर्शयितु- स्मृत्याद्युक्तमर्थं दर्शयति अजात इति।

तत्र स्म त्वरिता जग्मुः कृष्णविश्लेषविह्वलाः ।
असवः शेरते यत्र ज्ञातयो घ्नन्त आत्मनम् ॥ १७॥
देवकीरोहिणी चैव वसुदेवस्तथा सुतौ ।
कृष्णरामावपश्यन्तः शोकार्ता विजहुः स्मृतिम् ॥१८॥
प्राणांश्च विजहुस्तत्र भगवद्विरहातुराः ।
उपगुह्य पतींस्तात ! चितामारुरुहुः स्त्रियः ॥ १९ ॥
रामपत्न्यश्च तद्देहमुपगुह्याग्निमाविशन् ।
वसुदेवपत्न्यस्तद्गात्रं प्रद्युम्नादीन् हरेः स्नुषाः ।
कृष्णपत्न्योऽविशन्नग्निं रुक्मिण्याद्यास्तदात्मिकाः ॥ २० ॥
अर्जुनः प्रेयसः सख्युः कृष्णस्य विरहातुरः ।
आत्मानं सान्त्वयामास कृष्णगीतैः सदुक्तिभिः ॥ २१ ॥
बन्धूनां नष्टगोत्राणामर्जुनः सांपरायिकम् ।
हतानां कारयामास यथावदनुपूर्वशः ॥ २२ ॥
द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत्क्षणात् ।
वर्जयित्वा महाराज ! श्रीमद्भगवदालयम् ॥ २३ ॥
नित्यं सन्निहितस्तत्र भगवान् मधुसूदनः ।
स्मृत्याऽशेषाशुभहरं सर्वमङ्गलमङ्गलम् ॥ २४ ॥

भाषा टीका ।

जैसे कि आकाश में मेघ को छोड़ कर के जाती हुई बिजुली की गति को मनुष्य नहीं जान सकते हैं तैसे श्रीकृष्ण जी की गति को किसी देवतों ने नहीं जाना ॥ ९ ॥

वे ब्रह्म रुद्रादिक श्रीहरि की उस योग गति को देख कर विस्मित हो कर उस बात की प्रशंसा करते हुये अपने अपने लोकों को चले गये ॥ १० ॥

हे राजन् ! इन परम पुरुष भगवान् के जन्म की तथा अन्तर्धान की चेष्टा है सो केवल जैसे नट का चरित्र तैसे मनुष्यों के वास्ते एक आश्चर्य शक्ति से है जोकि आदि में इस जगत्को माया से सृज कर के फिर विहार कर के अन्त में संहार कर के अपने महिमा से निवृत्त हो कर रहते हैं ॥ ११ ॥

जो भगवान् यम लोक को ले गये मनुष्य शरीर वाले गुरु पुत्र को ले आये जो शरण रक्षक तुम्हारी माता के गर्भ में ब्रह्मास्त्र से तुम्हारी रक्षा करते भये जिन ने बाणासुर के युद्ध में काल के भी जीतने वाले महादेव जी को जीत लिया और जिनने मृगलुब्धक को भी देह सहित स्वर्ग मे भेज दिये वे क्या अपने शरीर के रक्षा करने में समर्थ नहीं रहे ॥ १२ ॥

तो भी सब संसार के उत्पत्ति स्थिति प्रलय के सब कामों के करने मे किसी की अपेक्षा नहीं करनेवाले भगवान् हैं क्यों की वे सर्व शक्ति धारी हैं ऐसे होने पर संसार में मर्त्य शरीर जो सब मनुष्यों के हैं उन में कुछ सार नहीं है इस बात के दिखाने के लिये अपनी स्वरूप गति को जनाने के लिये यहां पर प्रगट से अपने निजदेह को नहीं दिखाना चाहा ॥ १३ ॥

जो पुरुष प्रातःकाल में उठ कर इस लीला को श्रीकृष्ण का प्रयाण को नियम से कीर्तनकरैगा सो उत्तम गति को प्राप्त होगा ॥ १४ ॥

दारुक ने द्वारका में जा कर वसुदेव तथा उग्रसेन के आगे जो हाल प्रभास का सब चरणों में गिर कर कहा श्रीकृष्ण के वियोग से आंसुओं से उन के चरणों को भिगा दिया ॥ १५ ॥

हे राजन् ! सब वृष्णियों का अन्तर्ध्यान होना कह दिया इस बात को सुन कर द्वार के सब मनुष्य शोक से मूर्छित हो कर गिर पड़े ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कृष्णरामौ सुतावपश्यन्त ॥ १८—२०॥

स्त्रीबालवृद्धानादाय हतशेषान् धनञ्जयः ।
इन्द्रप्रस्थं समावेश्य वज्रं तत्राभ्यषेचयत् ॥ २५ ॥
श्रुत्वा सुहृद्वधं राजन्नर्जुनात्ते पितामहाः ।
त्वां तु वंशधरं कृत्वा जग्मुः सर्वे महापथम् ॥ २६ ॥
य एतद्देवदेवस्य विष्णोः कर्माणि जन्म च ।
कीर्तयेच्छ्रद्धया मर्त्यः सर्वपापैः प्रमुच्यते ॥ २७ ॥
इत्थं हरेर्भगवतो रुचिरावतारवीर्याणि बालचरितानि च शन्तमानि ।
अन्यत्र चेह च श्रुतानि गृणन्मनुष्यो भक्तिं परां परमहंसगतौ लभेत ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे यादवान्तर्धानं नाम
एकत्रिंशोऽध्यायः ॥ ३१ ॥
समाप्तोऽयमेकादशस्कन्धः ॥ ११ ॥

भाषा टीका ।

द्वार का को जब हरि ने त्याग किया तब क्षण मात्र में समुद्र ने सब द्वारिका को डुबा दिया है महाराज श्रीमान् भगवान् के मंदिर को छोड़ दिया ॥ २३ ॥

क्योंकि स्मरण करने से सब के पापों के हरने वाले सब मंगल करने वाले भगवान् जहां सन्निहित रहते हैं तिस से उन के स्थान को समुद्र ने छोड़ दिया है ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आदित आरभ्य श्रीकृष्णचरितकीर्तनस्य फलमाह । य एत-दिति द्वाभ्याम् ॥ २७ ॥
शंतमानि परममङ्गलानि परमहंसगतौ श्रीकृष्णे ॥ २८ ॥
एवमेकादशस्कन्धभावार्थस्य प्रदीपिका ।
स्वानन्दधाम्नमीतेन श्रीधरेण प्रकाशिता ॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनीटिप्पणी ।

वस्तुतस्तु हतशेषान् ज्ञानावशिष्टान् । तत्र स्त्रीबालवृद्धेषु ॥२५॥
सुहृदां च सान्त्वनं दधातीति सुहृद्वधं नित्यलीलाख्यानं श्रुत्वा तत्रैव गमनाय सत्वराः सन्तो महापथं तद्ध्यानोपयुक्तं ध्यानं जग्मुरिति वास्तवोऽर्थः वः सान्त्वने च घाते चेति मेदिनी ॥ २६ ॥

वास्तवार्थपोषकं फलमाह । य एतदिति द्वाभ्याम् ॥ २७ ॥
अन्यत्र परलोके इह च लोके परममङ्गलानीति योज्यम् ॥२८॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

परमहंसगतौ परमहंसानामाश्रये विषय इति शेषः ॥ २८ ॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धव्याख्याने
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्त्रीबालेति । स्त्रीरूपान् बालान् वृद्धांश्च जनान् हतशेषानपि प्रविष्टाश्चयोऽवशिष्टानादायेत्यर्थः । ननु स्त्रीबालान् वृद्धांश्च पुरुषानित्यर्थः । जनानित्यत्र यो मन्दः ! मुसलं कुलनाशनमिति कृत्स्नकुलनाशकत्वाभिधानात् पुंमात्रस्याशेषानवगमेः तत्र द्वारकायां वज्रं नाम यादवमभ्यषेचयत् स तु भगवत्संकल्पेनावशेषित इति भावः ॥ २५ ॥
श्रुत्वेति । त इति राजानं प्रति शुकोक्तिः पितामहाः युधिष्ठिरः वंशधरं वंशप्रवर्तकं कृत्वा महापथं स्वर्गतः ॥ २६ ॥
इममेकादशस्कन्धश्रवणार्थकीर्तनादिफलमाह । य इति द्वाभ्याम् । सर्वपापैर्भक्तियोगोत्पत्तिप्रतिबन्धकैः ॥ २७ ॥
इत्थमिति । इत्थं भगवतो यो रुचिरोऽवतारः तस्य वीर्याणि वीर्यप्रकाशकानि बाल्यचरितानि शोभनानि चेति सर्वाण्युपासनोपयोगकैर्यो

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यथौवमवतारानि शतमानि परममङ्गलावहान्यन्यत्र पुराणान्तरेषु इह चास्मिन्नपि श्रीभागवतपुराणे श्रुतानि गृणान् कीर्तयन् परमहंसानां गतौ श्रवात्युपायभूतं भगवति परां भक्तिं लभेत प्राप्नुयादित्यर्थः ॥ २८ ॥

इति श्रीवत्सान्वयपयः पारावारराकासुधाकरस्य सर्वविद्यानिधेः श्रीशैलगुरोस्तनयेन तच्चरणपरिचर्याप्रसन्नलब्धस्वसर्वागतश्रीमद्भागवततात्पर्येण श्रीवेङ्कटार्यदासेन श्रीवीरराघवविदुषा विलिखितायां श्रीमद्भागवतचन्द्रचन्द्रिकायामेकादशस्कन्धव्याख्यायामेकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अन्यत्र ग्रन्थान्तरे इहास्मिन् ग्रन्थे परमहंसगतौ परमहंसानामाश्रये हरौ शरणे वा ॥ २८ ॥

यत्तत्त्वं निगमोऽपि नक्रमगमं शास्त्रं स्तुवल्लीलितं  
ब्रह्माद्याः किमुतान्यशक्तविधुरा निर्वाच्यवत्ता अपि ॥  
अत्यन्तं असांसगजन्ममिलितेत्वां सदेकं परं  
तद्धामाचमनतापत्रपरिहृतेर्नन्दाद्या सम्मतं परम् ॥  
एकादशस्कन्धगता पदरत्नावलीरियम् ।  
अभिप्रीत्यै मुकुन्दस्य वनमालेव राजताम् ॥

इति श्रीमन्महेन्द्रतीर्थपूज्यपादशिष्यविजयध्वजतीर्थभट्टारकस्य कृतौ श्रीमद्भागवतटीकायां पदरत्नावल्यामेकादशस्कन्धे एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सर्वस्य श्रीकृष्णचरितस्य फलं परमभक्तिपूर्विका तत्प्राप्तिरेवेत्याह । इत्थमिति । परमहंसगतावीति तेषामपि तद्भक्तानां स एव गतिः किमुत मूल एव तद्भक्तानामिति भावः ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आदित आरभ्य श्रीकृष्णचरितकीर्त्तनादेः फलमाह । य इति । द्वाभ्याम् ॥ २७ ॥

बालचरितानि आषोडशाब्द बालः स्यादिति प्रसिद्धेः कैशोरचरितानि ज्योतिःशास्त्रमितिरित्यर्थः । अन्यत्र पुराणादिषु इह श्रीभागवते च श्रुतानि परां परमप्रेष्ठाम् ॥ २८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।  
एकादशैकत्रिंशोऽयं सङ्गतः सङ्गतः सताम् ॥ ३१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीकृष्णचरितकीर्तनस्य फलमाह । य इति द्वाभ्याम् ॥ २७ ॥

मङ्गलानि मङ्गलावहानि बालचरितानि चकारात्पौगण्डादिचरितानि गृणन् कीर्तयन् परमहंसानां हंसोपाधिविवेककर्तॄणां संसारतो निरक्तानां श्रीकृष्णोऽनुरक्तानामित्यर्थः । गतवत् इतिगतिः प्राप्यरूपः मुक्तौ प्राप्यरूपः श्रीकृष्णः तस्मिन् भक्तिं लभेत प्राप्नुयादित्यर्थः ॥ २८ ॥

श्रीकृष्णं राधिकां सत्यां रुक्मिणीं श्रीहरेः प्रियाम् ।  
वन्दे तद्दासदासाय गुरुं गुरुपरंपराम् ॥  
शुकेन विदुषा स्वल्पः कृतः श्रीकृष्णप्रीतये ।  
एकादशे प्रदीपोऽयं पूर्वाचार्यमतानुगः ॥

इति श्रीमद्भागवतसिद्धान्तप्रदीपे श्रीमच्छुकदेवाचार्यविनिर्मिते चरणार्चनकशुकसुधीविरचिते एकादशस्कन्धस्यैकत्रिंशाध्यायार्थप्रकाशः ॥ ३१ ॥

---

भाषा टीका ।

अंतर्धान होने में से बाकी जो बालक वृद्ध स्त्री रहे तिन को लेकर अर्जुन जी इन्द्रप्रस्थ हस्तिनापुर को चलेगये वहां पर वज्रनाभ का राज्याभिषेक करदिया ॥ २४ ॥

हे राजन् परीक्षित जी तुम्हारे पितामह युधिष्ठिरादिकों ने जब अर्जुन से सब बन्धुओं का अंतर्धान होना सुना तब तुम को वंशका राजा बनाकर उत्तराखण्ड बदरीनारायण से महापथ को चले गये ॥ २६ ॥

देवों के देव भगवान् श्रीकृष्ण के दशमस्कन्ध में इहां तक जन्म कर्म रूप चरितों को जो मनुष्य श्रद्धा से कीर्तन करेगा वह सब पापों से छूटजावेगा ॥ २७ ॥

इस प्रकार से कृष्ण भगवान् के जो मङ्गलकारक बालचरित तथा अवतार के पराक्रम युक्त सब चरित्र जो कि इहां भागवत में कहेगये या अन्यत्र कहेगये सुने गये इन को जो मनुष्य पठन करेगा वह पुरुष परमहंसों की गतिदायक जो श्रीकृष्णचन्द्र तिन के चरण में परमभक्ति को प्राप्त होजावेगा ॥ २८ ॥

इति श्री भागवत एकादश स्कन्ध एकतीस में अध्याय की भाषा टीका समाप्त ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे एकत्रिंशोऽध्यायः ॥ ३१ ॥

अष्टटीका समलङ्कृते श्रीमद्भागवते एकादशस्कन्धः समाप्तिमगात् ।

# विज्ञापनम् ।

## परपक्षगिरिवज्रः ।

अयि विचक्षणाः! मद्यातिप्रहर्षसमयो वरीवर्त्ति यदहं तत्रभवद्भ्यो भवद्भ्योऽद्भुतग्रन्थं निवेदयामि यद्ग्रन्थान्वेषणे सहस्राणि विद्वांसो ऽकार्षुः स्वातकास्स्वातिबिन्दुमिव, तथा ऽपि तद्ग्रन्थदर्शनमपि दुर्लभमभूत् तत्पाठनविचारणादि तु दूरापास्तमेवासीत् तमेव ग्रन्थमत्या-नन्देन समस्तभारतवासिनां श्रीमतां सेवायां निवेदयामि यं ग्रन्थं 'शारीरकहार्दसंचयनामकं' कथयन्ति, केचित्तु परपक्षगिरिवज्राख्यम् अभ्यासगिरिवज्राख्यमपि कुर्वन्ति, एष ग्रन्थो वेदान्तिनां शिरोधार्यो ऽस्ति, किञ्च सर्वमनीषिणामेतत्सुविदितमस्ति, निगमकल्पतरो रस-मयफलं वेदान्तशास्त्रमेवास्ति, यद्यपि वेदान्तशास्त्रस्य स्वस्वसिद्धान्तानामनुकूला अनेके ग्रन्था मुद्रितास्सन्ति, तथापीदृशः को ऽपि ग्रन्थोऽद्यावधि न मुद्रितो ऽस्ति, यद्ग्रन्थावलोकनेनैव सर्वं सिद्धान्तज्ञानं भवति, एतस्मिन् ग्रन्थेऽद्भुतचमत्कारोऽस्ति एतदवलोकनेनैव सर्वशास्त्रसिद्धान्तज्ञानपूर्वकमसत्यासत्यविचारो भवति, अन्यवेदान्तग्रन्थस्यावलोकनावश्यकता ऽपि न भवति, सर्वेषां विपश्चितामेतत्-ग्रन्थावलोकनेन पूर्णानन्दावाप्तिर्भवति, एष च ग्रन्थो विदुषां पठनपाठनादिषु प्रचारणीयो ऽस्ति, किम्बहुलेखनेनैतद्ग्रन्थावलोकयितॄणां ब्रह्मानन्दास्वादसमुद्रस्तरङ्गित इव भवति, एतद्ग्रन्थावलोकनेन विद्वन्मण्डल्यां वाग्विलासे सङ्कोचः कदा ऽपि न भवति, एष च ग्रन्थो निम्नलिखितप्रकरणैर्विभूषितो ऽस्ति, एतस्मिन् ग्रन्थे चत्वारो ऽध्यायास्सन्ति, तत्र प्रथमे ऽध्याये विषयसम्बन्धगिरिनिपात-प्रयोजनाधि-कारिगिरिनिपात-अभ्यासगिर्यधिष्ठानगिरिनिपातादीनि महाविस्तीर्णानि त्रयोविंशतिः प्रकरणानि सन्ति. द्वितीये चाध्याये जिज्ञास्यो-पपत्तिगिरिनिपातादीनि दश प्रकरणानि सन्ति तृतीयेऽध्याये साङ्कर्यगिरिनिपातादीनि दश प्रकरणानि सन्ति चतुर्थेऽध्याये जीवन्मुक्ति गिरिनिपातो ऽस्ति, एवं चत्वारिंशत्प्रकरणैर्विभूषितो ऽष्टसहस्रश्लोकसंख्यापरिमितो ग्रन्थोऽस्तीति विज्ञेयं मनीषिभिरिति शम् ॥ मूल्यम् रौप्यकत्रयम् ३)

पूज्यपादश्रीविश्वनाथचक्रवर्तिविरचितम्

## श्रीकृष्णभावनामृतम् ।

श्रीकृष्णभावनामृतम् श्रीकृष्णचन्द्राष्टकालिकसेवानिरूपणपरम् क्रीडानिकुञ्जस्थ किङ्करीशुकशारिकादीनां परस्परसेवानिरूपण-परःसुरसपद्यात्मकं महाकाव्यम् तदनुगुणामिताक्षरसंस्कृतटीकया समलङ्कृतम्, मूल्यम् रौप्यकत्रयम् ३)

श्रीमद्भागवत सम्बन्धीय नियमावली ।

इतने बड़े परिश्रम और अध्यवसाय पर भी सर्व साधारण के सुलभ संग्रह के अर्थ पूर्ण ग्रंथ का मूल्य केवल ५०) रुपया अग्रिम रखा गया है राजा महाराजा और सम्मान्य मनुष्यों के सन्मान रक्षाके लिये उनसे केवल १००) रु० मात्र लिया जायगा डाक-महसूल २४) रु० अलग पड़ेगा यह भागवत दशटीकोपेत है ।

असमर्थ ग्राहकों से चार किस्तों में रुपया लिया जायगा—प्रथम किस्त १२) रु० पञ्चमस्कन्ध तक, द्वितीय किस्त १२) षष्ठस्कन्ध तक, तृतीय किस्त १२) सप्तमस्कन्ध तक, चतुर्थ किस्त १४) दशमस्कन्ध तक और डाक महसूल २४) द्वादशस्कन्ध तक लियाजायगा।

## श्रीजगन्नाथवल्लभनाटकम् ।

इह खलु जगति विद्यास्थानेष्वनेकेषु पठनीयेषु सत्स्वपि शास्त्रान्तराणां सहिष्णुवेद्यत्वेन सूक्ष्ममतिवेद्यत्वेन च नेष्वल्पजनादरणीयेषु जातेषु इदानीं स्थूलमतिवेद्यत्वेन सुकुमारवेद्यत्वेन च काव्यनाटकादीन्येव मनुष्याणां समययापनयोग्यानि तानि च भगवद्विषयकाणि चेद्भुक्ति-मुक्तिप्रदानीति विचार्येदानीं जगन्नाथवल्लभनाटकं सर्वजनसौकर्याय प्रकाशितम् इदं च नाटकं श्रीराधाकृष्णरहस्यक्रीडा विषयं प्रतापरुद्र-नृपतितोषार्थं रामानन्दराय कविना निर्मितम्. अत्र च पञ्चाङ्काः सन्ति तत्र प्रथमेऽङ्के नटनटीसूत्रधाराणां संवादपूर्वकप्रस्तावनानन्तरं श्री-राधाकृष्णमदनिका विदूषकाणां वृत्तान्तैः पूर्वरागनिरूपणम् १ द्वितीये च भावपरीक्षादिनिरूपणम् २ तृतीये भावप्रकाशादिनिरूपणम् ३ चतुर्थे श्रीराधिकाया अभिसरणक्रियानिरूपणम् ४ पञ्चमे श्रीराधाकृष्णयोः सङ्गमनिरूपणम् अस्मिन् ग्रन्थे मध्ये मध्ये गीतगोविन्दवद्राग-पद्यान्यपि विद्यन्ते मूल्यम् द्वादश आणकाः ॥।)

## वेदान्तसारः ।

भो भो वेदवेदान्तसकलशास्त्रपारावारपारङ्गताः !

विदितमेव भवतां श्रीमद्वैयासिकसूत्रार्थयाथात्म्यप्रतिपादको बालानामपि वेदान्तार्थसंशयनिवारणाकरो वेदान्तसारो नाम ग्रन्थ-रत्नम्. स चेदानीं सुललितैर्नागराक्षरैरपूर्वतया मुद्रितस्सन् जाज्वलीति. अतस्सर्वेऽप्येतद्ग्रन्थरत्नं केवलेन सार्द्धरूपकमूल्येन प्रहीत्वा मनोनयनानन्दं प्राप्नुवन्तु भवन्तः। अस्य मू० १॥)

**श्रीश्रीनिम्बार्कदर्शनम्**--भो भोः परिनिष्ठितविद्वांसः! अस्मन्मुद्रणालये मद्यावधि काप्यमुद्रितम् भाष्यत्रयोपेतम् 'श्रीमन्निम्बार्क-दर्शनम्' समग्रं सम्मुद्रितं तत्त्वयतां महणोत्सुकैः पञ्चमुद्रा-मूल्येन, डाकव्ययाधिकेन लभ्येत इति विदन्तु मू० ५)

श्रीमद्भागवत कार्यालय—श्रीदेवकीनन्दन प्रेस
श्रीवृन्दावन—जिला मथुरा । } विद्वज्जन कृपाकाङ्क्षी—श्रीनित्यस्वरूप ब्रह्मचारी ।

समस्त स्वत्व रेजिस्टरी करके स्वाधीन रखा गया है।



श्री १०८ श्रीराधारमणो जयति।

द्वादशस्कन्धः

महर्षिप्रवर श्रीकृष्णद्वैपायनप्रणीतम्

# श्रीमद्भागवतम्।

---

श्रीश्रीपादश्रीधरस्वामिकृतभावार्थदीपिका, श्रीमद्विशिष्टाद्वैतसिद्धान्तनिर्वाहकाचार्यप्रवर श्रीसुदर्शन-सूरिकृतशुकपक्षीयसमाख्याटीका, तदनुगामिश्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका, श्रीमन्मध्वसिद्धान्तधुरन्धर श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली, श्रीमद्विष्णुस्वामिसिद्धान्त-निर्वाहकाचार्यप्रवरश्रीमद्वल्लभाचार्य्यकृतसुबोधिनी, श्रीगौडीयवैष्णवाचार्य्यप्रवरश्रीमज्जीव-गोस्वामिकृतक्रमसन्दर्भाख्यटीका, तदनुगामिश्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थ-दर्शिनी, श्रीनिम्बार्कसम्प्रदायि—श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपाख्यटीका इत्यष्टभिर्व्याख्याभिर्भाषानुवादेन च समलङ्कृतम्।

---

तदिदम्

परमहंसपरिव्राजकाचार्य्यपूज्यपादश्रीमत्स्वामिप्रकाशानन्दसरस्वतीप्रवरशिष्येण,

**श्रीनित्यस्वरूपब्रह्मचारिणा**

सम्पादितम्।

---

वङ्गदेशान्तर्गत ताडास भूपति श्रीराधाविनोद प्रेम सेवा परायण राजर्षिराय-

**"श्रीवनमालिराय बहादुरस्य"**

सम्पूर्णसाहाय्येन

प्रकाशितञ्च।

तच

श्रीवृन्दावन श्रीरङ्गमन्दिरस्थ पं० भागवताचार्य द्वारा

---

तथा

काञ्चीमण्डलान्तर्वर्ति 'कान्दूर' प० श्रीरङ्गाचार्यद्वारा च संशोध्य

**श्रीवृन्दावनधामनि**

स्वकीये "श्रीदेवकीनन्दन" यन्त्रालये

मुद्रापितम्।

सम्बत् १९६४

# श्रीमद्भागवतम् ।



## द्वादशस्कन्धः ।

### प्रथमोऽध्यायः ।

ॐ नमो भगवते वासुदेवाय ।

राजोवाच ।

स्वधामानुगते कृष्णे यदुवंशविभूषणे ।
कस्य वंशोऽभवत्पृथ्व्यामेतदाचक्ष्व मे मुने ! ॥ १ ॥

श्रीशुक उवाच ।

योऽन्त्यः पुरञ्जयो नाम भविष्यो बारहद्रथः ।
तस्यामात्यस्तु शुनको हत्वा स्वामिनमात्मजम् ॥ २ ॥
प्रद्योतसञ्ज्ञं राजानं कर्ता यत्पालकः सुतः ।
विशाखयूपस्तत्पुत्रो भविता राजकस्ततः ॥ ३ ॥
नन्दिवर्द्धनस्तत्पुत्रः पञ्च प्रद्योतना इमे ।
अष्टत्रिंशोत्तरशतं भोक्ष्यन्ति पृथिवीं नृपाः ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रीगणेशायनमः ।

श्रीगुरुं परमानन्दं वन्दे स्वानन्दविग्रहम् ।
यस्य सन्निधिमात्रेण चिदानन्दायते वपुः ॥
जयन्ति श्रीपरानन्दकृपापाङ्गलवद्दृशः ।
या नित्यमनुवर्तन्ते सम्पदो विगताशयः ॥
उक्तश्चैकादशाध्यायैर्द्वादशे त्वाश्रयः सतः ।
अधिष्ठानावधित्वेऽपामाश्रयश्चेश्वरः सतः ॥
उक्तो लयावधित्वेन प्राकृतात्यन्तिके लये ।
अधिष्ठानतया चोक्तो महापुरुषवर्णने ॥
तत्रादौ षड्भिरध्यायैः शुकः प्राह परीक्षिते ।
शेषैस्तत्राखिलान्याह सूतः पृष्टोऽथ सत्रिभिः ॥
स्वाश्रयाश्रयणे कार्यो न विलम्बो मनीषिणा ।
इत्येतत्कालवैषम्यं चतुर्भिस्तावदुक्तवान् ॥
तत्र तु प्रथमे भाविमागधान्वयभूमिपान् ।
कलिप्रभावतः प्राह सङ्कराविमलानिमान् ॥
एतद्भूत सोमवंशे मुकुन्दः स्वैरक्रीडां वर्णितोऽयं स एव ।
वंशो भावी नयते कृष्णभक्तिं मुक्त्या मुक्तं यस्य नास्तीति वक्तुम् ॥

तदेवं वैवस्वतमनुवंशे सोमवंशप्रस्तावेन श्रीकृष्णावतारचरितानि सप्रपञ्चमनुवर्णितानि; अथेदानीं भावी सोमवंशः कलौ विजातीयसङ्कराविमर्शीमसौ वैराग्यद्वारा श्रीकृष्णैकभक्तिनिगमनायानुवर्ण्यते तत्र तु सोमवंशशाखासु चिरकालानुवर्तितया मागधवंशोऽनुक्रम्यते—तत्र पूर्ववंशे उपरिचरवसुसुतस्य बृहद्रथस्तस्य जरासन्धस्तस्य सहदेवः पुत्रोऽभूदित्युक्तं नवमस्कन्धे, तत्रैव सहदेवान्मार्जारिस्ततः श्रुतश्रवा इत्यादयो रिपुंजयान्ता विंशतिर्भाविनो राजानो निरूपिताः तत्र राजा पृच्छति—स्वधामेति ॥ १ ॥

